# ऋग्वेदसंहिता

61.

श्रीकपालिशास्त्रिविरचितवेदगुप्तार्थ-
सिद्धाञ्जनाख्यभाष्यसमेता






प्रथमाष्टकम्
द्वितीयो भागः
(३३-१२१सूक्तानि)

# RIGVEDA SAMHITA

WITH THE COMMENTARY ENTITLED

## SIDDHĀNJANA

BY

SRI T. V. KAPALI SASTRY



**FIRST ASHTAKA**

VOL. I—PART 2

(33-121 SUKTAS)

अथ प्रथमाष्टके तृतीयोऽध्यायः प्रारभ्यते। प्रथममण्डले सप्तमेऽनुवाके पञ्च सूक्तानि। तत्र एतायामेति तृतीयं पञ्चदशर्चं सूक्तम्। आङ्गिरसो हिरण्यस्तूप ऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता॥

दए उद्द१ · सूक्त ३३

तत्र प्रथमामृचमाह—

एतायामोप गव्यन्त इन्द्रमस्माकं सु प्रमतिं वावृधाति।
अनामृणः कुविदादस्य रायो गवां केतं परमावर्जते नः॥१॥

आ इत अयाम उप गव्यन्तः इन्द्रम् अस्माकम् सु प्रऽमतिम् ववृधाति अनामृणः कुवित् आत् अस्य रायः गवाम् केतम् परम् आऽवर्जते नः॥

दिव्यज्ञानरश्मिद्योतकगोलिप्सून् समानमार्गप्रवृत्तान् सखीन् संबोध्य प्राह ऋषिः। गव्यन्तः गाः प्राप्तुमिच्छन्तः हे सखायः! यूयं एत आगच्छत। इन्द्रम् गवां प्राप्तिं साधयितुं समर्थं उपायाम प्राप्नुवाम। स इन्द्रः अस्माकम् गोलाभोद्यमिनां प्रमतिम् गोप्राप्तौ निमित्ते प्रकृष्टां बुद्धिं सु ववृधाति सुष्ठु वर्धयति। आत् अनन्तरं अनामृणः हिंसकरहितः स इन्द्रः गवाम् गोसमूहसंबन्धिनः गोरूपस्येत्यर्थः, अस्य प्रेप्सितस्य रायः धनस्य परम् उत्कृष्टं केतम् ज्ञानं नः अस्माकं कुवित् अधिकं आवर्जते प्रापयति॥ इत—इण् गतौ, लोट्। गव्यन्तः—गा आत्मन इच्छन्तः, गोशब्दात् कर्मणः क्यच्। ववृधाति—वृधु वृद्धौ लेटि आडागमः, संहितायां अभ्यासस्य दीर्घः। अनामृणः—मृण हिंसायाम्, आमृणन्तीति आमृणाः, न सन्त्यामृणाः अस्य। कुवित्—बहुनाम॥ देवाः परस्परमेवं कथयन्तीति सायणीयम्। ऋषेरेवेदं 'एत' इत्यादिवाक्यमिति चेत्, द्वितीयर्चि 'उपेत् पतामि' इति ऋष्युक्तिः संगता भवति॥ ऋषिरिन्द्रस्य महिमानं वर्णयति सूक्तद्वयेन। तथा 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इत्युपक्रान्तवान्। अस्यामृचि इदं प्राह ऋषिः—या गावः ऋतमरीचयः अस्माकं धनभूताः पणिभिरसुरैर्वृत्रबन्धुभिः अनृजुव्यवहारिभिरपहृत्य पर्वतगुहाशब्दबोधिते जडगते तमसि निक्षिप्ताः, तासां लाभाय परं ज्ञानं आवश्यकं भवति। तच्च दातुं प्रभुरिन्द्रः, सखायः! एत, तमुपास्महे—इति॥

द्वितीयामृचमाह—

उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि।
इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥२॥

उप इत् अहम् धनऽदाम् अप्रतिऽइतम् जुष्टाम् न श्येनः वसतिम् पतामि इन्द्रम् नमस्यन् उपऽमेभिः अर्कैः यः स्तोतृऽभ्यः हव्यः अस्ति यामन् ॥

अहम् हिरण्यस्तूपोऽहं उपासकः धनदाम् धनं उक्तलक्षणं गोरूपं ददातीति धनदाः, तं अप्रतीतम् अप्रतिगतं शत्रुभिः अप्रतिरुद्धं अतिरस्कृतमिति यावत् इन्द्रम् देवराजं उपेत् पतामि उपगम्यैव श्रयामि वेगेन, पक्षिवत् क्षिप्रं डयनं द्योतयति 'पतामि' इति क्रिया। तत्र दृष्टान्तमाह—जुष्टाम् प्रियसेवितां वसतिम् नीडात्मिकां वासभुवं श्येनो न वेगवान् पक्षी इव। पक्षी यथा सुखं वासस्थानं नीडं प्रीत्या श्रयते, तथा अहं इन्द्रं प्राप्नोमि, स एव मम प्रियवासभूः। किं कुर्वन्? नमस्यन् नमस्कुर्वन् शरणं गच्छन्नित्यर्थः। तादृशनमस्कृतेः साधनं स्तोत्रमित्याह। उपमेभिः उपमानस्थानीयैः अर्कैः मन्त्रात्मकैः दीप्तैः स्तोत्रैः। क इन्द्रः एवमुपगम्यते? आह। यः यामन् यामनि प्रयाणे, प्राप्तव्यनिमित्तं गमने प्रवर्तमाने स्तोतृभ्यः स्तोतृणामुपासकानां अनुग्रहाय हव्यः अस्ति आह्वातव्यो भवति। 'यामन्' शत्रुभिः सह युद्धे इति सायणीयम्। तर्हि ते शत्रवः असुराः, तेजोबलाद्यपहारिण इति ग्राह्यम्। यामन्—या प्रापणे, मनिन् ॥

तृतीयामृचमाह—

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥३॥

नि सर्वऽसेनः इषुऽधीन् असक्त सम् अर्यः गाः अजति यस्य वष्टि चोष्कूयमाणः इन्द्र भूरि वामम् मा पणिः भूः अस्मत् अधि प्रऽवृद्ध ॥

सर्वसेनः सर्वा सेना यस्य स सम्पूर्णसैन्ययुक्तः सेनापतिः इषुधीन् इषवो बाणा एषु धीयन्ते, तान् निषङ्गान् न्यषक्त पृष्ठभागे संयोजितवान्। वीरश्रेष्ठ इन्द्रो युद्धाय सन्नद्धो भवतीत्युक्तम्। तथा सन्नाहे सत्येव, सः अर्यः स्वामी गाः पणिभिरपहृतं गोरूपं धनं समजति सम्यक् प्रापयति तं यजमानं उपासकं ऋषिं वा। आवश्यकोऽयमध्याहारः उत्तरत्र यस्येति श्रवणात्। यस्य भक्तस्य गोधनप्राप्तिं वष्टि कामयते तं गाः समजति इति संबन्धयितव्यः। अथ इन्द्रं संबोधयन्नाह। अस्मदधि अस्मासु प्रवृद्ध प्रकर्षेण वृद्धिं प्राप्त, हे इन्द्र, भूरि प्रभूतं वामम् वननीयं गोधनं चोष्कूयमाणः ददानः त्वं पणिः व्यवहारी वणिगिवेत्यर्थः मा भूः सरल उदारो भवेत्यर्थः। अस्मासु रहोयागरतेषु प्रवृद्धत्वात् तवोचितमौदार्यम्॥ इषुधीन्—संहितायां नकारस्य रुत्वम्। असक्त—षच समवाये, छन्दसि शपो लुक्। अजति—अज गतिक्षेपणयोः, अत्र अन्तर्भावितण्यर्थः। वष्टि—वश कान्तौ। चोष्कूयमाणः—स्कुञ् आवरणे, अप्रतिष्कुत इत्यत्र व्याख्यातम्, अत्र दानार्थः, यथा "इन्द्र चोष्कूयसे वसु" (८मं.६सू.४१ऋ.)॥

See Surya Chan...

चतुर्थीमृचमाह—

वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र।
धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः॥४॥
वधीः हि दस्युम् धनिनम् घनेन एकः चरन् उपऽशाकेभिः इन्द्र
धनोः अधि विषुणक् ते वि आयन् अयज्वानः सनकाः प्रऽइतिम् ईयुः॥

हे इन्द्र, त्वं धनिनम् बहुधनं दस्युम् चोरं वृत्रं घनेन दृढेन वज्रेण वधीर्हि हतवान् खलु। कीदृशस्त्वम्? उपशाकेभिः समीपवर्तिभिः शक्तियुक्तैः सहितः एकः अद्वितीयः चरन् शत्रुमध्ये सञ्चरन् "वधीः" इति संबन्धः। अथ किं वृत्तम्? ते तव इन्द्रस्य धनोः धनुषः अधि उपरि विषुणक् विष्वक् सर्वतः अयज्वानः यज्ञविरोधिनः सनकाः एतन्नामकाः वृत्रानुचराः व्यायन् विविधमागताः, आगत्य च प्रेतिम् मृतिं ईयुः प्रापुः॥ वधीः—हन्तेर्लुङि वधादेशः। उपशाकेभिः—उपशक्तं कुर्वन्तीति उपशाकाः, शक्लृ शक्तौ। विषुणक्—विषुपूर्वस्य अञ्चतेर्नुडागमः। सनकाः—अवयवार्थः

संदिग्धः। सायणस्तु 'सनन्ति ददतीति सनाः दातारः तान् कायन्ति शब्दयन्तीति सनकाः' इति॥

अस्यामृचि वृत्रो धनीत्युक्तम्। तस्य धनस्य स्वरूपं ब्राह्मणान्येवमाहुः—वृत्रस्यान्तः सर्वे देवाः सर्वाश्च विद्याः सर्वाणि हवींषि चासन्निति। प्रभूते तमःशरीरे सर्वावरके वृत्रे ज्ञानबलैश्वर्यादितिरस्करणप्रतिरोधबन्धनकरे असुरे सर्वं ज्योतिरादिकं गूढं सुप्तप्रायं भवति, तत्प्रणाशे अन्तर्लीनानि नष्टप्रायाणि तेजोबलादीनि निर्गतानि विकासमाप्नुवन्तीति गूढार्थ-सिद्धान्तसमुन्मेषोऽत्रावधेयः॥

पञ्चमीमृचमाह—

परा॑ चि॒च्छीर्षा॑ ववृ॒जुस्त इ॒न्द्राय॑ज्वानो॒ यज्व॑भि॒ः स्पर्ध॑मानाः।
प्र यद्दि॒वो ह॑रिवः स्थातरुग्र॒ निर॑व्र॒ताँ अ॑धमो॒ रोद॑स्योः॥५॥

परा॑ चि॒त् शी॒र्षा॑ व॒वृ॒जुः ते इ॒न्द्र॒ अय॑ज्वानः यज्व॑ऽभिः स्पर्ध॑मानाः
प्र यत् दि॒वः ह॒रि॒ऽव॒ः स्था॒त॒ः उ॒ग्र॒ निः अ॒व्र॒तान् अ॒ध॒म॒ः रोद॑स्योः॥

हे इन्द्र, हरिवः हरिनामक-अश्वयुक्त, स्थातः स्थितिमन्, तव धर्षको नास्ति तस्मात् स्थिरोसीत्यर्थः, उग्र शूर, यत् यदा त्वं दिवः अन्तरिक्षात् रोदस्योः द्यावापृथिव्योः सकाशात्, त्रैलोक्यादित्यर्थः अव्रतान् व्रतरहितान् धर्म्यकर्मशून्यान् वृत्रानुचरान् निष्प्राधमः निःशेषेण त्वन्मुखवायुना धूतान् अकरोः। तदा यज्वभिः यजनशीलैः पुण्यपुरुषैः सह स्पर्धमानाः संघर्षं कुर्वाणाः अयज्वानः यागरहिताः यज्ञविरोधिनः ते वृत्रसंबन्धिनः शीर्षा शीर्षाणि, शिरांसि पराचित् पराञ्चि कृत्वा, पराङ्मुखा भूत्वा ववृजुः जग्मुः, पलायिता इत्यर्थः॥ शीर्षा—शेर्लोपः, छन्दसि। ववृजुः—वृजी वर्जने, किंत्वात् लिटि गुणाभावः। अधमः—ध्मा शब्दाग्निसंयोगयोः, लङ्॥

इति प्रथमस्य तृतीये प्रथमो वर्गः.

षष्ठीमृचमाह—

अयु॑युत्सन्ननव॒द्यस्य॒ सेना॒मया॑तयन्त क्षि॒तयो॒ नव॑ग्वाः।
वृ॒षा॒युधो॒ न वध्र॑यो॒ निर॑ष्टाः प्र॒वद्भि॒रिन्द्रा॑च्चि॒तय॑न्त आयन्॥६॥

अयुयुत्सन् अनवद्यस्य सेनाम् अयातयन्त क्षितयः नवऽग्वाः वृषऽयुधः न वध्रयः निःऽअष्टाः प्रवत्ऽभिः इन्द्रात् चितयन्तः आयन् ॥

अनवद्यस्य निर्दोषस्येन्द्रस्य सेनां सैन्यं प्रति अयुयुत्सन् योद्धुमैच्छन् वृत्रबान्धवा इति शेषः। तथा तेषां युद्धेच्छामात्रे सति, न तु युद्धे प्रवृत्ते, नवग्वाः एतन्नामकाः अङ्गिरसः क्षितयः मनुष्याः, इन्द्रं अयातयन्त प्रयत्नवन्तमकुर्वन् प्रोत्साहितवन्त इत्यर्थः। तदा इन्द्रे युद्धाय प्रोत्साहिते सन्नद्ध एव, तेन निरष्टाः निराकृता वृत्रानुचराः इन्द्रात् इन्द्रस्य स्थानात् दूरे प्रवद्भिः प्रवणैर्मार्गैः चितयन्तः स्वीयामशक्तिं ज्ञापयन्तः आयन् गतवन्तः पलायिता इत्यर्थः। के इव? वृषयुधः वृष्णा सेचनसमर्थेन पुंस्त्वयुक्तेन शूरेण सह युद्धं कुर्वन्तः वध्रयो न षण्डा इव। प्रबलेनेन्द्रेण दूरीकृता दुर्बला वृत्रबान्धवाः पलायिता इत्यर्थः॥

अयुयुत्सन्—युध संप्रहारे, सनि व्यत्ययेन परस्मैपदम्, अयातयन्त—यती प्रयत्ने, हेतुमण्णिचि, लङ्। नवग्वाः—'नवभिर्मासैर्गच्छन्तीति नवग्वाः गमेरौणादिको ड्वप्रत्ययः, यद्वा क्विप्' इत्यादिप्रक्रियामभिमन्यते सायणः। नवग्वाः दशग्वाश्च अङ्गिरसः पूर्वे पितरः वलविजये वृत्रतमोभेदने इन्द्रसाहाय्यं कुर्वन्तो गाः अविन्दन्निति बहुधा वेदेषु प्रसिद्धौ सत्यां, नवभिः रश्मिपर्यायगोभिर्युक्ता नवग्वाः, तथा दशग्वाश्चेति वक्तव्यम्। वृषायुधः—संहितायां षकारस्य दीर्घः। निर्—अष्टाः—अशू व्याप्तौ, भावे निष्ठा। प्रवद्भिः—प्रपूर्वात् वनतेः क्विप्। चितयन्तः—चिती संज्ञाने अस्मात् ण्यन्तात् शतृ, गुणाभावः छान्दसः॥

सप्तमीमृचमाह—

त्वमेतान्रुदतो जक्षतश्चायोधयो रजस इन्द्र पारे।
अवादहो दिव आ दस्युमुच्चा प्र सुन्वतः स्तुवतः शंसमावः ॥७॥

त्वम् एतान् रुदतः जक्षतः च अयोधयः रजसः इन्द्र पारे अव अदहः दिवः आ दस्युम् उच्चा प्र सुन्वतः स्तुवतः शंसम् आवः ॥

हे इन्द्र, त्वम् रुदतः विलपतः जक्षतः च हसतश्च एतान् वृत्रसंबन्धिनः रोदनं कुर्वतः हसनं कुर्वतो वा द्विधापि वर्तमानान् रजसः अन्तरिक्षस्य पारे दविष्ठे परभागे अयोधयः युद्धेन हतवानसि। दस्युम् वृत्रं उच्चा उच्चैः दिवः आ द्युलोकादानीय, (त्रैलोक्यमेवाक्रान्तं

वृत्रेण तत्र उच्चैः द्यौरप्याक्रान्ता तस्मात् तत आनीतवानित्युक्तम्) अवादहः दग्धवानसि। ततः परं सुन्वतः सोममभिषुण्वतः स्तुवतः शंसम् स्तोत्रं स्तुवतः स्तुतिं कुर्वतः, यजमानान् स्तोतॄन् प्रावः प्रकर्षेण रक्षितवानसि। सपरिवारवृत्रवधात्परं रक्षां अदाः सोमयाजिभ्यो भक्तेभ्यः॥ रुदतः—रुदिर् अश्रुविमोचने, लटः शतृ। जक्षतः—जक्ष भक्षहसनयोः, लटः शतृ। सुन्वतः—गतम्॥

अष्टमीमृचमाह—

चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः।
न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात्सूर्येण॥८॥

चक्राणासः परिऽनहम् पृथिव्याः हिरण्येन मणिना शुम्भमानाः न हिन्वानासः तितिरुः ते इन्द्रम् परि स्पशः अदधात् सूर्येण॥

पृथिव्याः भूमेः परिणहम् परितोबन्धनवदवस्थितं आच्छादनं चक्राणासः कुर्वाणाः, हिरण्येन हिरण्मयेन मणिना गात्रगतेनाभरणेन शुम्भमानाः दीप्यमानाः हिन्वानासः सत्वरं गच्छन्तः (इन्द्रं प्रति योद्धुं) ते वृत्रानुचराः तथाविधा अपि इन्द्रम् युद्धायोद्यतं न तितिरुः जेतुं नाशक्नुवन्। तदा इन्द्रः स्पशः वृत्रसम्बन्धिनो गूढप्रणिधीन्, पृथिवीं सर्वतस्तमसा व्याप्य आच्छाद्य स्वयं शोभमानान् तान् सूर्येण उत्तमेन ज्योतिषा पर्यदधात् आच्छादितवान्। आच्छादकानेव आच्छादितवान्॥ चक्राणासः—करोतेः छन्दसि लिटः कानच्, ततोसुक्। परिणहम्—परिपूर्वात् बन्धनार्थात् नह्यतेर्भावे क्विप्, परिणट्। हिन्वानासः—हि गतौ वृद्धौ च, ताच्छीलिकः चानश्। तितिरुः—तिरतिर्गत्यर्थः॥

नवमीमृचमाह—

परि यदिन्द्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीम्।
अमन्यमानाँ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र॥९॥

परि यत् इन्द्र रोदसी इति उभे इति अबुभोजीः महिना विश्वतः सीम् अमन्यमानान् अभि मन्यमानैः निः ब्रह्मऽभिः अधमः दस्युम् इन्द्र॥

हे इन्द्र, यत् यदा त्वं रोदसी द्यावापृथिव्यौ उभे द्वे अपि विश्वतः सीम् सर्वतश्च महिना तव महिम्ना परिगृह्य पर्यबुभोजीः पर्यभुङ्क्थाः, तदा अभि मन्यमानैः त्वां अभिलक्ष्य अनुध्यायद्भिः त्वद्विषयिकां मतिं कुर्वद्भिः पुरुषैः द्वारा अमन्यमानान् त्वद्विषयकध्यानशून्यान् अभक्तान् निरधमः निस्सारितवानसि। तथा हे इन्द्र, ब्रह्मभिः मन्त्रैः स्तोतृभिः ऋषिभिः प्रयुक्तैरिति शेषः दस्युम् वृत्रं निरधमः इति संबन्धः॥ अत्र सायणीयं तात्पर्यं तु—मन्त्रार्थमनुध्यातुमशक्तानपि (अमन्यमानान्) केवलमन्त्रपाठकान्, 'अस्मदीया एते' इति 'अभिमन्यमानैः' मन्त्रैः दस्युं अधमः—इति॥ अबुभोजीः—अभुङ्क्थाः, छान्दसः। महिना—महच्छब्दात् इमनिच्, मलोपः छान्दसः। मन्यमानान्—मन ज्ञाने॥

दशमीमृचमाह—

न ये दिवः पृथिव्या अन्तमापुर्न मायाभिर्धनदां पर्यभूवन्।
युजं वज्रं वृषभश्चक्र इन्द्रो निर्ज्योतिषा तमसो गा अदुक्षत्॥१०॥

न ये दिवः पृथिव्याः अन्तम् आपुः न मायाभिः धनऽदाम् परिऽअभूवन् युजम् वज्रम् वृषभः चक्रे इन्द्रः निः ज्योतिषा तमसः गाः अधुक्षत्॥

ये वृत्रनिरुद्धाः अब्विशेषाः दिवः द्युलोकात् पृथिव्याः भूमेः अन्तम् स्थानं नापुः न प्राप्ताः। ये च ते वृत्रमायावशंवदाः वृत्राभासाः भूत्वा मायाभिः कपटप्रज्ञाभिः वृत्रकर्मभिर्वा धनदाम् धनस्य ज्योतिर्बलादिगोरूपधनस्य दातारं इन्द्रं न पर्यभूवन् परितो न व्याप्ताः, भुवं न प्राप्ताः वृत्रनिरोधात्, दिवस्पतिं वा न व्याप्ता मायाबलेनेत्यर्थः। तदानीं तान् विमोच्य गाश्च लब्ध्वा दुग्धवानिन्द्र इत्याह। इन्द्रः वृषभः वर्षिता वज्रम् आयुधं युजम् युक्तं चक्रे कृतवान्। तथा स्वयुक्तेन वज्रेण ज्योतिषा स्वीयेन तमसः वृत्रस्य मृतशरीरभूतात् तमसः (अपादानम्) गाः गुहान्धकारबन्धिताः गाः निरधुक्षत् निश्शेषेण दुग्धवान्। युजम्—युजिर् योगे, ऋत्विगित्यादिना क्विन्। अधुक्षत्—दुह प्रपूरणे, लुङ् दादेर्धातोर्घ इति घत्वम्, छान्दसः संहितायां भष्भावाभावः॥

अत्र सायणः—'यदा आपः अन्तरिक्ष एव निरुद्धा भूमिं न प्राप्ताः, धनप्रदां भूमिं

सस्योपकारादिकर्मभिः न व्याप्ताः तदा इन्द्रः मेघं भित्वा जलं वृष्टवान्' इति व्याचष्टे। अस्यानुकूलाः पदार्था एवमुक्ताः 'तमसः अन्धकाररूपात् मेघात्, गाः गमनशीलानि उदकानि' इति। तथा 'धनदां भूमिं' इत्यादि च चिन्त्यम्। अपां बन्धविमोचने गावश्च विमुक्ताः इति बहुशः मंत्रवर्णाः भवन्ति, कथं तर्हि गाव एव आप इति कथ्यते? सूक्तान्ते तात्पर्यविचारे क्रियमाणे सर्वोऽप्येवंविधः क्लेशो निर्धुतः स्यात्॥

इति प्रथमस्य तृतीये द्वितीयो वर्गः

एकादशीमृचमाह—

1-32-10

**अनु स्वधामक्षरन्नापो अस्यावर्धत मध्य आ नाव्यानाम्।**
**सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन हन्मनाहन्नभि द्यून्॥११॥**
**अनु स्वधाम् अक्षरन् आपः अस्य अवर्धत मध्ये आ नाव्यानाम्**
**सध्रीचीनेन मनसा तम् इन्द्रः ओजिष्ठेन हन्मना अहन् अभि द्यून्॥**

अस्य इन्द्रस्य स्वधाम् अनु स्वधापदवाच्यं स्वधारणसामर्थ्यरूपं स्वभावं अनुरुध्य, इन्द्रविभवसंपोषक-तत्स्वभावानुरोधेनेत्यर्थः आपः अक्षरन् स्यन्दमाना आसन्। तत्रापि तथा इन्द्रानुकूलासु प्रवाहिणीषु अप्सु, नाव्यानाम् नावा तार्याणामपां मध्ये अधः पतितोऽपि वृत्रः आ समन्तात् अवर्धत वृद्धिं प्राप्तः। तदा इन्द्रः सध्रीचीनेन सह गच्छता मनसा यत्रेन्द्रः स्थितस्तत्रैव गच्छता मनसा युक्तं तम् वृत्रं ओजिष्ठेन बलिष्ठेन हन्मना हननसाधनेन वज्रेण अभि द्यून् कतिपयदिवसान् अभिलक्ष्य अहन् हतवान्॥ स्वधाम्—गतम् (१. ६. ४.)। नाव्यानाम्–अपां गभीरत्व-प्रभूतत्वद्योतनायेदं अपां विशेषणम्, अधः पतित्वा मग्नस्य वृत्रस्य उन्मज्जनं सुकरमिति गम्यम्। सध्रीचीनेन–सहस्य सध्रिरादेशः, सह अञ्चतीति सध्र्यङ्, ततः खप्रत्ययः स्वार्थे, तस्य ईनादेशः। ओजिष्ठेन–ओजोऽस्यास्तीति ओजस्वी, आतिशायनिक इष्ठन् विन्मतोर्लुक् इति विनः टिलोपः। हन्मना–हन्यते अनेनेति हन्म करणे मनिन्। द्यून् अभि—द्युरिति अहर्नाम अभि कर्मप्रवचनीयम्॥

द्वादशीमृचमाह—

**न्याविध्यदिलीबिशस्य दृळ्हा वि शृंगिणमभिनच्छुष्णमिन्द्रः।**
**यावत्तरो मघवन्यावदोजो वज्रेण शत्रुमवधीः पृतन्युम्॥१२॥**

नि अविध्यत् इलीबिशस्य दृळ्हा वि शृङ्गिणम् अभिनत् शुष्णम् इन्द्रः यावत् तरः मघऽवन् यावत् ओजः वज्रेण शत्रुम् अवधीः पृतन्युम् ॥

इलीबिशस्य इलाविलशयस्य, तस्मादेतदाख्यस्य असुरस्य दृळ्हा दृढानि अभेद्यानि वासस्थानानि इन्द्रः न्यविध्यत् नितरां विद्धवान्। शृङ्गिणम् आयुधस्थानीयविषाणयुक्तं, दर्पात् शरीरैकदेशेन दृढप्रहारकुशलं शुष्णम् रसशोषकं, अतएव एतदाख्यं असुरं व्यभिनत् विविधं मर्दितवान्। मघवन् धनयुक्त इन्द्र, यावत् तरः तव यावान् वेगः यावत् ओजः यावद्बलं तत्सर्वं प्रयुज्य त्वं पृतन्युम् पृतनामिच्छन्तं युद्धेच्छुम् शत्रुम् वृत्रं वज्रेण अवधीः हतवानसि। इलीबिशः शुष्णश्च वृत्रान्नान्याविति मत्वा तदनुसारेण सायणव्याख्या चलति। "शुष्णमवातिरः" (१.११.७) इत्यत्र व्याख्याऽवधेया॥ इलीबिशस्य—पृषोदरादित्वात् अभिमतरूपसिद्धिः। पृतन्युम्—पृतनाशब्दात् क्यचि छन्दसि उप्रत्ययः॥

त्रयोदशीमृचमाह—

अभि सिध्मो अजिगादस्य शत्रून्वि तिग्मेन वृषभेणा पुरोऽभेत्।
सं वज्रेणासृजद् वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः ॥१३॥

अभि सिध्मः अजिगात् अस्य शत्रून् वि तिग्मेन वृषभेण पुरः अभेत् सम् वज्रेण असृजत् वृत्रम् इन्द्रः प्र स्वाम् मतिम् अतिरत् शाशदानः ॥

अस्य इन्द्रस्य सिध्मः साधको वज्रः शत्रून् अभि असुरानभिलक्ष्य अजिगात् अगच्छत्। स इन्द्रः तिग्मेन तीक्ष्णेन वृषभेण प्रहारवर्षिणा वज्रेण पुरः शत्रुपुराणि व्यभेत् विविधं भिन्नवान्। ततः इन्द्रः वृत्रम् असुरं वज्रेण स्वीयेनायुधेन समसृजत् संयोजितवान्। तेन कर्मणा शाशदानः वृत्रं हिंसन् स्वां मतिं स्वाभीष्टसिद्धिरूपां बुद्धिं प्रातिरत् प्रकर्षेण साधितवान्॥ अजिगात्—जिगातिर्गतिकर्मा। अभेत्—भिदिर् विदारणे श्नमि व्यत्ययेन शप्, तस्य लुक् छन्दसि। अतिरत्—तरतेः व्यत्ययेन शः, ऋत इद् धातोरिति इत्वम्। शाशदानः—शद्लृ शातने, तस्मात् यङन्तात् शानच्॥

चतुर्दशीमृचमाह—

आवः कुत्समिन्द्र यस्मिञ्चाकन्प्रावो युध्यन्तं वृषभं दशद्युम् ।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥१४॥

आवः कुत्सम् इन्द्र यस्मिन् चाकन् प्र आवः युध्यन्तं वृषभम् दशऽद्युम् शफऽच्युतः रेणुः नक्षत द्याम् उत् श्वैत्रेयः नृऽसह्याय तस्थौ ॥

हे इन्द्र, त्वं, यस्मिन् विषये चाकन् सन्मङ्गलं कामयमानो भवसि तं कुत्सम् नाम्ना कुत्सं आवः अरक्षः । युध्यन्तम् युद्धं कुर्वन्तं वृषभम् वर्षितारं श्रेष्ठं वा दशद्युम् एतन्नामकं प्रावः प्रकर्षेण रक्षितवानसि । शफच्युतः त्वदीयाश्वस्य शफात् गलितः रेणुः धूलिः द्याम् द्युलोकं नक्षत गच्छति । श्वैत्रेयः श्वित्राख्यायाः पुत्रः (अप्सु निमग्नः) नृसह्याय नृभिः बलिभिः पुरुषैः सोढव्याय उत्तस्थौ उत्थितः, अद्भ्यो निर्गम्य उद्गतवान् ॥ चाकन्—कनु कान्तौ, अस्माद् यङ्लुगन्तात् लङि, चक तृप्तौ इत्यस्माद्वा शतरि छान्दसं रूपं इति प्रक्रियामाहुः पूर्वे । युध्यन्तम्—व्यत्ययेन परस्मैपदम् । नक्षत—णक्ष गतौ व्यत्ययेन आत्मनेपदम् । नृसह्याय—शकिसहोश्चेति कर्मणि यत् ॥

कुत्स–दशद्यु–श्वैत्रेयाणामनुग्रहं कृतवान् इन्द्र इत्यत्रोक्तम् । तर्हि ऐतिहासिकाः पुरुषास्तेऽभ्युपगन्तव्याः । तथा बहव ऋषयो राजानश्च श्रूयन्ते मन्त्रेषु । तन्नाम्नां गूढान्यर्थान्तराणि अवयवार्थानुसारीणि ग्राह्याणि । विशेषतः प्रसिद्धाः कुत्स–कक्षीवत्–शुनःशेपादयः अन्तर्यागाध्वनि सिद्धानुभूतिप्रतिष्ठाप्रतिमानभूताः भवन्ति । यथा बन्धत्रयनिर्मोक्षसिद्धेः प्रतिष्ठा शुनःशेपे, यथा वा भगवतः श्रीकृष्णस्य अर्जुन इव, इन्द्रस्य कुत्से सख्यम् । ईदृशसाहचर्यसख्यादेः प्रतिष्ठा कुत्से । एवमन्यत्रापि बोध्यम् ॥

अथ कुत्सादीनां अत्र श्रुतानां निर्वचनं पश्यामः । 'करोतेः कृन्ततेर्वा' इति पूर्वे । चिन्त्यमिदम् । देवद्वेषिणां शत्रूणां वा कुत्सनात् अधःकरणात् कुत्स इत्युत्पश्यामः । दशद्युम्–अप्रसिद्ध ऋषिः । दशसु दिक्षु प्रकाशोऽस्येति प्राहुः । श्वैत्रेयः—श्वित्राया अपत्यम् । श्वित्रा श्वेता निष्प्रभा निष्कला वा केयमिति न विदिता तत्त्वतः । इतिहासे वा न प्रसिद्धा । स्याद्वा प्रभाहीना रुग्णेव प्रकृतिः, यस्यां संभूतः पुरुषो ज्योतिर्बलादिसंपादनात् प्राक् जीवनधारणसमर्थास्वप्सु समाहितो भूत्वा, इन्द्रानुग्रहात् प्रभाववान् निर्गतोऽमीः संवृत्तः ॥

पञ्चदशीमृचमाह—

आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम्।
ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥१५॥
आवः शमम् वृषभम् तुग्र्यासु क्षेत्रऽजेषे मघऽवन् श्वित्र्यम् गाम् ज्योक् चित् अत्र तस्थिऽवांसः अक्रन् शत्रुऽयताम् अधरा वेदना अकरित्यकः ॥

हे मघवन् धनवन्निन्द्र, श्वित्र्यम् श्वित्रायां पूर्वोक्तस्वरूपायां भवं पुरुषं आवः रक्षितवानसि। कीदृशम्? क्षेत्रजेषे पार्थिवं क्षेत्रं स्थानं जित्वा स्वीयं विधातुं तुग्र्यासु प्रेरणबलवाहिनीषु अप्सु अवस्थायापि शमम् व्याकुलताशून्यं शान्तं वृषभम् पुंबलश्रेष्ठं गाम् चित्प्रकाशरश्मिरूपम्, एवंभूतं श्वित्राभवं जीवमात्मानं 'आवः' इति संबन्धः। अत्र अस्मिन् 'श्वित्र्ये' विषये ज्योक्चित् चिरकालमपि तस्थिवांसः अवस्थिताः सन्तः अक्रन् शत्रुत्वं अकुर्वन् वैरिणः। तथा शत्रूयताम् शत्रुत्वमिच्छतां अधरा निकृष्टानि वेदना दुःखानि अकः अकरोः॥

तुग्र्यासु—तुग्रशब्दाद् घन् घस्य इयादेशः, इत्वलोपश्छान्दसः। क्षेत्रजेषे—जेषृ गतौ, अस्मात् संपदादिलक्षणः क्विप्, जेट्, क्षेत्रस्य जेट् क्षेत्रजेट् तस्मै। श्वित्र्यम्—भवे छन्दसि यत्। अक्रन्—करोतेर्लुङ् च्लेर्लुक्, छान्दसम्। शत्रूयताम्—शत्रुमात्मन इच्छन्तीति शत्रूयन्तः, क्यच्, तदन्तात् शतृ। अधरा, वेदना—शेर्लोपः छन्दसि। अकः—करोतेः लुङ्, च्लेर्लुक्, छान्दसम्॥

सायणीये—'तुग्र्यासु जलेषु गां गतं मग्नमित्यर्थः' इति पदार्थे भेदः। तात्पर्ये अन्वये च व्याख्या भिद्यत एव। तत्र कारणमिदं भवति। श्वैत्रेयः न केवलं ऐतिहासिकः। स नित्यः कश्चन अर्थः स्यात्। तथा श्वित्राशब्दः पूर्वर्चि व्याख्यातायां गृहीतः। तुग्र्याः उदकनामसु पठितत्वात् अप्सु इति पूर्वव्याख्यानम्। बलप्रेरणप्रापणाद्यर्थात् तुजतेर्निष्पन्नस्तुग्र्यशब्दः इति गृहीत्वा अप्पर्यायत्वेऽपि अप्छब्दो गूढार्थद्योतकसङ्केतरूपो व्याख्यातः॥

इति प्रथमस्य तृतीये तृतीयो वर्गः

आङ्गिरसस्य हिरण्यस्तूपस्य ऐन्द्रं सूक्तद्वयं व्याख्यातम्। समासतस्तस्य रहस्यार्थोपपादकं तात्पर्यं पर्यालोच्येह संदृभ्यते। यद्यपि सूक्तद्वयेऽपि इन्द्रप्रभावो वर्णितः, तथापि 'इन्द्रस्य नु वीर्याणी'ति सूक्ते वृत्रवधादपां विमोचनस्य प्राधान्यं लक्ष्यते, 'एतायामे'ति सूक्ते तु वृत्रवधादपां उत्सर्जनेन सह गवां अधिगमः, वृत्रानुचराणां निग्रहः, कुत्सादीनामनुग्रहश्च वर्णिताः। इतिहासकथानां वेदेषु परोक्षवचनत्वाभ्युपगमात् वृत्रादिशब्दानां सङ्केतत्वमवधाय ध्येयो रहस्यार्थः। पर्वतः आपः समुद्रः गावः उषः सूर्यः वृत्रवलपणयः इत्यादयः बहिः सङ्केतरूपा अन्तर्गूढार्था बोध्याः। वृत्रकथासु अन्यत्र च ऋक्संहितायां प्रयुक्तानां पर्वतादिमुख्यपदार्थरहस्यं प्रथममुद्घाटयितव्यम्॥

अद्रिः, पर्वतः, शिलोच्चयः—सङ्केतो भवति भूगर्भात्प्रभृति नाकपृष्ठावधि अवस्थितस्य त्रैलोक्यसद्भावस्य सर्वस्यापि ब्रह्माण्डस्य, रहोयागरतानां पिण्डाण्डस्यापि अन्नप्राणमनस्तत्त्वात्मकत्रिकस्य चेति बोध्यम्। अत्युन्नतोऽयं विश्वसंस्थानपर्वतः पर्ववान्, इममेव ऋषय आरोहन्ति क्रमशः प्रस्थादुपरि प्रस्थं 'सानोः सानुमारुहत्'। अदितिः—अखण्डस्वरूपिणी प्रकृतिः, अघ्न्या गौः, इन्द्रादीनां देवानां ज्योतिषां प्रसूः। दितिः खण्डिता प्रकृतिः, अस्याः सूनवो दस्यवो दानवा वृत्रादयः तमसस्पुत्राः। ज्योतिः सत्यं ऋतं ऊर्ध्वमवस्थितम्, नित्यं 'अहो' भवति। तमः अनृतं अधोऽवस्थितं 'रात्रिः' भवति। अनयोः ज्योतिषः तमसश्च मध्ये त्रैलोक्यमवस्थितम्। यथा ज्योतिषः पुत्राणां आदितेयानां ऊर्ध्वमावासो देवानाम्, तथा तमसस्पुत्राणां दैतेयानां पर्वतस्य मूले निवासः। पर्वतस्य पादे गुहा बिलं वा वासस्थानमात्रं दानवानां वृत्रादीनाम्। तेषां कर्माणि त्रैलोक्याक्रमणानि भवन्ति। अत एव देवानां दैत्यानां च युद्धम्॥

अथ गावः चिद्रश्मयः, अदितेर्बृहत्या अंशाः, तस्मादादितेयाः। आपः चित्प्रभाववाहिन्यः, इमाश्च सप्त सिन्धवो भवन्ति, सप्तसंख्या तु सप्ततत्त्वात्मकविश्वसत्तासंबन्धिनी, यतः सप्तस्वपि धामसु भूरादिषु प्रवहन्ति चित्क्रियाशक्तयः। समुद्रश्च अखण्डनिरवधिकअमृतसत्त्वस्य सङ्केतः, स ऊर्ध्वो भवति वेदान्तिसंमतसच्चिदानन्दस्थानीयः। अन्यश्च समुद्रः अधःस्थानः जडगतः, अचित्तिरेव सः। तं 'अप्रकेतं सलिलम्' इति दृष्टवान् परमेष्ठी। जडाद् अस्मात्समुद्रादुत्थितः सृष्टो वा त्रैलोक्यलक्षणः पर्वतः। तत्र अरणशील उद्यमी चित्क्रियां अप्छब्दलक्षितां, चिद्रश्मि गोपदप्रतिपादितां, चिदानन्दरसं सोमशब्दलक्षितं च प्राप्य सत्यं उत्तमं ज्योतिः अमृतं प्राप्तुं प्रयतते। देवसाहाय्येनैवायमुद्यमः

सफलः स्यात्। तस्माद् यजति देवान्। स्वीयसर्वानुभूतिरसं सोमपदवेदनीयं निष्कृष्य, संस्कृतं तं देवेभ्यो ददाति। देवानां राजा वीरस्तेन बलवान् जातः कर्तव्यं करोति यजमानाय॥

दिव्याः स्रवन्त्य आपः वृत्रेण निरुद्धाः, तथा गावश्च पणिभिरपहृत्य तेषां मुख्येन वलेनाधिष्ठिते बिले गुहास्थले बन्धिताः। एताश्च विमोचयितव्याः। अत्रेदमवधेयम्। इमाश्च सिन्धवः परमात्समुद्रात् स्रवन्त्यः दिव्याः, न भौमाः, वृत्रेण अपां आवरकेण प्रतिरुद्धाः। आसां भूप्राप्तिं रुन्धन्तं असुरं ज्वलता वज्रेण हतवान् इन्द्रः। तेन हननेन अपां विमोचनं निरवहत्। पर्वतमूर्धनि द्वारमकरोत्। तेन मार्गेण आपः प्रावहन्। एषा सारतो वृत्रवधादपां विमोचनकथा बहुभ्यः सूक्तेभ्योऽवगम्यते। अवधार्यं चेदम्। यद्यपि अद्रिः पर्वतो वा सङ्केतोऽस्माभिर्विवृतः तथापि पर्वतो मेघपर्यायो वेदे न विस्मार्यः, तत्र मेघस्य अबावरकत्वविवक्षा ज्ञेया॥

अथ गा अधिकृत्य। दस्यवश्चोराः पणयो व्यवहारिणः एषां मुख्यो वलः, वलयिता गवाम्। सोऽद्रिबिलवासी। तमसि गुहायां गोव्रजं गूहते। अङ्गिरोभिः सह इन्द्रो गत्वा तं विजित्य गाः निस्तरेत्। कथमिदं कर्म स करोति? नष्टं गोधनं अधिगन्तुं यजमानस्य यज्ञः साधनम्। तत्र उपकारिणोऽङ्गिरसः देवर्षयः, पूर्वं मनुष्याः एव भूत्वा देवभावं प्राप्ता वा, मन्त्रमुच्चारयन्त इन्द्रस्य साहाय्यमाचरन्ति। सोमपानेन बलवान् भवति मघवा। गुहां प्रविश्य अद्रिबिलं भित्त्वा वा गा विमोच्य उद्गमयति। अत्र देवशुनी सरमा सहजावबोधचक्षुः गोगुप्तिस्थानं गत्वा दृष्ट्वा च इन्द्रादीनां प्रथमं दर्शयति। ततः परं गोलाभ इत्यन्यत्र सूक्ते वर्णितम्॥

इदं च सार्वकालिकमिन्द्रकृत्यम्। अस्मै कर्मणे सर्वथा प्रभुरिन्द्रः। यद्यपि स प्रथममिदं गोलाभपरिनिष्ठितं गवेषणं पूर्वैर्ऋषिभिरङ्गिरोभिर्द्वारा निर्वर्त्य तेषु एतां गोलब्धिरूपां सिद्धिं प्रतिमानभूतां विधाय प्रतिष्ठापितवान् लोकानुग्रहाय, तथापि मानुषे लोके अस्य स्वीयकृत्यस्य अद्याप्यावृत्तिमादधानः अनवरतगवेषणपरो गोधनमुक्तलक्षणं लम्भयन्नेव राजति राजा त्रैलोक्यदेवानाम्॥

अथेदानीं सूक्तद्वयऋचां तात्पर्यग्रहः सुकरः स्यात्। एतावत्युक्तेऽपि संदिग्धार्थाः सन्त्येव काश्चन ऋचः। ताश्च समालोचनीयाः। प्रथमं द्वात्रिंशसूक्तऋचां निरीक्षणं भवति। ऋ. १. इन्द्रस्य वीरकर्मकीर्तने वृत्रहननादपां निष्पीडनं नदीनां भेदनं चोक्ते–इदं च

प्रागुक्तं विवृतम्। ऋ. २. स्वर्लोकीयेनेन्द्रवज्रेण वृत्रे हते 'अञ्जः समुद्रं अवजग्मुरापः' इत्युक्तम्। अत्र 'अञ्जः' ऋजुना मार्गेण, 'अव' जग्मुः अधो गताः आपः इत्युक्तम्। ऊर्ध्वस्थानादृजु यथा तथा अधोगतं जडं अचित्तिसमुद्रं प्राप्ताः, येन ताभिरद्भिः चित्क्रिया-शक्तिवाहिनीभिः पोषितो नवीकृतः फलितो भवति अन्नमयादिशरीरवान् यजमानः। समुद्रं प्रति भौमानां अपां नदीनां वर्षजलानां वा गमनं तिरश्चीनं, न तु ऋजु गमनं, अधोगमनं वा भवति। ऋ. ३. 'त्रिकद्रुकेषु' ज्योतिर्गौरायुरिति त्रिषु आभिप्लविकेषु अहःसु सुतं सोमं इन्द्रः पिबतीति याज्ञिकाः ज्योतिर्गौरायुरिति त्रयाणां यानि स्थानानि पात्राणि तत्र सुतं सोमं इन्द्रः पीत्वा बलवान् वृत्रं जघान। ज्योतिः पिण्डाण्डे परमं धीस्थानम्, गौः अत्र वाक् स्यात्, आयुः प्राणः। इदं च ज्योतिरादित्रिकस्य याज्ञिकोक्तस्य अस्मदीयं विवरणम्। केवलमन्त्रवर्णाधारेण त्रिकद्रुकशब्दस्य अन्यथा भवति अर्थविवृतिः। कद्रुः पिङ्गलो बभ्रुर्वा वर्णः लतादिषु परिपक्वः। तेन सोमो लक्ष्यते वेदे। तस्मात् त्रिषु सोमपात्रेषु पृथिव्यादित्रिके (देहे प्राणे मनसि) सुतः सोमः इन्द्रेण स्वीक्रियते। तेन प्रवृद्धबलो वृत्रहा भवति। "त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत। तमिद्वर्धन्तु नो गिरः"। (८.९२.२१)। अत्र देवाः चेतनं ज्ञानसाधनं यज्ञं 'त्रिकद्रुकेषु विस्तारितवन्तः' इत्युक्तम्। त्रिकद्रुकाः त्रिलोकी त्रिपात्रीति गृहीते सुगमं तात्पर्यम्। 'त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत् सोममपिबत्' (२.२२.१) अत्रापि अस्मद्विवरणस्योपपत्तिर्द्रष्टव्या॥

ऋ. ४. वृत्रहतेः परं वृत्रानुयायिनां मायाविनां ध्वंसेन उषसं द्यां सूर्यं च अजनय-दिन्द्रः। वृत्रवधस्य युगपत् फलानि प्रागुपन्यस्तानि स्मार्याणि। अधस्तात् अचित्ति-समुद्रादेव सूर्यस्योदयो जन्म। तथा दिवः उषसश्च। उत्तमं सत्यं ज्योतिः सूर्यः। अन्यच्च तदनुरोधेनावधार्यम्। 'वि गोभिरद्रिमैरयत्' (१.७.३) इति प्राग् व्याख्यातम्। ऋ. ७. 'अपात् अहस्तः' अहिः सर्पः स्वभावतः अपाणिपादोऽपि, छिन्नबाहुः सर्वथा छिन्नाङ्ग इति पूर्वमन्त्रोक्त्यनुसारेण ग्रहणेऽदोषः। ऋ. ८. नदं नेत्यृचि 'मनो रुहाणा अति यन्त्यापः' इत्यस्य तात्पर्यमवधेयम्। तमोमूर्तेरसुरस्य वृत्रस्याधः पतने तेन पूर्वं निरुद्धाः आपः विमोचिता अधुना तमतिक्रम्य ऊर्ध्वं मनोभुवं आरोहन्ति, न तु तिरश्चीनतया प्रवहन्ति। ताश्चित्क्रियाधाराः एतावन्तं कालं तमसाऽऽवृताः पर्वते पर्वतेन वा जडेनावरकेण वा बन्धिताः अन्नप्राणमयप्रस्थोपरि गत्वा मनोभुवं फलितां कर्तुं उद्गताः प्रवहन्ति॥

ऋ. ९. दानुः वृत्रमाता, दितिरित्युच्यते। उभयोरवयवार्थः समानः। दाप् लवन इत्यस्मान्निष्पन्नौ। अखण्डात्मिकायाः इन्द्रादिदेवमातुरदितेः विपरीता दितिः खण्डात्मिका वृत्राद्यसुरमाता। वृत्रे हन्यमाने स्वस्या बाहुप्रसारेण वज्रप्रहारं परिहर्तुं स्थिता तन्माता। तदानीं माता उपरि अधस्तात् वृत्रः हत एव। सेयं खण्डिता खण्डात्मिका सर्व-भूतविभागभेदमूलभूता अपरा प्रकृतिः वृत्रमाता उपरि, तज्जातो घनीभूततमोमूर्तिरधस्ताच्च निश्चेष्टं अभवताम्। अनेन तमसोऽगाध-दुष्प्रवेश-अदृश्यता लक्ष्यते। तं अन्तर्धारयन्त्याः जडतमःप्रकृतेः दृश्यता च गम्यते। ऋ. १०. स वृत्रः 'दीर्घं तम आशयत्' मृतिप्रायां दीर्घनिद्रामास्थितः, सुप्तो निश्चेष्टोऽभूत्, तस्य शरीरं 'निण्यं' अपां मध्येऽन्तर्हितम्। ऋ. १४. अत एव वा इन्द्रस्य वृत्रं हतवतोऽपि भीतिर्जाता कुत्रापि निलीनः पुनर्निर्गतः स्याद्वेति। वृत्रः अधोगतो न दृष्टः, वृत्रमातैव सुप्ता निश्चेष्टा लक्षिता। इदं च भय-कारणं इन्द्रस्येत्यस्मदूहः। वृत्रवधपापाद् भीतिरिति कथा पुराणेषु प्रसिद्धा, तत्र नास्मा-कमादर इति किमु वक्तव्यम्? ऋ.१५. 'अरान् न नेमिः परि ता बभूव' इत्युपमया सर्वं जगत् परितो वृत्वा शक्त्या परिमाणेन च महानिन्द्रस्तस्य स्थितिकृत् आधारश्च भवतीति ऋषेर्दृष्टिवैशाल्यं द्योत्यते ॥

'एतायामे'ति सूक्ते विशेषतोऽवधेया विषयाः व्याख्यायां अङ्गिरोविचारे अन्यत्र चोपन्यस्ताः। गोकामानामामन्त्रणपूर्वकं सूक्तमारभत ऋषिः। ऋ. ६. 'नवग्वाः इन्द्रं अयातयन्त' इत्यत्र अङ्गिरसः स्वमन्त्रबलैरिन्द्रं उद्योजितवन्त इत्युक्तमवधेयम्। 'अद्रिं रुजन्नङ्गिरसो रवेण' इत्यादिमन्त्रवर्णैरिदं च सङ्गच्छते। वृत्रे हते, अदृश्यतां गते, दीर्घस्वापमास्थितेऽपि तदीयानुचराः न युद्धान्निवृत्ता इति बहुधा कीर्त्यतेऽस्मिन् सूक्ते। तेन तमोनाशे निर्वर्तितेऽपि तच्छेषो व्याप्रियत एव कश्चित्कालमिति बोध्यम्। एव-मन्येषामसुराणां यथा संहारः कृतः, तथा कुत्सादीनां प्रतिमानभूत-पुरुषाणां रक्षणं च कृतं भगवतेन्द्रेणेति सूक्तसमाप्तिः। अन्ये च विस्तरास्तत्र तत्र व्याख्याता इत्यलं दिङ्मात्रप्रदर्शनेन ॥

अथ सप्तमेऽनुवाके 'त्रिश्चिन्नो अद्य' इति चतुर्थं द्वादशर्चं सूक्तम्। हिरण्यस्तूप एव ऋषिः अश्विनौ देवता। 'क्व त्री चक्रा' इति नवमी 'आ नो अश्विना' इति द्वादशी च त्रिष्टुभौ शिष्टा जगत्यः॥

तत्र प्रथमामृचमाह—

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः॥१॥

त्रिः चित् नः अद्य भवतम् नवेदसा विऽभुः वाम् यामः उत रातिः अश्विना युवोः हि यन्त्रं हिम्याऽइव वाससः अभिऽआयंसेन्या भवतम् मनीषिऽभिः॥

हे नवेदसा ज्ञातारौ कालविभागस्य काले कर्तव्यस्येति वा शेषः, अश्विना हे अश्विनौ, अद्य इदानीं नः अस्मदर्थं त्रिः चित् त्रिवारमपि भवतम् युवां सन्निहितौ भवतम्। अत्र 'त्रिः' इति सवनत्रयापेक्षं अश्विनोरागमनं प्रार्थितं याज्ञिकपक्षे। अन्तर्यजने तु सर्वत्र अस्मिन् सूक्ते त्रिसंख्या भूरादिलोकत्रयं तत्सदृशं अन्तःस्थानत्रयं देहप्राणमनस्त्रयं तत्तदुचितनिष्ठानियमानुसारप्राप्तं कालविभागं देशविभागं वा द्योतयतीति बोध्यम्। अत्र त्रिरिति अन्तर्यजनविधानाधीनं दिव्यं समयभेदं बोधयेत्। तथा अश्विनोः समयानुसारेणागमनं सन्निधानं सुलभमित्याह। वाम् युवयोः यामः यानसाधनभूतो रथः विभुः सर्वतो व्याप्तः, उत अपि च रातिः दानं स्वीयसन्निधेरिति शेषः, विभुरिति संबन्धः। युवोः युवयोः यन्त्रम् हि उभयोर्नियमनं अस्ति खलु। तत्र दृष्टान्तमाह। वाससः वासरस्य हिम्या इव रात्र्या इव, यथा दिवसस्य रात्र्या सह संबन्धो नित्यो नियमितः तद्वत्। तथा परस्परनियमनसम्पन्नौ युवां मनीषिभिः धीमद्भिः देवताविषयकमेधाशालिभिः अभ्यायंसेन्या अभितो नियन्तव्यौ भक्तिबलेन युष्मदनुग्रहवशात् सान्निध्यं कर्तुं स्वयं तद्वशवर्तिनौ भवतम्।

नवेदसा—'नभ्राण् नपान्नवेदा' इत्यादिना नञः प्रकृतिभावे प्राप्ते, न वेदः ज्ञानं यस्येति विग्रहो वक्तव्यः। अत एव 'विपरीतं न वित्तः इति नवेदसौ' इति सायणः। अन्यत्र न वेदो यस्य न इति नञ्द्वयं विग्रहे प्रयुज्य कथञ्चित् समर्थ-

यति। अवयवार्थः संदिग्ध एव। कविर्मनीषीति तन्नामसु पठितत्वात्। नवेदः-शब्दप्रयोगस्थलेषु ज्ञात्राद्यर्थस्य सङ्गतेश्च। नवेदाः ज्ञाता, निरीक्षक इत्याद्यर्थे ग्राह्यः। यामः–यायते गम्यतेऽनेनेति यामः, मन्। युवोः–छन्दसि यलोपः, टिलोपश्च। हिम्या इव–हिमा रात्रिनाम, ततस्तृतीयैकवचनस्य ड्यादेशः। वाससः–वस आच्छादने वासयति प्रकाशेनेति अहर्वासः। अभ्यायंसेन्या–अभि-आङ् इति उपसर्गद्वयपूर्वकात् यम उपरम इति धातोः औणादिकः सेन्यप्रत्ययः॥

'हिम्येव वाससः' इत्यत्र हिमयुक्तया रात्र्या सह (शैत्यबाधानिवारणाय) वाससः आच्छादनस्य वस्त्रस्येव इति नव्यानां एके। एते च मन्यन्ते–हेमन्तरात्रौ आच्छादनं यथा आश्रयन्ते जनाः, तथा अश्विनौ वयमाश्रयामहे इति ऋषेर्विवक्षेति। बहुशब्दाध्याहारनिष्पादनीयोऽयं भावः। नैतद्युक्तम्। अत्र अश्विनोरुभयोः 'यन्त्रम्' नियन्त्रणं नियमनरूपः संबन्धः अहोरात्रवदित्युक्तम्। यद्यपि तौ पृथक् जातौ भवतः 'नाना जातौ' (५.७३.४), तथापि नासे अक्षिणी हस्तौ दम्पती इत्यादिवत् समानकार्यप्रवृत्तौ नियतसंबन्धौ नित्यद्वन्द्वभूतौ इति विश्रुतौ वेदे (मं. २. सू. ३९)। तदेवेह प्रतिपादितं 'हिम्येव वासस' इति दृष्टान्तेन। अश्विनावधिकृत्य माधुच्छन्दसे तृचे विचारितम्॥ (मं. १. सू. ३. पृ. ११२–११६)॥

द्वितीयामृचमाह—

**त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः।**
**त्रयः स्कम्भासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा॥२॥**

त्रयः पवयः मधुऽवाहने रथे सोमस्य वेनाम् अनु विश्वे इत् विदुः त्रयः स्कम्भासः स्कभितासः आऽरभे त्रिः नक्तम् याथः त्रिः ऊम् इति अश्विना दिवा॥

मधुवाहने मधु सोम्यं मधु देवानां अशनं प्रसिद्धं, तद्वाह्यतेऽनेनेति मधुवाहनः तद्युक्त इत्यर्थः, तस्मिन् रथे अश्विनोः रथे त्रयः त्रिसंख्याकाः भूरादित्रिस्थानसदृशाः पवयः वज्रदृढाः चक्रविशेषाः सन्ति। सोमस्य विश्वसत्तास्थिरांशभूत-रसात्मनः सोमस्य राज्ञः वेनाम् अनु कमनीयां कान्तां भोग्यभूतां आनन्दमयीं उत्तमज्योतिर्ध्रुवं अनुलक्ष्य

प्रयाणे विश्वे सर्वेऽपि देवाः विदुः इत् जानन्त्येव, सोमस्य वेनामनु उक्तलक्षणस्य रथस्य गमनं इति शेषः। अत्र सोमस्य चन्द्रस्य भार्यया वेनया सह विवाहे अश्विनोर्गमन-मुक्तमिति मन्यते सायणः। न क्वाप्येषा कथा श्रूयते ब्राह्मणाख्यायिकासु पुराणकथासु वा। अथ सोम इह चन्द्रश्चेत् 'गन्धर्वस्य ध्रुवे पदे' (१. २२. १४) 'इत्था चन्द्रमसो गृहे' इत्यादिमन्त्रप्रतिपादितं तत्त्वमवधेयम्। रथगमनसाधनं त्रिचक्रमुक्तम्। आलम्बनार्थाः त्रयः स्तम्भा रथे प्रोच्यन्ते। त्रयः स्कम्भासः स्तम्भाः आरभे आलम्बितुं स्कभितासः स्थापिताः रथस्योपरि इति शेषः। हे अश्विना अश्विनौ, युवां त्रिः त्रिवारं नक्तम् रात्रौ याथः गच्छथः, त्रिः त्रिवारं दिवा अहनि याथः गच्छथः। उ पादपूरणे। अविद्याच्छन्ना तमोव्याप्ता रात्रिः अधस्तनत्रैलोक्यावस्थानं लक्षयति, अहस्तु नित्यप्रकाशं ऊर्ध्वं त्रैलोक्यमिति विवेकः। 'नक्तोषासे'त्यत्र व्याख्या (१. १३. ७) तत्त्वबोधाय कल्पेत॥

स्कम्भासः, स्कभितासः—स्कम्भुः सौत्रो धातुः, द्वितीयस्य इडागमो निपातितः। आरभे—रभ राभस्ये, भावे क्विप्॥

तृतीयामृचमाह—

**समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम्।**
**त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतम्॥३॥**

**समाने अहन् त्रिः अवद्यऽगोहना त्रिः अद्य यज्ञम् मधुना मिमिक्ष-तम् त्रिः वाजऽवतीः इषः अश्विना युवम् दोषाः अस्मभ्यम् उषसः च पिन्वतम्॥**

हे अश्विना अश्विनौ, युवम् युवाम् समाने अहन् एकस्मिन्नेव दिने अन्तर्यजने चलति त्रिः त्रिवारं अवद्यगोहना अवद्यानां यजनगतदोषाणां गोहनौ गूहयितारौ, दोषा-पनोदकारिणौ इत्यर्थः। त्रिवारं देहत्रयापेक्षया स्यात्। अद्य इदानीं यज्ञम् अस्मदीयं यजनं त्रिः त्रिवारं मधुना दिव्येन रसेन मिमिक्षतम् सिञ्चतम्, रसार्द्रं क्रियताम-स्मदन्तर्यजनम्। किंच दोषाः रात्रीः उषसः च दिवसांश्च, निरन्तरं अहोरात्रमित्यर्थः त्रिः त्रिवारं वाजवतीः समृद्धिमतीः इषः प्रबलप्रेरणाः अस्मभ्यम् पिन्वतम् सिञ्चतम्॥

मिमिक्षतम्—मिह सेचने, सनः कित्त्वाल्लघूपधगुणाभावः। पिन्वतम्—पिवि सेचने, इदित्त्वात् नुम्॥

चतुर्थीमृचमाह—

त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम् ।
त्रिर्नान्द्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् ॥४॥

त्रिः वर्तिः यातम् त्रिः अनुऽव्रते जने त्रिः सुप्रऽअव्ये त्रेधाऽइव शिक्षतम् त्रिः नान्द्यम् वहतम् अश्विना युवम् त्रिः पृक्षः अस्मे इति अक्षराऽइव पिन्वतम् ॥

हे अश्विना अश्विनौ, युवम् युवां वर्तिः वर्तनं, अस्मद्वसतिं त्रिः यातम् त्रिवारं प्राप्नुतम् । तथा अनुव्रते जने अनुकूलव्यापारपरे जने त्रिः यातमिति सम्बन्धः । दैव्यं कर्मैव अनुकूलव्यापारः तद्युक्ते जने अनुग्रहः क्रियताम् । त्रिः त्रिधा सुप्राव्ये सुष्ठु प्रकर्षेण अवितुं रक्षितुं योग्ये कर्मणि अन्तर्यजने विषये त्रेधा इव त्रिप्रकारैरिव शिक्षतम् अस्मान् शिक्षयतं (अन्तर्भावितण्यन्तः) रहोविद्यां नः प्रापयतमित्यर्थः । नान्द्यम् नन्दनीयं, प्रीतिकरं फलं त्रिः वहतम् प्रापयतम् । अस्मे अस्मासु त्रिः त्रिवारं पृक्षः प्रीणनं दिव्यं रसं पिन्वतम् सिञ्चतम् । कानीव ? अक्षरेव अक्षराणि उदकानि यथा पर्जन्यो वर्षति तद्वत् । अक्षरा उदकनाम ॥ वर्तिः—वर्ततेऽत्रेति वर्तिः । सुप्राव्ये—सुप्रपूर्वकादवतेः कर्मणि ण्यत् । नान्द्यम्—ण्यदन्तः । पृक्षः—पृची संपर्के, प्रीणनेऽपि वर्तते, असुनि सुडागमः । प्रीणयितृत्वादन्नं पृक्षो भवति सायणीये, कुक्षिसम्पर्चनाद्वा ॥

पञ्चमीमृचमाह—

त्रिर्नो रयिं वहतमश्विना युवं त्रिर्देवताता त्रिरुतावतं धियः ।
त्रिः सौभगत्वं त्रिरुत श्रवांसि नस्त्रिष्ठं वां सूरे दुहितारुहद्रथम् ॥५॥

त्रिः नः रयिम् वहतम् अश्विना युवम् त्रिः देवऽताता त्रिः उत अवतम् धियः त्रिः सौभगऽत्वम् त्रिः उत श्रवांसि नः त्रिऽस्थम् वाम् सूरे दुहिता आ रुहत् रथम् ॥

हे अश्विना अश्विनौ, युवम् युवाम् रयिम् धनं त्रिः त्रिवारं नः अस्मान् वहतम् प्रापयतम् । देवताता देवतातौ (स्वार्थिकः तातिल् प्रत्ययः) देवसदसीत्यर्थः त्रिः त्रिवारं आगच्छतमित्यध्याहारः । उत अपि च त्रिः धियः बुद्धीः अवतम् प्रवर्धयतं, सौभगत्वम्

सौभाग्यं अपि च त्रिः वहतम्। उत अपि च श्रवांसि दिव्यावेशश्रवणानि नः अस्मभ्यं त्रिः वहतम् । वाम् युवयोः त्रिष्ठम् त्रिचक्रावस्थितं रथम् सूरे सूर्यस्य (विभक्तिव्यत्ययः) दुहिता पुत्री आरुहत् आरूढवती। अश्विनोर्भार्या सूर्या तद्रथमारोहतीति प्रसिद्धम्। आश्विनतत्त्वविचारे चोपन्यस्तम्॥

त्रिष्ठम्–त्रिषु तिष्ठतीति, सस्य षत्वम्। सूरे–षू प्रेरणे, क्रन् प्रत्ययः। दुहिता–दुर्हिता दूरे हितेति यास्कः, दुह धातोर्निष्पन्नो दुहितृशब्दः, दोग्धि पितरौ दुहिता॥

षष्ठीमृचमाह—

**त्रिर्नो॑ अश्विना दि॒व्यानि॑ भेष॒जा त्रिः पार्थि॑वानि॒ त्रिरु॑ दत्तम॒द्भ्यः।**
**ओ॒मान॑ं शं॒योर्मम॑काय सू॒नवे॑ त्रि॒धातु॒ शर्म॑ वहतं शुभस्पती॥६॥**

**त्रिः नः अ॒श्वि॒ना॒ दि॒व्यानि॑ भे॒ष॒जा त्रिः पार्थि॑वानि त्रिः उ॒म् इति॑ द॒त्त॒म् अ॒त्ऽभ्यः ओ॒मान॑म्। शं॒ऽयोः मम॑काय सू॒नवे॑ त्रि॒ऽधा॒तु॒ शर्म॑ व॒ह॒त॒म् शु॒भः॒ प॒ती॒ इति॑॥**

हे अश्विना अश्विनौ, नः अस्मभ्यं दिव्यानि द्युस्थानानि भेषजा औषधानि त्रिः त्रिवारं दत्तम् प्रयच्छतम्। पार्थिवानि पृथिवीस्थानानि औषधानि त्रिः दत्तम्। तथा अद्भ्यः उ आप्यस्थानात् अन्तरिक्षादपि औषधानि त्रिः दत्तम्। हे शुभस्पती शोभनस्य सर्वस्य पालकौ, ममकाय मदीयाय सूनवे पुत्राय शंयोः बार्हस्पत्यस्य ऋषेः ओमानम् रक्षात्मकं सुखं दत्तम्। तथा त्रिधातु त्रयाणां अन्नप्राणमनसां धारकं (त्रयो धातवो धारकाः यस्मिन् तत्) शर्म शरणं सुखं वा वहतम् प्रापयतम्॥ ओमानम्–अवतेः। शुभस्पती–व्याख्यातम्॥

शंयुः ऐतिहासिकः। शं शान्तिसुखमात्मन इच्छतीति शंयुः, शान्तिसुखप्रतिष्ठाया निदर्शनभूत ऋषिः। तोक-तनय-अपत्य-प्रजा-पुत्रादिशब्दाः रहस्यार्थपक्षे यजमानस्य ऋषेः दिव्यसमृद्धिविसरा रहोविद्यासन्तानमहिम्ना प्रजासु प्राप्तप्रतिष्ठा इति बोध्यम्॥ भेषजानि नानाविधार्तिहराणि। "त्रिधातु" वातादिधातुत्रयशमनविषयमिति भैषज्यपक्षमाचक्षते सायणः। अस्याप्यन्तर्भावो भवतु नाम। नेदं धातुत्रयं वातादिकमात्रं, मन्त्रान्तरेषु त्रिधातुशब्दार्थमन्यथैवाचष्टे। मा भूदिह विस्तरः।

इति प्रथमस्य तृतीये चतुर्थो वर्गः

सप्तमीमृचमाह—

त्रिर्नो अश्विना यजता दिवेदिवे परि त्रिधातु पृथिवीमशायतम् ।
तिस्रो नासत्या रथ्या परावत आत्मेव वातः स्वसराणि गच्छतम् ॥७॥

त्रिः नः अश्विना यजता दिवेऽदिवे परि त्रिऽधातु पृथिवीम् अशाय-तम् तिस्रः नासत्या रथ्या पराऽवतः आत्माऽइव वातः स्वसराणि गच्छतम् ॥

हे अश्विना अश्विनौ, दिवेदिवे अहरहः यजता यजनीयौ युवां नः अस्मदीयां पृथिवीम् जागरितस्थानां अन्नमयक्षेत्रभूतां भूमिं, तत्सदृशीं चितिं, परि परितः त्रिः प्राप्य त्रिधातु त्रयो धातवः धारकाः कक्ष्यात्रयभूताः अन्नमयाद्याधारतत्त्वत्रयात्मकाः यस्मिन् कर्मणि तत् अशायतम् अशयातां, शयनं कुरुतम् । हे रथ्या नासत्या रथस्वामिनौ अश्विनौ, तिस्रः उक्तलक्षणां त्रिकक्ष्यायुक्तां पृथिवीमित्यर्थः परावतः परस्मात् स्थानादत्यन्तदूरात् गच्छतम् प्राप्नुतम् । तत्र दृष्टान्तः—आत्मा इव आत्मभूतः वातः प्राणवायुः स्वसराणि स्ववासस्थानानि यथा गच्छति तद्वत् । आत्मा जीवः प्राणात्मा यथा स्वीयं शरीरं प्रविशति तथा अश्विनौ परमाद्धाम्नः आगत्य त्रिकक्ष्यायुक्तं पार्थिवस्थानमस्मदीयं वेदिस्थानीयं शरीरं प्रविशताम् इति प्रार्थना ॥

यजता—यजतेः अतच् प्रत्ययः । अशायतम्—अशयातां, ह्रस्वदीर्घयोर्व्यत्ययः । रथ्या—रथार्हौ, यप्रत्ययः । नासत्या, स्वसराणि, व्याख्यातौ प्रथमानुवाके ॥

अष्टमीमृचमाह—

त्रिरश्विना सिन्धुभिः सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतम् ।
तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितम् ॥८॥

त्रिः अश्विना सिन्धुऽभिः सप्तमातृऽभिः त्रयः आऽहावाः त्रेधा हविः कृतम् तिस्रः पृथिवीः उपरि प्रवा दिवः नाकम् रक्षेथे इति द्युऽभिः अक्तुऽभिः हितम् ॥

हे अश्विना अश्विनौ, सप्तमातृभिः सप्ततत्त्वात्मिकाः मातृस्थानीयाः आपः यासां ताभिः सिन्धुभिः स्यन्दनशीलाभिः नदीभिः शोधयन्तीभिः त्रिः सोमसंस्कारः कृत इति शेषः । तथा

त्रयः त्रिसंख्याकाः आहावाः कूपस्थानीयाः सोमस्याधारपात्रभूताः सिद्धा भवन्तीति शेषः। त्रेधा त्रिभिः प्रकारैः, दैव्यसमयानुसारेण त्रिधा समर्पणीयं हविः सोमरूपं कृतं संपादितम्। तिस्रः पृथिवीः उपरि तिसृभ्यः भूर्भुवस्स्वरिति लोकत्रयवर्तिनीभ्यः भूमिभ्यः ऊर्ध्वं प्रवा प्रवौ प्रवन्तौ गच्छन्तौ युवां दिवः द्युसंबन्धिनं नाकम् स्वर्लोकभूतं ज्योतिरात्मानं सूर्यं रक्षेथे रक्षथः। कीदृशं नाकम्? द्युभिः अहोभिः अक्तुभिः रात्रिभिः च हितम् स्थापितम्॥ प्रवा–प्रुङ् गतौ प्रवेते गच्छत इति प्रवौ॥

सप्ततत्त्वात्मकचित्तजोवाहिनीभिः शक्तिभिः सर्वसत्त्वोपभोगसारभूतः संमदात्मा सोमः संस्कृतः। तदाधारपात्राणि अन्नमयादीनि कूपसदृशानि त्रीणि सिद्धानि। हे अश्विनौ, परिगृह्येमं मधुपातमौ युवां त्रैलोक्यादूर्ध्वं गच्छतम्। गत्वा च तत्र नः उत्तमं ज्योतिः रक्षतम्। तच्च सूर्याख्यं नाकपदवाच्यं 'स्वः' नैकेन अह्ना प्रतिष्ठापितम्। 'द्युभिः' अहोभिः प्रकाशदशा लक्षिताः। 'अक्तुभिः' रात्रिभिरप्रकाशदशाश्चेति बोध्यम्। 'अह्ना अनुवाकं अधीते' इतिवत् अपवर्गे तृतीया। पर्यायेण प्रकाशाप्रकाशदशाभिः अन्तर्यजनगताभिः निष्पादितं उत्तमं नाकपदं नः। तद्रक्ष्यतां युवाभ्यामस्मदर्थम् इति सूक्ष्मं तत्त्वम्॥

नवमीमृचमाह—

क्व१ त्री चक्रा त्रिवृतो रथस्य क्व१ त्रयो वंधुरो ये सनीळाः।
कदा योगो वाजिनो रासभस्य येन यज्ञं नासत्योपयाथः॥९॥

क्व त्री चक्रा त्रिऽवृतः रथस्य क्व त्रयः वंधुरः ये सऽनीळाः कदा योगः वाजिनः रासभस्य येन यज्ञम् नासत्या उपऽयाथः॥

हे नासत्या अश्विनौ, त्रिवृतः त्रिभिर्व्रियते वर्त्यते वा भागैः त्रिवृत् तस्य त्रिधाभूतस्य रथस्य युष्मदीयस्य त्री त्रीणि चक्रा चक्राणि क्व कुत्र सन्ति? अस्मदीयः सन्नाहो भवत्येव, युष्मदीयो रथस्तु अद्यापि न लक्ष्यते, क्षिप्रं कृपां कुरुतं, सवाहो रथ आगच्छतु इत्याह— ये सनीळाः नीडवत् रथस्योपरि निवेशनस्थानं तेन सह वर्तन्ते ते वन्धुरः नीडबन्धनाधारभूताः त्रयः आधारस्तम्भाः क्व कुत्र स्थिताः? कदा कस्मिन् काले वा वाजिनः अश्वस्थानीयस्य रासभस्य गर्दभस्य (रासभस्य आश्विनवाहत्वं प्रसिद्धम्) योगः रथसंयोजनं निष्पन्नमिति नास्माभिर्ज्ञायते। येन त्रिचक्रत्रिनीडरासभयोगवता रथेन यज्ञम् अस्मदीयं यजनं उपयाथः

युवां प्राप्नुथः। त्री, चक्रा-उभयोः शेर्लोपः छन्दसि। वन्धुरः-बन्धेरौणादिक उरप्रत्ययः, बस्य वत्वं छान्दसम् ॥

दशमीमृचमाह—

आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः।
युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति ॥१०॥

आ नासत्या गच्छतम् हूयते हविः मध्वः पिबतम् मधुऽपेभिः आसऽभिः युवोः हि पूर्वम् सविता उषसः रथम् ऋताय चित्रम् घृतऽवन्तम् इष्यति ॥

हे नासत्या अश्विनौ, आगच्छतम्, अस्माभिः हविः हूयते सोमरूपं हविर्दीयते। युवां च मधुपेभिः मधु पिबन्तीति मधुपानि तैः आसभिः आस्यैः, आस्यशब्दस्य आसन्नादेशः, मध्वः मधूनि (लिङ्गव्यत्ययः यणादेशश्छान्दसः) मधुराणि हवींषि सोमात्मकानि पिबतम्। हि यस्मात् सविता सर्वप्रेरको देवः सूर्यः उषसः पूर्वम् उषस उदयात् पुरा युवोः युवयोः रथम्, ऋताय सत्याय ज्योतिषे उत्तमं पदं प्रति, इष्यति प्रेरयति। कीदृशं रथम्? चित्रम् पूर्वोक्तलक्षणं त्रिचक्रादियुक्तं विचित्रं, घृतवन्तम् दीप्तिमन्तम्। यस्मादेवं प्रेरयति सूर्यः, तस्मात् सोमं शीघ्रं पिबतमिति संबन्धः ॥

एकादशीमृचमाह—

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥११॥

आ नासत्या त्रिऽभिः एकादशैः इह देवेभिः यातम् मधुऽपेयम् अश्विना प्र आयुः तारिष्टं निः रपांसि मृक्षतम् सेधतम् द्वेषः भवतम् सचाऽभुवा ॥

हे नासत्या अश्विना क्षिप्रगतिकौ अश्विदेवौ, युवां इह अत्रास्मद्यजने त्रिभिः त्रिसंख्याकैः एकादशैः एकादशात्मकवर्गत्रयगतैः देवेभिः देवैः सह मधुपेयम् सोमरूपमधुपानमभिलक्ष्य आयातम् आगच्छतम्। आयुः आयुष्यं प्रतारिष्टम् प्रवर्धयतम्। रपांसि दुरितानि निर्मृक्षतम् निःशेषेण शोधयतम्। द्वेषः द्वेषकारिणः सेधतम् प्रतिषिद्धान्

कुरुतम् । सचाभुवा अस्माभिः सहावस्थितौ भवतम् । अस्यामृचि एकादशात्मकवर्गत्रयगता देवा उक्ताः । एकैकस्मिन् स्थाने एकादश देवाः, पृथिव्यादिलोकत्रये त्रयस्त्रिंशद्देवा भवन्ति । तर्हि नेमे अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः प्रजापतिर्वषट्कारश्चेति पुराणप्रसिद्धा भवन्ति । क इमे एकादशेति निर्णयो दुष्करः ॥

एकादशैः–एकादशानां पूरणैः, तस्य पूरण इति डट् । मधुपेयम्–पा पाने, कर्मणि यत् । तारिष्टम्–तरतेर्लुङ्, छान्दसम्, लोडर्थे । मृक्षतम्–मृश आमर्शने, लोडर्थे लुङ् । द्वेषः–कर्तरि विच् । सचाभुवा–सचा सह भवत इति सचाभुवौ ॥

द्वादशीमृचमाह—

आ नो॑ अश्विना त्रि॒वृता॒ रथे॑ना॒र्वाञ्चं॑ र॒यिं व॑हतं सु॒वीर॑म् ।
शृ॒ण्वन्ता॑ वा॒मव॑से जोहवीमि वृ॒धे च॑ नो भवतं॒ वाज॑सातौ ॥१२॥

आ न॒ः अ॒श्वि॒ना॒ त्रि॒ऽवृता॑ रथे॑न अ॒र्वाञ्च॑म् र॒यिम् व॒ह॒त॒म् सु॒ऽवीर॑म् ।
शृ॒ण्वन्ता॑ वा॒म् अव॑से जो॒ह॒वी॒मि॒ वृ॒धे च॒ न॒ः भ॒व॒त॒म् वाज॑ऽसातौ ॥

हे अश्विना अश्विनौ, नः अस्माकं अर्वाञ्चम् अभिमुखं सुवीरम् शोभनवीरबलोपेतं रयिम् धनं त्रिवृता त्रिषु लोकेषु वर्तमानेन रथेन युवयोर्वहनसाधनेन आवहतम् आनीय प्रापयतम् । शृण्वन्ता अस्मदीयां वाचं शृण्वन्तौ वाम् युवां अवसे अस्मद्रक्षणार्थं जोहवीमि आह्वयामि नः अस्माकं वाजसातौ समृद्धिलाभे कर्मणि वृधे च वर्धनाय च भवतम् ॥ जोहवीमि–ह्वेञ् स्पर्धायां शब्दे च, यङ्लुकि लडुत्तमैकवचने ईडागमः । वृधे–वृधु वृद्धौ भावे क्विप् । वाजसातौ–वाजानां सातिर्यत्रेति बहुव्रीहिः ॥

इति प्रथमस्य तृतीये पञ्चमो वर्गः

अथ 'ह्वयाम्यग्निम्' इति एकादशर्चं पञ्चमं सूक्तं हिरण्यस्तूपस्यार्षम् । आद्या नवमी च जगतीच्छन्दस्के । शिष्टास्त्रिष्टुभः । कृत्स्नस्य सूक्तस्य सविता देवता । आद्याया अग्न्यादयो लिङ्गोक्तदेवताः ॥

तत्र प्रथमामृचमाह—

ह्वया॑म्य॒ग्निं प्र॑थ॒मं स्व॒स्तये॒ ह्वया॑मि मि॒त्रावरु॑णावि॒हाव॑से ।
ह्वया॑मि॒ रात्रीं॒ जग॑तो नि॒वेश॑नीं॒ ह्वया॑मि दे॒वं स॑वि॒तार॑मू॒तये॑ ॥१॥

ह्वया॑मि अ॒ग्निम् प्र॒थ॒मम् स्व॒स्तये॑ ह्वया॑मि मि॒त्रावरु॑णौ इ॒ह अव॑से
ह्वया॑मि रात्री॑म् जग॑तः नि॒ऽवेश॑नीम् ह्वया॑मि दे॒वम् स॒वि॒तार॑म् ऊ॒तये ॥

स्वस्तये (स्वस्ति अविनाशिनाम) अविनाशाय प्रथमम् आदौ अग्निम् ह्वयामि आह्वयामि। इह अत्र यजने अवसे रक्षणाय मित्रावरुणौ ह्वयामि। जगतः जङ्गमस्य लोकस्य निवेशनीम् स्थितिहेतुभूतां रात्रीम् अप्रकाशमयीं दिवसप्रतिद्वन्द्वभूतां अन्तर्निहितसर्वसृष्टिगर्भां जगदाविष्कारप्रयोजिकां अनाविष्कृतसमस्तजगदाधारभूतां रात्रिदेवतां ह्वयामि। ऊतये अस्मद्वर्धनाय सवितारम् देवम् सर्वप्रेरकं सूर्यं ज्योतिर्मयं ह्वयामि॥ रात्रीम्–रात्रेश्चाजसाविति ङीप्। निवेशनीम्–निविशन्तेऽस्यामिति निवेशनी, अधिकरणे ल्युट्॥

द्वितीयामृचमाह—

आ कृ॒ष्णेन॒ रज॑सा॒ वर्त॑मानो निवे॒शय॑न्न॒मृतं॒ मर्त्यं॑ च ।
हि॒र॒ण्यये॑न सवि॒ता रथे॒ना दे॒वो या॑ति॒ भुव॑नानि॒ पश्य॑न् ॥२॥

आ कृ॒ष्णेन॑ रज॑सा वर्त॑मानः नि॒ऽवे॒शय॑न् अ॒मृत॑म् मर्त्य॑म् च॒
हि॒र॒ण्यये॑न स॒वि॒ता रथे॑न आ दे॒वः या॒ति॒ भुव॑नानि पश्य॑न् ॥

कृष्णेन कृष्णवर्णेन रजसा लोकेन मार्गेण वर्तमानः उदितो गच्छन्, अमृतम् मरणरहितं देवं मर्त्यं च मनुष्यं च निवेशयन् यथास्थानमवस्थापयन् सविता देवः सर्वप्रेरको ज्योतिष्मान् सूर्यः हिरण्ययेन सुवर्णमयेन रथेन आयाति आगच्छति। किं कुर्वन्? भुवनानि पश्यन् सर्वं जगज्जातं अवेक्षमाणः, स्वेन ज्योतिषा प्रकाशयन्नित्यर्थः। इदमवधेयम्। अधोभुवनं "तमसा परिवीतम्"। तस्मादुदेति प्रज्ञानघनज्योतिः सूर्यः। कृष्णवर्णस्य प्रतिद्वन्द्वी हिरण्यवर्णः। मर्त्यं अमृतं च प्रकाश्य अवस्थापयति उदितः सुवर्णज्योतिरात्मा सूर्यः। तथा अवस्थापनेन उभयोः कर्म सुकरं भवति। मर्त्यस्य कार्यं यजनं, येन अमृतत्वलाभः। अमृतस्य देवजातस्य कार्यं तु मर्त्योपकारकत्वम्। एवं अमृतं मर्त्यं च निवेशयन्नुदितश्चरति सविता॥ हिरण्ययेन—हिरण्मयेन, मयटो मकारलोपः निपातितः। मर्त्यम्—मर्ते भवं, छन्दसि यत्। अमृतम्—मृतं मरणं नास्त्यस्येति बहुव्रीहिः॥

४

तृतीयामृचमाह—

यातिं देवः प्रवता यात्युद्वता यातिं शुभ्राभ्यां यजतो हरिभ्याम् ।
आ देवो याति सविता परावतोऽप विश्वा दुरिता बाधमानः ॥३॥

याति देवः प्रऽवता याति उत्ऽवता याति शुभ्राभ्याम् यजतः हरिऽभ्याम् आ देवः याति सविता पराऽवतः अप विश्वा दुःऽइता बाधमानः ॥

देवः द्योतमानः सूर्यः प्रवता प्रवणवता मार्गेण याति गच्छति, तथा उद्वता उद्गमवता मार्गेण याति, ऊर्ध्वस्थानादवरोहति, इतश्च ऊर्ध्वमारोहति। इदं च आरोहणावरोहणात्मकं यजमानानुग्रहार्थकं ऋतज्योतिर्गमनं अन्तर्यजने प्रसिद्धं। तथा यजतः यष्टव्यः स देवः शुभ्राभ्यां स्वच्छाभ्यां हरिभ्याम् अश्वाभ्यां याति गच्छति अस्मदनुग्रहार्थम्। सविता देवः सर्वलोकप्रेरकज्योतिःस्वरूपी विश्वा सर्वाणि दुरिता दुर्गतानि अपबाधमानः प्रध्वंसयन् परावतः परस्माद् द्युलोकात् आयाति आगच्छति ॥ प्रवता, उद्वता—उभयोः समानप्रक्रिया, वनधातोः क्विप्, अनुनासिकलोपः, ततः तुक्। यजतः—यजतेः अतच्। विश्वा, दुरिता—शेर्लोपः छन्दसि ॥

चतुर्थीमृचमाह—

अभीवृतं कृशनैर्विश्वरूपं हिरण्यशम्यं यजतो बृहन्तम् ।
आस्थाद्रथं सविता चित्रभानुः कृष्णा रजांसि तविषीं दधानः ॥४॥

अभिऽवृतम् कृशनैः विश्वऽरूपम् हिरण्यऽशम्यम् यजतः बृहन्तम् आ अस्थात् रथम् सविता चित्रऽभानुः कृष्णा रजांसि तविषीम् दधानः ॥

सविता रथम् आस्थात् आस्थितः सूर्यो रथमारूढवान्। कीदृशं रथम्? अभिवृतम् अभितो वर्तमानं, कृशनैः (कृशनं हिरण्यनाम) हिरण्यैः विश्वरूपम् विश्वानि सर्वाणि विविधानि रूपाणि यस्य तं, हिरण्मयरूपबाहुल्ययुक्तमित्यर्थः हिरण्यशम्यम् हिरण्मयशङ्कुयुक्तं, (शङ्कवः शम्याः) हिरण्मयशिल्पकर्मयुक्तमिति वा (शमी कर्मनाम) बृहन्तम् महान्तम्। कीदृशः सविता? यजतः यष्टव्यः, चित्रभानुः नानावर्णरश्मियुक्तः। किं कुर्वन्? कृष्णा कृष्णानि तमो-

मयानि रजांसि भुवनानि अभिलक्ष्य तमसोऽपहत्यै तविषीम् बलं प्रकाशात्मकं दधानः धारयमाणः ॥ अभीवृतम्—अभितो वर्तत इति अभीवृत् तं, नहिवृतीत्यादिना पूर्वपदस्य दीर्घत्वम् । तविषीम्—तवतिः सौत्रो धातुः ॥

पञ्चमीमृचमाह—

वि जनाञ्छ्यावाः शितिपादो अख्यन्रथं हिरण्यप्रउगं वहन्तः ।
शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ॥५॥
वि जनान् श्यावाः शितिऽपादः अख्यन् रथम् हिरण्यऽप्रउगम् वहन्तः
शश्वत् विशः सवितुः दैव्यस्य उपऽस्थे विश्वा भुवनानि तस्थुः ॥

श्यावाः एतन्नामकाः सूर्याश्वाः, कपिशवर्णाः ते च शितिपादः शितयः श्वेताः पादाः येषां ते श्वेतवर्णपादयुक्ताः हिरण्यप्रउगम् रथस्य युगबन्धनस्थानं प्रउगम्, हिरण्यं सुवर्णमयं प्रउगं यस्य तं रथम् वहन्तः जनान् प्रजाः व्यख्यन् विशेषेण प्रकाशितवन्तः । शश्वत् सदा विशः प्रजाः दैव्यस्य सर्वदेवसंबन्धिनः सवितुः प्रेरकस्य देवस्य उपस्थे समीपे स्थाने तस्थुः स्थिताः । तथा विश्वा सर्वाणि भुवनानि लोकाश्च तस्थुः । पूर्वमेव हिरण्यवर्णरथयुक्तशुभ्राश्वैः प्रापितप्रकाशाः विशः भुवनानि च सर्वप्रकाशमूलस्थानमुपेत्य स्थिताः । ये पुनर्लोका विशो न तथा लब्धप्रकाशाः, तेषां तमस्येवावस्थानं, तेषां लोकाश्च 'असूर्या नाम' ॥ शितिपादः—सुपां सुलुगिति जसः सु आदेशः । अख्यन्—ख्यातेर्लुङि च्लेरङादेशः । दैव्यस्य—देवाद्यञ्, तस्येदमित्यर्थे ॥

षष्ठीमृचमाह—

तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् ।
आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ॥६॥
तिस्रः द्यावः सवितुः द्वौ उपऽस्था एका यमस्य भुवने विराषाट्
आणिम् न रथ्यम् अमृता अधि तस्थुः इह ब्रवीतु यः उम् इति तत्
चिकेतत् ॥

6-26.4

तिस्रः द्यावः स्वर्गोपलक्षिताः नित्यप्रकाशाः लोकास्त्रयः सन्ति। तत्र द्वौ द्युलोकौ सवितुः प्रेरकस्य देवस्य उपस्था उपस्थौ समीपस्थितौ भवतः। एका तृतीया शिष्टा द्यौः, अद्वितीया वा यमस्य विश्वनियन्तुः सूर्यस्य भुवने लोके विराषाट् भवति। द्वे द्यावौ सूर्यस्य सन्निहिते, एका तु सूर्यभुवन एव भवति। सा च 'विराषाट्' उक्ता। विरान् गन्तॄन् सहते, प्रेताः पुरुषाः अन्तरिक्षमार्गेण गच्छन्ति पितृपतेर्यमस्य लोकमिति व्याचष्टे सायणः। विरशब्दस्य कापि प्रक्रिया च दत्ता। वेदे सकृदेव प्रयुक्तोऽयं शब्दः। संदिग्धा प्रक्रिया, संदिग्ध एव शब्दार्थः। वीरशब्दस्यैव विर इति ह्रस्व इकारः स्याद्वेति ऊहः। इदं तु निःसंशयं वक्तुं शक्यम्—अत्र यमस्य भुवने तिसॄणामेका द्यौरेव स्थिता यमश्च नियन्ता सवितृदेव एव। नायं विवस्वत्पुत्रः पितृपतिः प्रेतानां राजा। तिस्रः पृथिव्य इव तिस्रो द्यावः वेदे प्रसिद्धाः। ताश्च स्वर्लोकीयाः। तत्र द्युलोकौ सवितुः सामीप्यमेव भजेते, एकस्तु सवितुः सर्वनियन्तुर्भुवन एव तदात्मतया वर्तते। वीरैरेव पुण्यपुरुषैस्तत्र गन्तुं शक्यम्, ते च न निवर्तन्ते तत्र गत्वा। अन्यद् द्युलोकद्वयं सवितुः समीपवर्त्यैव, न तदात्मकतां भजते। एकत्रैव सायुज्यं, अन्यत्र द्वयोः सामीप्यमात्रम्। विरान् गन्तॄन् सहत इति सायणोक्त्यनुसारतः, वीरान् यजनेन साधनेन निःशेषार्पणशूरान् सहत इति वा प्रोच्यताम्। तिस्रो द्याव इत्यत्र अन्तरिक्षलोक एका द्यौरिति सायणीयम् प्रसिद्धा द्यौः पृथिवी च द्वे द्यावौ, सूर्येण प्रकाशितत्वात् द्युशब्दव्यवहार्यौ भवतः, सायणानुसारतः। कथं अन्तरिक्षं सूर्यप्रकाशवर्जितं स्यात्? अथ च पृथिवीनाम्नी द्यौः सूर्यस्य समीपवर्तिनी चेत्, अन्तरिक्षं समीपतरवर्ति प्रकाशितं च स्यात्। चिन्त्यतामिदं चिन्तकैः। यमः सवितैवेत्यभ्युपगतं चेत् कष्टं शिथिलितं भवति, अर्थश्च ऋजुः। रहस्यगर्भितेयमृगिति उत्तरार्धेन स्पष्टं भवति। अमृताः मृतिरहिताः देवाः, सवितारं अधि अधिगम्य तस्थुः स्थिताः। तत्र दृष्टान्तः—रथ्यम् आणिं न रथसंबन्धिनं 'आणिं' कीलविशेषं अक्षच्छिद्रे प्रक्षिप्तं आश्रित्य यथा रथस्तिष्ठति तद्वत्, सर्वे देवाः सवितारमाश्रित्यावतिष्ठन्ते। चरेषु सर्वेषु सवितुः स्थिरत्वं लक्षयति दृष्टान्तः। यः उ यश्च तत् सवितृरूपं चिकेतत् जानाति, सः इह अस्मिन् विषये रहस्यं ब्रवीतु भणतु, दुरधिगममिदं रहस्यमिति भावः॥ रथ्यम्—रथस्येदं, यत्। चिकेतत्—कित ज्ञाने, लेट्॥

इति प्रथमस्य तृतीये षष्ठो वर्गः

सप्तमीमृचमाह—

वि सुपर्णो अन्तरिक्षाण्यख्यद्गभीरवेपा असुरः सुनीथः ।
क्वे३दानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ॥७॥

वि सुऽपर्णः अन्तरिक्षाणि अख्यत् गभीरऽवेपाः असुरः सुऽनीथः क्व इदानीम् सूर्यः कः चिकेत कतमाम् द्याम् रश्मिः अस्य आ ततान ॥

सुपर्णः शोभनपतनः सूर्यरश्मिः अन्तरिक्षाणि ऊर्ध्वलोकस्थानानि व्यख्यत् प्रकाशितवान् । कीदृशः ? गभीरवेपाः गभीरं गम्भीरं दुरवगाहं वेपः दृष्टिवैचक्षण्यं यस्य सः, दुरवगाहप्रज्ञाचक्षुरयं सुपर्णः, न लौकिकः साधारणो रविरश्मिः । अत्र सायणस्तु वेपः कम्पनमिति मन्यते, अन्यत्र "गम्भीरवेपसः गम्भीरकर्माणः" (१०. ६२. ५) इत्याह । "वेपिष्ठो अङ्गिरसां ... विप्रः" (६. ११. ३) 'अतिशयेन स्तुतेः प्रेरयिता मेधावी' इति व्याख्यातम् । अन्यत्र पुनः वेपः कर्मनाम इति बहुधा सायणीयम् । पुनः कीदृशः ? असुरः महान् बलिष्ठः, सुनीथः शोभनप्रापणः, प्रकाशदानेन गन्तव्यं स्थानं सुखं प्रापयतीत्यर्थः । तथाविधरश्मिसंपन्नः सूर्यः इदानीम् क्व अधुना कुत्र स्थितः ? कः चिकेत को जानाति ? अस्य सूर्यस्य रश्मिः उक्तलक्षणः कतमाम् किंजातीयां द्याम् दिव्यभुवं आततान व्याप्तवान्, इदमपि दिव्यं रहस्यं दुर्ज्ञेयं मनुष्यस्येत्यर्थः ॥

असुरः—असु क्षेपणे, अस्यति शत्रूनित्यसुरः, उरन् । सुनीथः—णीञ् प्रापणे, क्थन् प्रत्ययः । चिकेत—कित ज्ञाने, लिट् । कतमाम्—किंशब्दात् डतमच् जातिपरिप्रश्ने ॥

अष्टमीमृचमाह—

अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून् ।
हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ॥८॥

अष्टौ वि अख्यत् ककुभः पृथिव्याः त्री धन्व योजना सप्त सिन्धून् हिरण्यऽअक्षः सविता देवः आ अगात् दधत् रत्ना दाशुषे वार्याणि ॥

अष्टौ ककुभः दिशो विदिशः सर्वाश्च व्यख्यत् प्रकाशितवान् सविता । तथा पृथिव्याः पृथिवीसंबन्धीनि, त्री त्रीणि योजना योजयितॄणि धन्व मरुप्रायाणि निर्जलानि

स्वतस्तेजःशक्तिवाहिनीभिरद्भिर्विरहितानि क्षेत्राणि लोकत्रयसंबन्धीनि अन्नप्राणमनस्तत्त्व-प्रधानानि व्यख्यत्। ईदृशे स्वभावतो नीरसे पार्थिवे क्षेत्रे, दिव्यशक्तिवाहिनीनां क्षरणाय सप्त सिन्धूनपि प्रकाशितवानित्याह, सप्त सिन्धून् व्यख्यत्। हिरण्याक्षः हिरण्य-ज्योतिर्विसारिचक्षुर्युक्तः देवः सविता आगात् आगतवान्। किं कुर्वन्? दाशुषे दत्त-वते यजमानाय वार्याणि वरणीयानि रत्नानि रमणीयानि रतिप्रदानि दिव्यानि दधत् दधानः प्रयच्छन्नित्यर्थः। अत्र पृथिव्या अष्टौ ककुभः व्यख्यत्, 'योजना' योजयितॄन् प्राणिनः व्यख्यत्, 'त्री धन्व' अन्तरिक्षोपलक्षितान् त्रीन् लोकान् व्यख्यत्, तथा सप्त सिन्धून् गङ्गादिनदीः व्यख्यत् इति सायणव्याख्या नेहाङ्गीक्रियते, सर्वथा न युक्ता॥

नवमीमृचमाह—

हिर॑ण्यपाणिः सवि॒ता विच॑र्षणिरु॒भे द्यावा॑पृथि॒वी अ॒न्तरी॑यते ।
अपामी॑वां॒ बाध॑ते॒ वेति॒ सूर्य॑म॒भि कृ॒ष्णेन॒ रज॑सा॒ द्याम्‌ृ॑णोति ॥९॥

हिर॑ण्यऽपाणिः स॒वि॒ता वि॒ऽच॑र्षणिः उ॒भे इति॑ द्यावा॑पृथि॒वी इति॑ अ॒न्तः ई॒य॒ते अप॑ अमी॑वाम् बाध॑ते वेति॑ सूर्य॑म् अ॒भि कृ॒ष्णेन॑ रज॑सा द्याम् ऋ॒णो॒ति॒ ॥

हिरण्यपाणिः सुवर्णमयहस्तः, विचर्षणिः विश्वस्य द्रष्टा सविता प्रेरको देवः उभे उभयोः द्यावापृथिवी द्यावापृथिव्योः अन्तः मध्ये ईयते गच्छति। अमीवाम् आर्तिम् रोगादिम् अपबाधते निरस्यति। सूर्यम् वेति उत्तमं ज्योतिःस्थानं सूर्याख्यं प्राप्नोति। प्रथमं यजमानस्योद्धाराय उदितः सविता तस्मै लोकत्रयसंबन्धिनि स्थानत्रये प्रकाशं दत्त्वा तत्र सर्वां बाधां निराकृत्य ततः परं उत्तमं पदं प्राप्नोति। तस्मान्नानुपपत्तिः 'सूर्यं वेति सविता' इत्युक्तौ। केन मार्गेण सविता गच्छति सूर्याख्यं द्युशब्दवाच्यं तदुत्तमं पदम्? कृष्णेन रजसा कृष्णवर्णेन तमसा व्याप्तेन मध्यमस्थानेन अन्तरिक्षेण, अधस्तनलोकत्रयेण वा द्याम् परमं आकाशं उत्तमज्योतिः अभ्यृणोति अभितः प्राप्नोति॥ ईयते—ईङ् गतौ। वेति—वी गतिव्याप्त्यादिषु। ऋणोति—ऋणु गतौ—तनादिः। अमीवाम्—अम रोग इत्यस्मात् ईडागमः वन् प्रत्ययश्च॥

दशमीमृचमाह—

हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ् ।
अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥१०॥

हिरण्यऽहस्तः असुरः सुऽनीथः सुऽमृळीकः स्वऽवान् यातु अर्वाङ्
अपऽसेधन् रक्षसः यातुऽधानान् अस्थात् देवः प्रतिऽदोषम् गृणानः ॥

हिरण्यहस्तः सुवर्णमयपाणिः असुरः महाबलः, शत्रूणां क्षेप्ता सुनीथः शोभनप्रापणः सुष्ठु नेता वा, सुमृळीकः सुष्ठु मृडयिता सुखयिता स्ववान् धनवान् अर्वाङ् अभिमुखः यातु प्राप्नोत्वस्मदीयं यजनं अस्मान्वा। प्रतिदोषम् दोषा दोषा प्रतिरात्रि गृणानः स्तूयमानः अस्थात् स्थितवान् अयं देवः। किं कुर्वन्? रक्षसः बाधकत्वेन रक्षा-निमित्तभूतान् यातुधानान् राक्षसविशेषान् अपसेधन् निराकुर्वन्॥ स्ववान्—स्वं धनं अस्येति। रक्षसः—रक्ष पालने इत्यस्मादपादाने। यातुधानान्—यत निकारोपस्कारयोः अस्मादुप्रत्ययः (यातुः) यातवो यातना एषु धीयन्त इति यातुधानाः। गृणानः—गृ शब्दे कर्मणि लटः शानच्, व्यत्ययेन श्ना॥

एकादशीमृचमाह—

ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥११॥

ये ते पन्थाः सवितरिति पूर्व्यासः अरेणवः सुऽकृताः अन्तरिक्षे
तेभिः नः अद्य पथिऽभिः सुऽगेभिः रक्ष च नः अधि च ब्रूहि देव ॥

हे सवितः, ते तव ये पन्थाः मार्गाः पूर्व्यासः पूर्वसिद्धाः अरेणवः निर्धूल्यः स्वच्छाः सुकृताः सुष्ठु संपादिताः अङ्गिरःप्रभृतिभिः पूर्वैर्ऋषिभिः ये पन्थानः समीचीन-तया अस्मदादीननुग्रहीतुं तवागमनाय प्रतिष्ठिताः सन्ति अन्तरिक्षे आकाशे, सुगेभिः सुखेन गन्तुं शक्यैः तेभिः पथिभिः मार्गैः अद्य इदानीं नः अस्मदर्थं एहि। एत्य हे देव, नः अस्मान् रक्ष च पालय, अधिब्रूहि च अस्मासु विषये यद्वक्तव्यं तद् ब्रूहि च॥

पन्थाः—जसः सुः। पूर्व्यासः—पूर्वैः कृताः, असुगागमः। सुगेभिः—सुष्ठु गच्छन्त्येषु इतिः सुगाः, अधिकरणे गमेर्डप्रत्ययः ॥

इति प्रथमस्य तृतीये सप्तमो वर्गः

इति प्रथमे मण्डले सप्तमोऽनुवाकः

अष्टमेऽनुवाके अष्टौ सूक्तानि। 'तत्र प्र वो यह्वम्' इति विंशत्यृचं प्रथमं सूक्तम्। घोरपुत्रः कण्व ऋषिः। अयुजो बृहत्यः, युजः सतोबृहत्यः। अग्निर्देवता ॥

तत्र प्रथमामृचमाह—

प्र वो॑ य॒ह्वं पु॑रू॒णां वि॒शां दे॑वय॒तीना॑म्।
अ॒ग्निं सू॒क्तेभि॒र्वचो॑भिरीमहे॒ यं सी॒मिद॒न्य ईळ॑ते ॥१॥

प्र व॒ः य॒ह्वम् पु॒रू॒णाम् वि॒शाम् दे॒व॒ऽय॒तीना॑म् अ॒ग्निम् सु॒ऽउ॒क्तेभिः॑ वचः॑ऽभिः ई॒म॒हे॒ यम् सी॒म् इत् अ॒न्ये ईळ॑ते ॥

देवकामान् प्रति ऋषेः संबोधनम्। देवयतीनाम् देवान् कामयमानानां पुरूणाम् बहूनां विशाम् प्रजारूपाणां वः युष्माकं अर्थे यह्वम् (महन्नाम) महान्तं अग्निम्, सूक्तेभिः वचोभिः शोभनवचनैर्मन्त्रात्मकैः ईमहे प्रार्थयामहे। यम् अग्निं सीम् सर्वतः अन्य इत् अन्येऽपि ऋषयः ईळते स्तुवन्ति तमग्निमिति पूर्वेण संबन्धः ॥ देवयतीनाम्—सुप आत्मनः क्यच्, शतरि ङीप्, अनित्यमागमशासनमिति नुमभावः। ईमहे—याच्ञाकर्म ॥

द्वितीयामृचमाह—

जना॑सो अ॒ग्निं द॑धिरे सहो॒वृधं॑ ह॒विष्म॑न्तो विधेम ते।
स त्वं नो॑ अ॒द्य सु॒मना॑ इ॒हावि॒ता भवा॒ वाजे॑षु सन्त्य ॥२॥

जना॑सः अ॒ग्निम् द॒धि॒रे स॒हः॒ऽवृध॑म् ह॒विष्म॑न्तः वि॒धे॒म॒ ते॒ सः त्वम् न॒ः अ॒द्य सु॒ऽमनाः॑ इ॒ह अ॒वि॒ता भ॒व वाजे॑षु स॒न्त्य ॥

जनासः देवभक्ता जनाः सहोवृधम् बलस्य वर्धनं अग्निं दधिरे धृतवन्तः। हविष्मन्तः हविर्युक्ता वयं सोमात्मकसर्वरसार्पणपराः ते त्वदर्थं, त्वां इति विभक्तिव्यत्ययो

वा विधेम परिचरेम, विधतिः परिचरणकर्मा, हविरर्पयेम वा। वाजेषु समृद्धिषु निमित्तभूतासु, हे सन्त्य दानशील अग्ने, स त्वम् तादृशस्त्वं अद्य इदानीं इह नः अस्मान् प्रति सुमनाः शोभनमनस्कः अविता वर्धयिता भव ॥ सहोवृधम्–वृधु वृद्धौ, अस्मादन्तर्भावितण्यन्तात् क्विप्। विधेम–विध विधाने, तुदादित्वात् शः। सन्त्य–षणु दाने, क्तिच्, सन्तिर्दाता, तत्र भवः, यत् ॥

तृतीयामृचमाह—

प्र त्वा दूतं वृणीमहे होतारं विश्ववेदसम्।
महस्ते सतो वि चरन्त्यर्चयो दिवि स्पृशन्ति भानवः ॥३॥

प्र त्वा दूतम् वृणीमहे होतारम् विश्वऽवेदसम् महः ते सतः वि चरन्ति अर्चयः दिवि स्पृशन्ति भानवः ॥

हे अग्ने, होतारम् आह्वातारं विश्ववेदसम् विश्वानि वेत्तीति विश्ववेदाः (असुन्) तं सर्वविदं दूतम् देवदूत्यवर्तिनं त्वाम् प्र वृणीमहे प्रकर्षेण वरयामः। महः महतः (अल्लोपः छन्दसि) सतः नित्यं वर्तमानस्य ते तव अर्चयः दीप्तयः ज्वालाः विचरन्ति विततं गच्छन्ति, विस्तृतप्रचारास्तव ज्वाला इत्यर्थः। तव भानवः रश्मयस्तु दिवि स्पृशन्ति ऊर्ध्वगाः द्युलोकं प्राप्नुवन्ति ॥

चतुर्थीमृचमाह—

देवासस्त्वा वरुणो मित्रो अर्यमा सन्दूतं प्रत्नमिन्धते।
विश्वं सो अग्ने जयति त्वया धनं यस्ते ददाश मर्त्यः ॥४॥

देवासः त्वा वरुणः मित्रः अर्यमा सम् दूतम् प्रत्नम् इन्धते विश्वम् सः अग्ने जयति त्वया धनम् यः ते ददाश मर्त्यः ॥

हे अग्ने, वरुणः मित्रः अर्यमा, एते त्रयो देवासः देवाः प्रत्नं पुरातनं दूतम् त्वा त्वाम् समिन्धते सम्यग्ज्वलयन्ति। यः मर्त्यः मनुष्यः ते तुभ्यं ददाश दत्तवान् भवति, सः त्वया सहायभूतेन सिद्धिं निष्पादयता देवेनेत्यर्थः। विश्वम् धनम् जयति

विश्वात्मकं धनं, सर्वविधमपि धनं वा जयति ॥ अर्यमा–अर्यान् अरणशीलान् उद्यमिनः पुरुषान् मिमीत इत्यर्यमा, श्वन्नुक्षन्नित्यादिना कनिन्प्रत्ययान्तो निपातितः । इन्धते–ञि इन्धी दीप्तौ । ददाश–दाशृ दाने ॥

पञ्चमीमृचमाह—

मन्द्रो होता गृहपतिरग्ने दूतो विशामसि ।
त्वे विश्वा सङ्गतानि व्रता ध्रुवा यानि देवा अकृण्वत ॥५॥

मन्द्रः होता गृहऽपतिः अग्ने दूतः विशाम् असि त्वे इति विश्वा सम्ऽगतानि व्रता ध्रुवा यानि देवाः अकृण्वत ॥

हे अग्ने, त्वं मन्द्रः मदकारकः हर्षयिता, होता आह्वाता देवानां, विशाम् प्रजानां गृहपतिः गृहस्य पालकः दूतः देवदूतः असि । त्वे त्वयि विश्वा सर्वाणि व्रता कर्माणि दैव्यानि सङ्गतानि सम्यग्युक्तानि भवन्ति । यानि ध्रुवा ध्रुवाणि स्थिराणि अव्यभिचारीणि देवाः अकृण्वत कृतवन्तः । सर्वदेववृन्दकार्याणि सुनियतानि अग्नौ प्रणिहितानि । अत एव अग्निमुखेन तानि सर्वाणि इन्द्रादीनां कर्माणि निष्पाद्यानि भवन्ति ॥ मन्द्रादयो व्याख्याताः । त्वे–सप्तम्येकवचनस्य शे आदेशः ॥

इति प्रथमस्य तृतीयेऽष्टमो वर्गः

षष्ठीमृचमाह—

त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः ।
स त्वं नो अद्य सुमना उतापरं यक्षि देवान्त्सुवीर्या ॥६॥

त्वे इति इत् अग्ने सुऽभगे यविष्ठ्य विश्वम् आ हूयते हविः सः त्वम् नः अद्य सुऽमनाः उत अपरम् यक्षि देवान् सुऽवीर्या ॥

हे यविष्ठ्य, युवतम, अग्ने, सुभगे सौभाग्यसंपन्ने त्वे इत् त्वय्येव विश्वम् सर्वं हविः देवेभ्यो देयं सोमरूपं द्रव्यं आहूयते सर्वतः हुतं भवति, प्रक्षिप्यत इत्यर्थः । स त्वं तादृशस्त्वं नः अस्मान् प्रति सुमनाः शोभनमनस्कः सन् अद्य इदानीं उत अपरम् इतः परमपि सुवीर्या शोभनवीर्योपेतान् देवान् यक्षि यज ॥ यविष्ठ्य–युवशब्दा-

दिष्ठन्, यकारोपजनश्छान्दसः। यक्षि—शपो लुक्, छन्दसि बहुलम्। सुवीर्या—सुपां सुलुगिति विभक्तेराकारः ॥

सप्तमीमृचमाह—

तं घेमित्था नमस्विन उप स्वराजमासते ।
होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अति स्रिधः ॥७॥

तम् घ ईम् इत्था नमस्विनः उप स्वऽराजम् आसते होत्राभिः अग्निम् मनुषः सम् इन्धते तितिर्वांसः अति स्रिधः ॥

हे अग्ने, नमस्विनः नमस्कारयुक्ताः सर्वथा प्रणताः प्रपन्ना इति यावत्, तादृशाः पुरुषाः स्वराजम् स्वतः राजमानं दीप्यमानं तं घ ईम् तमेवैनं त्वां इत्था अनेन प्रकारेण उपासते उपासीना आश्रयन्ते। स्रिधः शत्रून् अति तितिर्वांसः अतिशयेन तरन्तः मनुषः मनुष्याः अग्निम् त्वां होत्राभिः आह्वात्रीभिर्वाग्भिः समिन्धते सम्यग्दीपयन्ति। स्तोतुर्वाग्भिः हृदयस्थोऽग्निर्ज्वलितो भवति खलु। 'सप्त होत्राः वषट्कुर्वन्ती'ति प्राहुर्याज्ञिकाः। अन्तर्यागे सप्त वाचः 'सप्त वाणी'रिति प्रथिताः तत्त्वसप्तकसंबद्धा ज्ञेयाः ॥ नमस्विनः—मत्वर्थीयो विनिः। तितिर्वांसः—तरतेः तिरतेर्वा लिटि क्वसुः, अन्यत्सर्वं छान्दसम्। स्रिधः—स्रिधु शोषणे, क्विप् ॥

अष्टमीमृचमाह—

घ्नन्तो वृत्रमतरन्रोदसी अप उरु क्षयाय चक्रिरे । 1-31-1
भुवत्कण्वे वृषा द्युम्न्याहुतः क्रन्ददश्वो गविष्टिषु ॥८॥

घ्नन्तः वृत्रम् अतरन् रोदसी इति अपः उरु क्षयाय चक्रिरे भुवत् कण्वे वृषा द्युम्नी आऽहुतः क्रन्दत् अश्वः गोऽइष्टिषु ॥

हे अग्ने, घ्नन्तः प्रहरन्तः वृत्रम् अतरन् तीर्णवन्तः त्वत्साहाय्येन देवाः। ततः परं रोदसी द्यावापृथिव्यौ अपः अपां स्यन्दनभुवश्च क्षयाय निवासाय उरु विस्तृतं यथा तथा चक्रिरे कृतवन्तः। वृत्रवधात्परं द्यौः भूमिः आपश्च आवरणरहिताः बन्धा-

द्विमुक्ता वा यथासम्भवं कृताः। तेन तत्र सर्वत्र देवानां देवकामानां ऋषीणां वासयोग्यता जायते। भवान् कण्वे मेधाविनि यजमाने, एतन्नामनि मयि च, वृषा वर्षिता कामानां द्युम्नी दीप्तिमान्, गविष्टिषु गवेषणेषु गोलाभे निमित्तभूते क्रन्दत् क्रन्दन् शब्दं कुर्वन् अश्वः जेता विशिष्टक्रियाशक्तिः प्राणात्मा आहुतः सर्वतो होमयुक्तः, अत एव संतर्पितः भुवत् भवतु॥ घ्नन्तः—हन्तेः शतरि प्रथमाबहुवचनम्। भुवत्—भवतेर्लेट्। द्युम्नी—द्युम्नं प्रकाशो दीप्तिर्वा अस्येति। आहुतः—हु दानादनयोः कर्मणि क्तः। क्रन्दत्—शतरि नुमभावः छान्दसः। गविष्टिषु—गवां इष्टिः एषणं येषु कार्येषु, बहुव्रीहिः॥

वृत्रवधे निस्तमस्के द्यावापृथिव्यौ, बन्धमुक्ता आपः उपलब्धाश्च गावः—इतीदं सर्वं इह निर्दिष्टमवधेयम्। प्राणबलप्रभावादेव गवात्मकप्रज्ञारश्मिव्रजः सम्पादनीयः। तस्मादग्निरेव 'अश्व' इत्युक्तम्। उपमावाचकस्याश्रवणान्नेह दृष्टान्तः। पूर्वव्याख्यातारो 'गविष्टिषु अश्व इव' इत्याचक्षते॥

नवमीमृचमाह—

सं सी॑दस्व म॒हाँ अ॑सि॒ शोच॑स्व देव॒वीत॑मः।
वि धू॒मम॑ग्ने अरु॒षं मि॑येध्य सृ॒ज प्र॑शस्त द॒र्श॒तम्॥९॥

सम् सी॒द॒स्व॒ म॒हान् अ॒सि॒ शोच॑स्व दे॒व॒ऽवीत॑मः वि धू॒मम् अ॒ग्ने॒ अ॒रु॒षम् मि॒ये॒ध्य॒ सृ॒ज प्र॒ऽश॒स्त॒ द॒र्श॒तम्॥

हे अग्ने, सं सीदस्व सम्यगुपविश, महान् असि विभवैर्बृहन् भवसि। देववीतमः अतिशयेन देवान् कामयमानः सन् शोचस्व दीप्यस्व। हे मियेध्य मेधार्ह, प्रशस्त उत्कृष्ट, अरुषम् रोचमानं दर्शतम् दर्शनीयं धूमम् ऊर्जवेगेन वाष्पगतिप्रायो यः कम्पो जायते, तं वि सृज विशेषेण सम्पादय॥ अवयवार्थानुसारेण धूमशब्दस्य गूढोऽर्थः प्रागुक्तः (१.२७.११)। सीदस्व—व्यत्ययेन आत्मनेपदम्। महान्—संहितायां नकाराकारयोः रुत्वानुनासिकौ उक्तौ। शोचस्व—शुच दीप्तौ। देववीतमः—देवान् वेति गच्छति कामयते वा देववीः, क्विप्, अतिशयेन देववीः, तमप्। अरुषम्—व्याख्यातम् (१.६.१)। मियेध्य—अर्हार्थे यत्प्रत्ययः, मपर इयगागमश्छान्दसः॥

दशमीमृचमाह—

यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन ।
यं कण्वो मेध्यातिथिर्धनस्पृतं यं वृषा यमुपस्तुतः ॥१०॥

यम् त्वा देवासः मनवे दधुः इह यजिष्ठम् हव्यऽवाहन यम् कण्वः मेध्यऽअतिथिः धनऽस्पृतम् यम् वृषा यम् उपऽस्तुतः ॥

हे हव्यवाहन, हव्यं हविः वहति प्रापयति देवानिति हव्यवाहनः, तस्य संबोधनम्, अग्ने, मनवे मनुष्याणां मूलपुरुषाय, मन्त्रे पुरुषाय वा तदर्थं यजिष्ठम् यष्टृतमं यम् त्वाम् इह अत्र यजनशालायां अन्तरे देवासः सर्वे देवाः दधुः धृतवन्तः, यम् त्वां कण्वः मेधाविनां निदर्शनभूत ऋषिर्यजमानः मेध्यातिथिः मेध्याः अतिथयो यस्य सः कण्वपुत्रो वा धनस्पृतम् धनेन स्वीयेन दिव्येन अस्मान् स्पृणोति प्रीणयति धनस्पृत् तं तथाभूतं विधाय दधे। तथा वृषा इन्द्रः यं त्वामिह दधे, उपस्तुतः कोऽपि स्तोता यजमानः यं त्वां दधे, स त्वं संसीदस्वेति पूर्वेण संबन्धः॥ यजिष्ठम्—यष्टृशब्दादगुणवचनादपि इष्ठन्, छन्दसि। उपस्तुतः—कर्तरि क्तः। उपस्तुत इति एतन्नामकः पुरा प्रसिद्धो वा स्यात्, स्तोतॄणां दृष्टान्तभूतः॥

इति प्रथमस्य तृतीये नवमो वर्गः

एकादशीमृचमाह—

यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि ।
तस्य प्रेषो दीदियुस्तमिमा ऋचस्तमग्निं वर्धयामसि ॥११॥

यम् अग्निम् मेध्यऽअतिथिः कण्वः ईधे ऋतात् अधि तस्य प्र इषः दीदियुः तम् इमाः ऋचः तम् अग्निम् वर्धयामसि ॥

मेध्यातिथिः मेध्या अतिथयो यस्य सः कण्वः मेधाविप्रतिमानभूतः, ऋषिः ऋतादधि ऊर्ध्वं सत्यात् ज्योतिषः उत्तमस्थानात् आहृत्य यम् अग्निम् ईधे दीप्तवान् अत्र पृथिवीस्थाने मानुषे यजनगृहान्तरे, तस्य अग्नेः इषः प्रेरणाः प्रेरणात्मिकाः ज्वालाः प्रदीदियुः प्रकर्षेण दीप्यन्ते, ज्वलन्ति। तम् अग्निं इमाः इदानीमस्माभिः प्रयुज्यमानाः

ऋचः वर्धयन्ति इति पुरुषव्यत्ययेनाध्याहार्यः। तम् अग्निम् वयं वर्धयामसि वर्धयामः॥ दीदियुः—दीदेतिः छान्दसो धातुः दीप्तिकर्मा, लिटि उसि इयडादेशः। वर्धयामसि—मस इकारागमः॥

द्वादशीमृचमाह—

रायस्पूर्धि स्वधावोऽस्ति हि तेऽग्ने देवेष्वाप्यम्।
त्वं वाजस्य श्रुत्यस्य राजसि स नो मृळ महाँ असि ॥१२॥

रायः पूर्धि स्वधाऽवः अस्ति हि ते अग्ने देवेषु आप्यम् त्वम् वाजस्य श्रुत्यस्य राजसि सः नः मृळ महान् असि॥

हे स्वधावः स्वधारणसामर्थ्यरूपः स्वभावः स्वधा भवति, तेन सर्वपुष्टिप्रदस्वभावसमृद्धः स्वधावान् भवति, भूमार्थे मतुप्, छन्दसि मतुवसो रुत्वम्। हे पोषणसामग्रीसमृद्ध, अग्ने, रायः अस्माकं धनानि पूर्धि पूरय, पूर्णानि कुरु, मास्तु तेषां लोपः। हि यस्मात् ते तव देवेषु आप्यम् बन्धुत्वं, सख्यं अस्ति, तस्मात् 'रायस्पूर्धि' इति संबन्धः। त्वम् श्रुत्यस्य श्रवणीयस्य वाजस्य समृद्धिबलस्य राजसि राजा भवसि। सः तादृशस्त्वं नः अस्मान् मृळ सुखय। त्वं महान् असि प्रभावात् ऐश्वर्येण वा महांस्त्वम्॥ पूर्धि—पॄ पूरणे, छन्दसि हेर्धिरादेशः। अन्यच्च छान्दसम्। आप्यम्—आपनीयो बन्धुः आपिः, भवे छन्दसीति यत्। श्रुत्यस्य—श्रुतिशब्दाद् भवे यत्। मृळ—मृड सुखने, शस्य ङित्वाद् गुणाभावः॥

त्रयोदशीमृचमाह—

ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥१३॥

ऊर्ध्वः ऊम् इति सु नः ऊतये तिष्ठ देवः न सविता ऊर्ध्वः वाजस्य सनिता यत् अञ्जिऽभिः वाघत्ऽभिः विऽह्वयामहे॥

हे अग्ने ('यूपात्मकदारुनिष्ठाग्ने' इति याज्ञिकाः, तर्हि 'यजमानो वै यूपः' इति श्रुत्यनुसारेण यजमानशरीरस्थोऽग्निरिति व्याख्येयम्) नः अस्माकं ऊतये अभिवृद्धये

ऊर्ध्वः उन्नतः तिष्ठ। क इव? सविता देवः न यथा सविता उत्तमस्थानो ज्योतिरात्मा सर्वदा ऊर्ध्व एव स्थितः, स इव तिष्ठेति संबन्धः। ऊर्ध्वः उन्नतः सन् वाजस्य समृद्धेः सनिता दाता भव। यत् यस्मात् कारणात् अञ्जिभिः अञ्जद्भिः व्यञ्जद्भिः, गुप्तानि यानि दैव्यानि भवन्ति तानि व्यक्तानि कुर्वद्भिः वाघद्भिः स्तोतृभिः, तदुपलक्षितैः मन्त्रात्मकस्तोत्रवाग्भिः, वयं विह्वयामहे विविधं आह्वयामः, तस्मात् 'वाजस्य सनिता भवे'ति पूर्वेणान्वयः॥ ऊ षु णः–संहितायां इको दीर्घः, सस्य षत्वम्, नस्य णत्वम्। उ–पादपूरणः। सु सुतरां तिष्ठेति वा संबन्धनीयः। अञ्जिभिः–अञ्जू–व्यक्तिम्रक्षणकान्तिगतिषु, खनीत्यादिना इप्रत्ययः॥

चतुर्दशीमृचमाह—

ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः॥१४॥

ऊर्ध्वः नः पाहि अंहसः नि केतुना विश्वम् सम् अत्रिणम् दह
कृधि नः ऊर्ध्वान् चरथाय जीवसे विदाः देवेषु नः दुवः॥

हे अग्ने, ऊर्ध्वः उन्नतः सन् नः अस्मान् अंहसः दुरितात् केतुना दृष्टिरूपज्ञानेन नि पाहि नितरां रक्ष। विश्वम् सर्वं अत्रिणम् अत्तारं भक्षकं राक्षसं सं दह सम्यक् दग्धं कुरु, भस्मसात्कुर्वित्यर्थः। चरथाय चरणाय ऊर्ध्वं सञ्चाराय जीवसे ऊर्ध्वं जीवनाय, नः अस्मान् ऊर्ध्वान् उन्नतान् अत्रस्थान् इहैव ऊर्ध्वगान् कृधि कुरु। नः अस्माकं दुवः परिश्रमं देवेषु मध्ये विदाः लम्भय ज्ञापयेत्यर्थः॥ अत्रिणम्–अद भक्षणे, त्रिनिप्रत्ययः औणादिकः। कृधि–श्रुशृण्वादिभ्यः हेर्धिरादेशः, विकरणस्य लुक्, संहितायां दीर्घः। ऊर्ध्वान्–ऋत्सु विकल्पविधानात् नकारस्य रुत्वाभावः। चरथाय–भावे अथप्रत्ययः। जीवसे–तुमर्थे असेप्रत्ययः। विदाः–विद्लृ लाभे, अस्मादन्तर्भावितण्यर्थात् लेट्॥

पञ्चदशीमृचमाह—

पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः।
पाहि रीषत उत वा जिघांसतो बृहद्भानो यविष्ठ्य॥१५॥

पाहि नः अग्ने रक्षसः पाहि धूर्तेः अराव्णः पाहि रिषतः उत वा जिघांसतः बृहद्भानो इति बृहत्ऽभानो यविष्ठ्य ॥

हे बृहद्भानो, बृहन्तो भानवो रश्मयो यस्य तादृश, हे यविष्ठ्य युवतम, अग्ने, नः अस्मान् रक्षसः राक्षसादेः पाहि रक्ष। अराव्णः अदातुः धूर्तेः हिंसकात् लोभाददानशीलाद् द्रोग्धुर्हिंसतः मानुषरूपादमानुषात्पापात्मनो वा पाहि। रिषतः अविशेषेण हिंसकात् पाहि। उत वा अथवा जिघांसतः हन्तुमिच्छतो मानुषादमानुषाद्वा भूतात् पाहि ॥ धूर्तेः—धुर्वी हिंसार्थः, क्तिच्। अराव्णः—रा दाने, वनिप्। रिषतः, जिघांसतः, अन्ये च प्रागुक्ताः ॥

इति प्रथमस्य तृतीये दशमो वर्गः

षोडशीमृचमाह—

घनेव विष्वग्वि जह्यराव्णस्तपुर्जम्भ यो अस्मध्रुक्।
यो मर्त्यः शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत ॥१६॥

घनाऽइव विष्वक् वि जहि अराव्णः तपुःऽजम्भ यः अस्मऽध्रुक् यः मर्त्यः शिशीते अति अक्तुऽभिः मा नः सः रिपुः ईशत ॥

हे तपुर्जम्भ तपूंषि सन्तापकरा रश्मयः जम्भानि आयुधानि यस्य तादृशाग्ने, अराव्णः अदातॄन् वैरिणः विष्वक् सर्वतः घनेव घनेन दण्डादिनेव विजहि विशेषेण मारय। यः अन्योपि अस्मध्रुक् अस्मद्द्रोहकारी रिपुः शत्रुर्भवति, यः मर्त्यः यश्च मनुष्योऽपि रिपुः अक्तुभिः तमोभिः अप्रकाशैरदिव्यैः करणैः अतिशिशीते तनूकरोति अस्मानिति शेषः, स द्विविधोऽपि वैरी नः अस्मान् प्रति मा ईशत ईश्वरो मा भूत्, शक्तो मा भूत् ॥ घना इव—तृतीयायाः डादेशः। जहि—हन्तेर्लोट्। तपुर्जम्भ—तप सन्तापे, औणादिक उसिन् प्रत्ययान्तः 'तपुस्' शब्दः जंभ्यन्ते नाश्यन्ते शत्रव एभिरिति जम्भान्यायुधानि, अन्यदुक्तम्। अस्मध्रुक्—द्रुह जिघांसायां, क्विप्, हस्य घत्वम्। शिशीते—शो तनूकरणे, व्यत्ययेनात्मनेपदम्, विकरणस्य श्लुः। अक्तुभिः—अञ्जनादक्तुस्तमः, अत एव रात्रिपर्यायः, अत्र लक्षणया आयुधैरिति व्याख्यातं सायणीये ॥

सप्तदशीमृचमाह—

अग्निर्वव्ने सुवीर्यमग्निः कण्वाय सौभगम् ।
अग्निः प्रावन्मित्रोत मेध्यातिथिमग्निः साता उपस्तुतम् ॥१७॥

अग्निः वव्ने सुऽवीर्यम् अग्निः कण्वाय सौभगम् अग्निः प्र आवत् मित्रा उत मेध्यऽअतिथिम् अग्निः सातौ उपऽस्तुतम् ॥

अग्निः देवः सुवीर्यम् शोभनवीर्योपेतं वस्तु उद्दिश्य वव्ने याचितः । सः अग्निः कण्वाय प्रसिद्धाय महर्षये, मेधाविलक्षणाय यजमानाय वा सौभगम् सौभाग्यं प्रावत् प्रकर्षेण रक्षितवान् । तथा अग्निः मित्रा मित्राणि प्रावत् । उत अपि च मेध्यातिथिम् उक्तलक्षणं वा यजमानं, प्रसिद्धं कण्वपुत्रं ऋषिं प्रावत् । तथा अग्निः उपस्तुतम् प्रागुपन्यस्तं कमपि स्तोतारं, तन्नामकं च सातौ सम्पल्लाभे निमित्तभूते, प्रावत् ॥ वव्ने—वनु याचने, कर्मणि लिट्, उपधालोपश्छान्दसः । सौभगम्—सुभगान्मन्त्रे इत्युद्गात्रादिषु पाठात्, तस्य भाव इत्यर्थे अञ् ॥

अष्टादशीमृचमाह—

अग्निना तुर्वशं यदुं परावत उग्रादेवं हवामहे ।
अग्निर्नयन्नववास्त्वं बृहद्रथं तुर्वीतिं दस्यवे सहः ॥१८॥

अग्निना तुर्वशम् यदुम् पराऽवतः उग्रऽदेवम् हवामहे अग्निः नयत् नववऽवास्त्वम् बृहत्ऽरथम् तुर्वीतिम् दस्यवे सहः ॥

अग्निना देवेन सह अवस्थितान्, पूर्वान् प्राप्तदिव्यप्रतिष्ठान् अन्वर्थनामधेयान् अवयवार्थसदृशप्रभावप्रतिमानभूतान् व्यक्तिविशेषान् शक्तिविशेषान्वा वक्ष्यमाणान् हवामहे आह्वयामः अस्माकं साहाय्यमनुग्रहीतुम् । कान् ? तुर्वशम् यदुम् उग्रदेवम् इत्येतान् । कस्मात् स्थानात् ? परावतः परमात् स्थानात् । दस्यवे उपद्रवहेतोः क्षपयितुः यजनविघातकस्य, षष्ठ्यर्थे चतुर्थी, सहः साहयिता, अभिभविता अग्निः स्वकर्मनिर्वाहाय सहायान् पूर्वान् इह नयत् आनयतु । कान् ? नववास्त्वम्, बृहद्रथम् तुर्वीतिम् एतन्नामकान् ॥ तुर्वशः—तुर्वतेः क्षिप्रकारी जयवेगवान् । यदुः—तुर्वशेन सह अन्यत्रापि पठितः इन्द्रानुग्रहपात्रं भवति,

अविदितोऽवयवार्थः। उग्रदेवः—उग्रो देवः यस्यासौ। नववास्त्वः—नवं वास्तु यस्यासौ नूतनवासप्रतिष्ठः। बृहद्रथः—नववास्त्वेन सह अन्यत्रापि पठितः, नववास्त्वविशेषणं वा स्यात्। तुर्वीतिः—तुर्वशवत् तुर्वेतेः, क्षिप्रगमनः, जयज्वाली ॥

अत्र नववास्त्वनामको राजर्षिरिति सायणः। अन्यत्र सोऽसुर इति व्याचष्टे। तदनुरोधेन व्याख्या च भवति। तुर्वीतिवत् इन्द्रेणानुगृहीतः प्रतिमानभूतो नववस्त्व इति गृहीत्वा व्याख्या नः प्रवर्तते। सह तुर्वीतिना हि पठित इह नववास्त्वः। तर्हि कस्याः सिद्धेः प्रतिमानभूतोऽसौ ? अवयवार्थादवगन्तव्यः। नवं नूतनं वास्तु वेश्मभूपर्यायः यस्य सः नवीकृतशरीरात्मकवासभूसम्पन्न इत्यर्थः। तादृशं यजमानमृषिं इन्द्र इत उद्धृत्य ऊर्ध्वं नयन् रोचमानस्य ज्योतिर्लोकस्य दूरे पारे स्थापितवानित्यर्थको वैकुण्ठस्य मन्त्रवर्णो भवति (१०, ४९, ६)। उद्धरणसमये पीडा भवत्येव, सा च संस्करणार्था। 'दासं' क्षपयितारं वृत्रं वध्यं यथा अरुजं तथा अदासं भक्तं अपीडार्हमपि नववास्त्वं अपीडयम्। तथा निष्पीड्य 'दूरे पारे रजसो रोचनाकरम्' उज्ज्वलस्य लोकस्य दूरे पारे अस्थापयम् इति वैकुण्ठस्योक्तिः। अत्र सायणव्याख्या तु वृत्रमिव दासं नववास्त्वं अरुजम् इति भवति, अत एव यो राजर्षिरभूत् प्रथमे मण्डले स दशमेऽसुरः कृतः। एवं षष्ठेऽपि (६, २०, ११) नववास्त्वं असुरं 'परा' पराहत्य पित्रे 'नपातं' दत्तवानिति सायणः। 'परा नववास्त्वं अनुदेयं महे पित्रे ददाथ स्वं नपातम्' अत्र महान् पिता उत्तमो ज्योतिर्मयो लोकः तस्मै 'महे पित्रे' अनुदेयं अनुक्रमेण दातव्यं नववास्त्वं स्वं नपातं स्वभूतं पुत्रं 'परा ददाथ' परस्ताद्दत्तवानित्यर्थः। अयमर्थः वैकुण्ठस्य मन्त्रवर्णेन संगच्छते। तत्र "दूरे पारे रजसो रोचनाकरम्" इति स्थितम्, अत्र तु 'परा ददाथ' इति ॥ तस्मान्नायमसुरो नववास्त्व इति सिद्धम्। एवं सायणव्याख्यानुसारेण नववास्त्वमधिकृत्य यः पौर्वापर्यविरोध आपद्यते स परिहृतोऽस्मन्मन्त्रार्थविवरणे ॥

एकोनविंशीमृचमाह—

**नि त्वाम॑ग्ने॒ मनु॑र्दधे॒ ज्योति॒र्जना॑य॒ शश्व॑ते ।**
**दी॒दे॑थ॒ कण्व॑ ऋ॒तजा॑त उक्षि॒तो यं न॑म॒स्यन्ति॑ कृ॒ष्टयः॑ ॥१९॥**

नि त्वाम् अ॒ग्ने॒ मनुः॑ द॒धे॒ ज्योतिः॑ जना॑य शश्व॑ते दी॒दे॑थ॒ कण्वे॑ ऋ॒तऽजा॑तः उ॒क्षि॒तः यम् न॒म॒स्यन्ति॑ कृ॒ष्टयः॑ ॥

हे अग्ने, ज्योतिः ज्योतिःस्वरूपं त्वाम् शश्वते शाश्वताय जनाय सार्वकालिकाय जन्मिने, सर्वदा मनुष्यजातये तदनुग्रहायेत्यर्थः ('शश्वते वीर्याय शाश्वताय वीर्याय' इति सायणः (३. ३२. ५) अत्र बहुविधाय जनायेत्याह)। मनुः मन्ता मनुष्याणां मूलपुरुषो देवः निदधे स्थापयामास। हे अग्ने, ऋतजातः ऋतात् सत्यादुत्तमस्थानात् जातः उक्षितः सिक्तः, तर्पितः सोमरूपैर्हविर्भिः त्वं कण्वे मेधाविनि यजमान ऋषौ, अधुना मयि, दीदेथ दीप्तवानसि यम् कृष्टयः प्रयत्नवन्तो मनुष्याः नमस्यन्ति नमस्कुर्वन्ति ॥ दीदेथ—दीदेतिः छान्दसो धातुः। कृष्टयः—कृष विलेखने, क्तिच् ॥

विंशीमृचमाह—

त्वेषासो अग्नेरमवन्तो अर्चयो भीमासो न प्रतीतये।

रक्षस्विनः सदमिद्यातुमावतो विश्वं समत्रिणं दह ॥२०॥

त्वेषासः अग्नेः अमऽवन्तः अर्चयः भीमासः न प्रतिऽइतये रक्षस्विनः सदम् इत् यातुऽमावतः विश्वम् सम् अत्रिणम् दह ॥

अग्नेः देवस्य अर्चयः ज्वालाः त्वेषासः दीप्ताः अमवन्तः बलवन्तः भीमासः घोराः प्रतीतये न प्रत्येतुं प्रतिगन्तुं शत्रुभिः प्रत्यवस्थातुं न शक्या इत्यर्थः। तस्मात्, हे अग्ने रक्षस्विनः रक्षोबलयुक्तान् यातुमावतः यातुधानान् यजनविरोधिनः राक्षसविशेषान् सदमित् सदैव संदह भस्मीकुरु। तथा विश्वम् सर्वं अत्रिणम् भक्षकं शत्रुं संदह ॥

त्वेषासः—त्विष दीप्तौ, पचाद्यच्। अमवन्तः—अम रोगे अमति रुजति शत्रून् इति अमः बलं तद्वन्तः। रक्षस्विनः—रक्षः बलं रक्षन्त्यनेनेति व्युत्पत्तिं मन्यते सायणः। मत्वर्थीयो विनिः। रक्षांसि एषां सन्तीति युक्तम्। यातुमावतः—यातवो यातनाः तान् मिमते निर्मिमत इति यातुमाः राक्षसव्यापाराः, ततो मतुप्।

इति प्रथमस्य तृतीये एकादशो वर्गः

क्रीळं व इति पञ्चदशर्चं द्वितीयं सूक्तम्। मरुद्देवताकम्, गायत्रं, घोरपुत्रः कण्व ऋषिः ॥

तत्र प्रथमामृचमाह—

क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम्।

कण्वा अभि प्र गायत ॥१॥

क्रीळम् वः शर्धः मारुतम् अनर्वाणम् रथेऽशुभम् कण्वाः अभि प्र गायत ॥

हे कण्वाः, मेधाविनः, कण्ववंश्या वा, वः युष्माकं सम्बन्धिनं मारुतम् मरुतामिदं शर्धः बलं, मरुद्गणं अभि प्र गायत अभितः प्रकर्षेण स्तुत। कीदृशं शर्धः ? क्रीळम् विहरणशीलं अनर्वाणम् युद्धाश्वरहितं, (अर्वा युद्धाश्वः) रथेशुभम् रथे शोभमानम् ॥ क्रीळम्— क्रीडतेः पचाद्यच्। शर्धः—शृधु प्रसहने शर्धयत्यनेन शत्रूनिति शर्धो बलं सैन्यम्। रथे-शुभम्—रथे शोभत इति रथेशुप्, क्विप्, तत्पुरुषे कृति बहुलमित्यलुक् ॥ मरुतोऽधिकृत्य प्रागुक्तम्। मरुतश्चण्डवेगाः प्राणमयधामानः ऐन्द्रज्योतिर्बलदीपितानां धीवृत्तीनां दिव्यगति-विधायिनः प्रवातप्रायवेगाः देवविशेषा इत्युक्तम्। (१.६ सू; १.१९ सू; १.२३.१०)॥

द्वितीयामृचमाह—

ये पृषतीभिर्ऋष्टिभिः साकं वाशीभिरञ्जिभिः ।
अजायन्त स्वभानवः ॥२॥

ये पृषतीभिः ऋष्टिऽभिः साकम् वाशीभिः अञ्जिऽभिः अजायन्त स्वऽभानवः ॥

ये मरुतः पृषतीभिः विन्दुयुक्तमृगीभिः वाहनभूताभिः ऋष्टिभिः आयुधैः साकम् सह, तथा अञ्जिभिः अलङ्करणैः वाशीभिः वाग्भिः साकं स्वभानवः स्वकीयरश्मियुक्ता अजायन्त सम्पन्नाः। प्रागुक्तमरुद्गणतत्त्वग्रहणेन पृषत्यादीनां लाक्षणिकत्वं सुगमं स्यात्। पृषत्यः प्रवात-वेगचुश्चवः प्राणभूसमुद्भवं धीवृत्तीनां दिव्यगतिविधायिनं मरुद्गणं वहन्ति॥ ऋष्टयः (ऋषते-र्दर्शनार्थात्) दृष्टयः, हिंसार्थात् आयुधानि। प्रचण्डवेगानां मरुतां दृष्टय एव आयुधानि भवन्ति। अञ्जिभिः वाशीभिरित्यत्र, व्यञ्जयन्तीभिः वाग्भिरिति उभयोः सामानाधिकरण्यं ग्राह्यम् ॥ मरुतां प्रवातवेगोत्थाः शब्दा वाचः गहनानि गुप्तानि वा विभिद्य व्यञ्जयन्ति, प्रकाशयन्ति। अत एव मरुतः 'अञ्जिभिः वाशीभिः' साकं स्वभावोचितचित्प्रकाशरश्मिभिर्युक्ताः प्रादुर्भूताः ऋषेरन्तर्यागप्रवृत्तस्येति बोध्यम् ॥

तृतीयामृचमाह—

इहेव शृण्व एषां कशा हस्तेषु यद्वदान् ।
नि यामञ्चित्रमृञ्जते ॥३॥

इह॑ऽइव शृण्वे एषाम् कशाः हस्तेषु यत् वदान् नि यामन् चित्रम् ऋञ्जते ॥

एषाम् मरुतां हस्तेषु स्थिताः वशवर्तिन्य इत्यर्थः कशाः वाहनप्रेरणसाधनभूताः वाचः (कशा वाङ्नाम) यत् वदान् यद्वदन्ति तत् इहेव अत्रैव ध्यानमास्थितोऽहं शृण्वे शृणोमि । स वाग्विशेषः यामन् यामनि यात्रायां मदीयेऽस्मिन्नन्तर्यागे चित्रम् अद्भुतं, विविधं वा व्यापारं नि ऋञ्जते नितरां प्रसाधयति, यात्रायां विचित्रशोभावहो भवति श्रूयमाणः शब्दः ॥ शृण्वे—व्यत्ययेनात्मनेपदम् । वदान्—वदतेर्लेटि आडागमः ॥

चतुर्थीमृचमाह—

प्र वः शर्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे ।
देवत्तं ब्रह्म गायत ॥४॥

प्र वः शर्धाय घृष्वये त्वेषऽद्युम्नाय शुष्मिणे देवत्तम् ब्रह्म गायत ॥

हे कण्वाः, सखायो वा, वः युष्माकं संबन्धिने शर्धाय मरुतां गणाय देवत्तम् देवैर्दत्तं देवताप्रसादाल्लब्धं ब्रह्म मन्त्रं प्र गायत प्रकर्षेण स्तुत । कीदृशाय शर्धाय ? घृष्वये घर्षणयुक्ताय, त्वेषद्युम्नाय त्वेषं दीप्तं द्युम्नं द्योतनं, प्रकाशो, यस्य तं, (द्युम्नं यश इत्युक्त्या च प्रकाश एव लक्ष्यते) शुष्मिणे शुष्मं बलमस्येति शुष्मी, तस्मै ॥ घृष्वये—कृविघृष्वीत्यादिना क्विन्-प्रत्ययान्तो निपातितः । देवत्तम्—देवदत्तम्, छान्दसो दवर्णलोपः ॥

पञ्चमीमृचमाह—

प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतम् ।
जम्भे रसस्य वावृधे ॥५॥

प्र शंस गोषु अघ्न्यम् क्रीळम् यत् शर्धः मारुतम् जम्भे रसस्य ववृधे ॥

गोषु तेजस्सु अवस्थितं अघ्न्यम् अहन्तव्यं गां वृषवद्बलिनं, क्रीळम् विहारयुक्तं यत् मारुतं शर्धः यत् मरुद्गणात्मकं बलं वर्तते, तत् प्रशंस स्तुहि, हे यजमान, (अन्तरात्मनः संबोधनम्)। तच्च मारुतं शर्धः रसस्य आनन्दस्य सोमात्मकस्य जम्भे उदरे, आस्ये वा ववृधे वृद्धमभूत्॥ सांशयिकस्तृतीयः पादः। 'रसस्य गोक्षीररूपस्य सम्बन्धि तत्तेजः (शर्धः) जम्भे मुखे उदरे वा ववृधे' इति सायणः, मारुतं बलं गोक्षीरसंबन्धि तेजः किल, तच्च उदरे मुखे वा वृद्धमभूत् इति कथनेन विवक्षितं न ज्ञायते। अतिस्पष्टार्थं पादमिव व्याचष्टे। 'जम्भे जभि नाशने जम्भ्यते भक्ष्यते अनेनेति जम्भमास्यं करणे घञ्' इति सायणीयप्रक्रिया—जभिधातोर्भक्षणार्थो गौणोऽभ्युपगतश्चेत्, जम्भो जम्भनं भक्षणं, प्राशनमित्यपि वक्तुं युक्तम्। तर्हि 'रसस्य जम्भे वावृधे' सोमस्य पाने ववृधे—इति सुलभं स्यात् तात्पर्यम्। मारुतं शर्धः रसप्राशनेन वृद्धमभूत्। इदं च अन्तर्यजने मरुद्गणस्य प्रादुर्भावात्परं तस्य सोमरसेन वृद्धिर्भवतीत्युपपन्नं स्यात्॥

इति प्रथमस्य तृतीये द्वादशो वर्गः

षष्ठीमृचमाह—

(-165-)

को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः।
यत्सीमन्तं न धूनुथ ॥६॥

कः वः वर्षिष्ठः आ नरः दिवः च ग्मः च धूतयः यत् सीम् अन्तम् न धूनुथ ॥

दिवश्च द्युलोकस्यापि ग्मश्च भूलोकस्य च धूतयः कम्पयितारः, हे नरः नेतारः बलिनः, वः युष्माकं मध्ये आ समन्तात् वर्षिष्ठः वृद्धतमः कः? यत् यस्मात् सीम् सर्वतः अन्तम् न वाससोऽन्तमिव, वृक्षाग्रमिव (सायणः) धूनुथ चालयथ। सर्वेऽपि प्रबला लक्ष्यन्ते मरुतः अयं बलाधिकोऽयं नेति न शक्यं वदितुम्॥ 'अन्तं न' इत्यत्र सुखेन चालयितुं योग्यं वस्तु विवक्षितम्। तत् वस्त्राञ्चलं वृक्षाग्रं वा भवतु। ग्मः—ग्मा भूनाम, षष्ठ्येकवचने आकारलोपः। धूतयः—धूञ् कम्पने क्तिच्। धूनुथ—स्वादिभ्यः श्नुः॥

सप्तमीमृचमाह—

नि वो यामाय मानुषो दध्र उग्राय मन्यवे ।
जिहीत पर्वतो गिरिः ॥७॥

नि वः यामाय मानुषः दध्रे उग्राय मन्यवे जिहीत पर्वतः गिरिः ॥

हे मरुतः, वः युष्माकं यामाय गमनाय मानुषः मनुजः दैवतरहस्यवित् निदध्रे दृढं निक्षिप्तवान् आधारस्तम्भं इति शेषः। चण्डवेगेन मरुतां गमने अन्तर्यामिनो गृहं शरीररूपं पतेद्देति भिया, दाढर्याय शरीरगृहं स्तम्भाधारयुक्तं करोतीत्यर्थः। कीदृशाय यामाय? उग्राय तीव्राय, मन्यवे चालनमभिमन्यमानाय चण्डभावयुक्ताय। तथा हि पर्वतः बहुपर्वयुक्तः गिरिः सानुमान् जिहीत गच्छेत्। तादृशः प्रबलो युष्माकं वेगः॥ दध्रे—धृञ् अवस्थाने, लिट्। जिहीत—ओहाङ् गतौ लिङ्। पर्वतः—मत्वर्थीयः तप्प्रत्ययः॥

अष्टमीमृचमाह—

येषामज्मेषु पृथिवी जुजुर्वाँ इव विश्पतिः ।
भिया यामेषु रेजते ॥८॥

येषाम् अज्मेषु पृथिवी जुजुर्वान्ऽइव विश्पतिः भिया यामेषु रेजते ॥

येषाम् मरुतां यामेषु गमनेषु अज्मेषु क्षेपकेषु सत्सु, पृथिवी भूमिः भिया रेजते कम्पते, तत्र दृष्टान्तः—जुजुर्वान् इव विश्पतिः वयसा जीर्णः दुर्बलः प्रजानां पालको राजा यथा शत्रुभयात् कम्पते तद्वत्॥ अज्मेषु—अज गतिक्षेपणयोः, औणादिको मन्। जुजुर्वान्—जॄ वयोहानौ, लिटः क्वसुः, छन्दसि उत्वम्। यामेषु—यमधातोः घञ्॥

नवमीमृचमाह—

स्थिरं हि जानमेषां वयो मातुर्निरेतवे ।
यत्सीमनु द्विता शवः ॥९॥

स्थिरम् हि जानम् एषाम् वयः मातुः निःऽएतवे यत् सीम् अनु द्विता शवः ॥

एषां मरुतां जानम् जन्मस्थानं स्थिरम् हि ध्रुवं खलु। मातुः प्राणभुवोऽन्तरिक्षस्थानात् वयः पक्षिणः, इमे मरुतः, निरेतवे निर्गन्तुं समर्था इति शेषः। यत् यस्मात् कारणात् मरुतां शवः दीप्तं बलं सीम् सर्वतः द्विता द्वित्वेन अनु वर्तते, तस्मात् 'स्थिरं हि जानं' इति पूर्वेणान्वयः॥ मरुतः 'पृश्निमातरः' (१. २३. १०) इत्यत्र व्याख्यातमवधेयम्। मरुतां माता पृश्निश्चित्रवर्णा गौः। सङ्केतरहस्यमिदम्–प्राणशक्त्याविर्भावविलासक्षेत्रभूता अन्तर्हितधीवृत्तिरश्मिप्रह्वः अदितिवदखण्डाकारान्तरिक्षस्थाना विविधाविष्कारकलासम्पन्ना सत्त्वमयी शक्तिर्माता मरुतां चित्रवर्णा गौः पृश्निरुच्यते॥ मरुतां बलं द्विरूपं क्रियाज्ञानशक्त्यात्मकं, अत एव 'द्विता' इत्युक्तम्। धीवृत्तीनां पक्षिरूपत्वं वर्णयन्त्यन्यत्र च मन्त्राः। मरुतः प्राणात्मका अपि धीवृत्तिरूपतां प्राप्ता इत्युक्तमवधेयम्॥

दशमीमृचमाह—

उदु त्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत।
वाश्रा अभिज्ञु यातवे॥१०॥

उत् उम् इति त्ये सूनवः गिरः काष्ठाः अज्मेषु अत्नत वाश्राः अभिऽज्ञु यातवे॥

गिरः सूनवः वाचः प्रेरकाः, पूर्वप्रकृतस्य 'इहेव शृण्वे' 'साकं वाशीभिः' इति प्रस्तुतस्य वाग्रूपस्य शब्दस्योत्पादकाः त्ये ते मरुतः अज्मेषु स्वीयगमनेषु काष्ठाः अपः उदु उत्कर्षेणैव अत्नत अतनिषत विस्तारितवन्तः। तथा तननेन तेजसां रसादानं सुकरमित्याह। वाश्राः हम्भारवोपेताः गाः अभिज्ञु अभिमुखजानु यथा तथा यातवे यातुं प्रेरितवन्त इति शेषः। मरुतां घोषवाग्विभवं वर्णयति। शिखरिणोऽपि भग्ना भवन्तीति प्रागुक्तम्, अधुना आपो वितन्यन्ते गावश्च अपः आजानु प्रविश्य आददतामिति ताश्च प्रेर्यन्त इत्युक्तम्। इन्द्रभ्रातरो मरुतः प्रसिद्धाः। इन्द्रकृत्यानुरोधिनः सन्तः अप्सङ्केतितपोषणधारणादिक्रियाशक्तिविस्तरणेन गोसङ्केतितचिद्रश्मिविषयकरसपोषणप्रेरणार्था भवन्तीति बोध्यम्॥ सूनवः– षू प्रेरणे, सुवः किदिति नुप्रत्ययः। अत्नत–तनु विस्तारे, लङ्, विकरणस्य लुक्, छान्दसम्। अभिज्ञु–अभिगते जानुनी यस्य तत्। प्रसंभ्यां जानुनोः ज्ञुरादेशः। यातवे– तुमर्थे तवेन्प्रत्ययः॥

इति प्रथमस्य तृतीये त्रयोदशो वर्गः

एकादशीमृचमाह—

त्यं चिद्धा दीर्घं पृथुं मिहो नपातममृध्रम् ।
प्र च्यावयन्ति यामभिः ॥११॥

त्यम् चित् घ दीर्घम् पृथुम् मिहः नपातम् अमृध्रम् प्र च्यवयन्ति यामऽभिः ॥

त्यं चित् घ तमपि, योऽपामावरकः प्रसिद्धस्तमपि तमोघनं यामभिः गमनैः प्रच्यावयन्ति प्रकर्षेणाधो गमयन्ति अपो वर्षयन्ति, कीदृशम् ? दीर्घम् आयतम् पृथुम् विस्तृतं मिहो नपातम् मेहते सिञ्चतीति मिट् अपां आवारको मेघस्तमोघनस्तस्य नपातं सन्तानभूतं अमृध्रम्—केनाप्यनिष्पीडयम् ॥ नपातम्—न पातयितारमिति सायणः । प्रसिद्धमर्थं नप्तारं अङ्गीकुर्मः । अमृध्रम्—मृधु—उन्दने, हिंसार्थे च, औणादिको रक्प्रत्ययः । च्यवयन्ति—पदपाठे ह्रस्वश्छान्दसः ।

द्वादशीमृचमाह—

मरुतो यद्ध वो बलं जनाँ अचुच्यवीतन ।
गिरीँरचुच्यवीतन ॥१२॥

मरुतः यत् ह वः बलम् जनान् अचुच्यवीतन गिरीन् अचुच्यवीतन ॥

हे मरुतः, यत् ह यस्मादेव वः युष्माकं बलम् अस्ति, तस्मादेव कारणात् जनान् जन्मिनः अचुच्यवीतन प्रेरयत, तथा गिरीन् मेघान् उक्तलक्षणान् अपां विसृष्टये अचुच्यवीतन प्रेरयत ॥ अचुच्यवीतन—च्यवतेर्लिङि व्यत्ययेन परस्मैपदम्, तनबादेशः, शपः श्लुः । अन्यच्च छान्दसम् ॥

त्रयोदशीमृचमाह—

यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना ।
शृणोति कश्चिदेषाम् ॥१३॥

यत् ह यान्ति मरुतः सम् ह ब्रुवते अध्वन् आ शृणोति कः चित् एषाम् ॥

यत् ह यदा खलु मरुतः यान्ति गच्छन्ति, तदा आ सर्वतः अध्वन् मार्गे संब्रुवते ह एते मरुतः गणात्मकत्वात्, संभूय वाचं प्रयुञ्जत एव, शब्दं कुर्वन्तीत्यर्थः। स च शब्दः न सर्वेषां श्रवणगोचरो भवतीत्याह—एषाम् मरुतां तं शब्दं कश्चित् अन्तर्मुखः, विकसितान्तरिन्द्रियः अन्तर्यांजी शृणोति, नान्यः, साधारणश्चेदयं शब्दः सर्वेऽपि जनाः शृणुयुः, नायं तथा॥ अध्वन्—सप्तम्या लुक्॥

चतुर्दशीमृचमाह—

प्र यात शीभमाशुभिः सन्ति कण्वेषु वो दुवः।
तत्रो षु मादयाध्वै ॥१४॥

प्र यात शीभम् आशुऽभिः सन्ति कण्वेषु वः दुवः तत्रो इति सु मादयाध्वै ॥

हे मरुतः, आशुभिः वेगवद्भिः स्वीयवाहनैः शीभम् शीघ्रं क्षिप्रनाम प्रयात प्रस्थानं कुरुत अस्मदीययजनभुवं प्रति, वः युष्मदर्थं कण्वेषु मेधाविषु, एतन्नामकेष्वस्मासु वा दुवः दुवांसि परिश्रमात्मकानि कर्माणि सन्ति वर्तन्ते। तत्रो तत्र तेषु कण्वेषु, तेषु दुवःसु वा सु सुतरां मादयाध्वै तृप्ता भवत॥ आशुभिः—अशू व्याप्तौ उण्। मादयाध्वै—मद तृप्तियोगे चुरादिः आत्मनेपदी, लेट्याडागमः, एकारस्य ऐकारादेशः॥

पञ्चदशीमृचमाह—

अस्ति हि ष्मा मदाय वः स्मसि ष्मा वयमेषाम्।
विश्वं चिदायुर्जीवसे ॥१५॥

अस्ति हि स्म मदाय वः स्मसि स्म वयम् एषाम् विश्वम् चित् आयुः जीवसे ॥

हे मरुतः, वः युष्माकं मदाय तृप्तये अस्ति हि स्म अस्त्येव खलु यदस्माभिर्देयं तदित्यर्थः। एषाम् युष्माकं संबन्धिनः वयम् स्मसि स्म विद्यामहे खलु। विश्वम् चित् आयुः सर्वमप्यायुः जीवसे जीवितुं युष्मदाश्रयाः वयं स्म इति संबन्धः॥ स्म-संहितायां दीर्घः। स्मसि—इदन्तो मसिः।

इति प्रथमस्य तृतीये चतुर्दशो वर्गः

'कद्ध नूनम्' इति पञ्चदशर्चं तृतीयं सूक्तम्। घोरपुत्रः कण्व ऋषिः गायत्री छन्दः मरुतो देवताः॥

तत्र प्रथमामृचमाह—

कद्ध नूनं कधप्रियः पिता पुत्रं न हस्तयोः।
दधिध्वे वृक्तबर्हिषः ॥१॥

कत् ह नूनम् कधऽप्रियः पिता पुत्रम् न हस्तयोः दधिध्वे वृक्तऽबर्हिषः ॥

हे मरुतः, कत् ह कदा खलु वृक्तबर्हिषः वृक्तं बर्हिः आस्तीर्णं यैस्तानस्मान् कधप्रियः स्तुतिप्रीताः यूयं नूनम् अवश्यं हस्तयोः दधिध्वे हस्ते धारयथ! तत्र दृष्टान्तः— पिता पुत्रम् न यथा पिता पुत्रं हस्ते धारयति, तद्वत्॥ कत्—कदा आकारलोपः छान्दसः। कधप्रियः—कथया स्तुत्या प्रीणयन्ति, क्विप्, थस्य धः, ह्रस्वश्च छान्दसाः। दधिध्वे— छन्दसि वर्तमाने लिट्। वृक्तबर्हिषः मरुत इति सायणः, व्याख्यातं प्राक् (१. ३. ३— पृ. ११३. ११४)॥

द्वितीयामृचमाह—

क्व नूनं कद्वो अर्थं गन्ता दिवो न पृथिव्याः।
क्व वो गावो न रण्यन्ति ॥२॥

क्व नूनम् कत् वः अर्थम् गन्त दिवः न पृथिव्याः क्व वः गावः न रण्यन्ति ॥

हे मरुतः, नूनम् क्व यूयं इदानीं कुत्र गताः। कत् कदा वः युष्माकं अर्थम् गन्तव्यं स्थानं, प्राप्तव्यं वस्तु वा यूयं प्राप्नुथेति शेषः। दिवः द्युलोकात् गन्त गच्छत, पृथिव्याः न पृथिवीस्थानात् न गच्छत—अयमर्थः सायणानुसारी, दुर्घटो भावः। अथ नशब्दः उपमार्थीयश्चेत् क्लेशो नश्यति, सुगमो भवति मन्त्रार्थः। दिवो न द्युस्थानादिव पृथिव्याः पृथिवीस्थानात् गन्त गच्छत। मरुतां देवताविशेषत्वात् द्युलोकाद्गमनं सुलभम्, जडघननत्वात् प्रतिबन्धकबाहुल्यात् पृथिवीस्थानादाविर्भूय गमनं तु न तथा। तस्मादाह—

दिव इव पृथिव्याश्च स्थानात् गमनं सुखं भवतु युष्माकमिति । अथ कस्मिन् स्थाने युष्मानाह्वयन्ति आह्वातार इति प्रश्नेन तत् स्थानं ज्ञापयत अपरोक्षाः भवत चेति गमयति तृतीयः पादः । गावो न गावः दोहार्थमिव वः युष्मान् प्रति क्व कुत्र रण्यन्ति शब्दं कुर्वन्ति आह्वयन्ति स्तोतारः ॥ रण्यन्ति—रणतिः शब्दकर्मा, व्यत्ययेन श्यन् ॥

तृतीयामृचमाह—

क्व वः सुम्ना नव्यांसि मरुतः क्व सुविता ।
क्वो ३ विश्वानि सौभगा ॥३॥
क्व वः सुम्ना नव्यांसि मरुतः क्व सुविता क्वो १ इति विश्वानि सौभगा ॥

हे मरुतः, वः युष्माकं संबन्धीनि नव्यांसि नवतराणि सुम्ना सुम्नानि सुखानि सुखहेतुभूतानि वा, (धनानि इति पूर्वे) क्व कुत्र वर्तन्ते ? तथा सुविता सुवितानि दुरितप्रतिद्वन्द्वीनि भद्राणि क्व ? विश्वानि सौभगा सर्वाणि सौभाग्यानि ऐश्वर्याणि क्वो क्व, कुत्र वर्तन्ते ? एभिः सर्वैर्युक्ताः प्रसीदतेति भावः ॥

चतुर्थीमृचमाह—

यद्यूयं पृश्निमातरो मर्तासः स्यातन ।
स्तोता वो अमृतः स्यात् ॥४॥
यत् यूयम् पृश्निऽमातरः मर्तासः स्यातन स्तोता वः अमृतः स्यात् ॥

हे पृश्निमातरः पृश्निर्माता येषां ते मरुतः, यूयम् यत् यदा मर्तासः मनुष्याः स्यातन भवेत, तदा वः युष्माकं स्तोता यजमानः अमृतः स्यात् अमृतत्वं देवभावं प्राप्नुयात् । मरुतां मानुषे लब्धजन्मत्वं प्राग्विवृतम् (१. ६ सू.) ॥ पृश्निमातरः-व्याख्यातः । मर्तासः-म्रियतेस्तन्, आज्जसेरसुक् । स्यातन—अस्तेर्लिङि तस्य तनादेशः ॥

पञ्चमीमृचमाह—

मा वो मृगो न यवसे जरिता भूदजोष्यः ॥
पथा यमस्य गादुप ॥५॥

मा वः मृगः न यवसे जरिता भूत् अजोष्यः पथा यमस्य गात् उप ॥

हे मरुतः, वः युष्माकं संबन्धी जरिता स्तोता अजोष्यः अप्रीण्यः मा भूत्। तत्र दृष्टान्तः—मृगो न यवसे यथा भक्षणीये 'यवसे' तृणादौ मृगः पशुः अत्यन्तलोभात् अतृप्तः 'अजोष्यः' भवति, तथा मृग इव अत्यन्ततृषितो मा भूत् तव स्तोता भक्त इत्यर्थः। किं तु यमस्य नियन्तुर्देवस्य पथा मार्गेण उप गात् उप गच्छतु, नियन्त्रिततृष्णः सुप्रीतो भवतु। अयं चार्थः 'मो षु णः' इत्युत्तरयर्चा संगच्छते। सायणस्तु यथा तृणे भक्षणीये मृगः कदाचिदप्यसेव्यो न भवति, तथा स्तोतापि असेव्यो मा भूदिति व्याचष्टे, यमलोकसंबन्धिमार्गेण तस्य मरणं मा भूदिति च॥ पूर्वोत्तरसंबन्धो मृग्यः॥ अजोष्यः—जुषी प्रीतिसेवनयोः, कर्मणि ण्यत्। अन्यत् गतम्॥

इति प्रथमस्य तृतीये पञ्चदशो वर्गः

षष्ठीमृचमाह—

मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत्।
पदीष्ट तृष्णया सह ॥६॥

मो इति सु नः पराऽपरा निःऽऋतिः दुःऽहना वधीत् पदीष्ट तृष्णया सह ॥

हे मरुतः, नः अस्मान् निर्ऋतिः पापदेवता, मायात्मिका वा मो षु वधीत् सर्वथा हतान् मा कार्षीत्। कीदृशी निर्ऋतिः? परापरा अत्यन्तमुत्कृष्टा बलेन, अतिबलेत्यर्थः। दुर्हणा दुःखेन हन्तुं शक्या, केनापि हन्तुं दुःशक्या। सा तृष्णया सह बहुदोषप्रसूर्हि तृष्णा दुराशा, तस्मात् तया सह निर्ऋतिः पदीष्ट पततु विनश्यतु इति प्रार्थना। पूर्वया अस्मदुक्तार्थयर्चा सङ्गच्छत एवेदम्॥ मो षु णः—सुञः षत्वं, नस्य णः। पदीष्ट—पद गतौ आशीर्लिङि सलोपः छान्दसः॥

सप्तमीमृचमाह—

सत्यं त्वेषा अमवन्तो धन्वञ्चिदा रुद्रियासः।
मिहं कृण्वन्त्यवाताम् ॥७॥

सत्यम् त्वेषाः अमऽवन्तः धन्वन् चित् आ रुद्रियासः मिहम् कृण्वन्ति अवाताम् ॥

त्वेषाः दीप्ताः अमवन्तः बलवन्तः रुद्रियासः रुद्रस्य इमे सम्बन्धिनः (घोरकर्मत्वं मरुतां प्रसिद्धम्) मरुतः धन्वन् चित् आ मरुदेशेऽपि अवाताम् वायुरहितां मिहम् वृष्टिं कृण्वन्ति कुर्वन्ति। सत्यम् सत्यमेतत्। वृष्टिविघातकवायुवर्जं प्रचण्डवातवेगा अपि मरुतो वृष्टिं विदधते॥ 'धन्वनि' नीरसे जडे पार्थिवे शरीरेऽपि रसमादधत इति रहस्यम्॥ त्वेषादयो व्याख्याताः॥

अष्टमीमृचमाह—

वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति।
यदेषां वृष्टिरसर्जि ॥८॥

वाश्राऽइव विऽद्युत् मिमाति वत्सम् न माता सिसक्ति यत् एषाम् वृष्टिः असर्जि ॥

वाश्रा इव शब्दायमाना धेनुरिव विद्युत् विद्योतमाना तडित् मिमाति शब्दं करोति। माता वत्सं न धेनुर्वत्समिव सिषक्ति सेवते। यत् यस्मात् कारणात् एषाम् मरुतां संबन्धिनी वृष्टिः असर्जि विसृष्टा भवति। विद्युत्काले मेघगर्जनं ततो वृष्टिश्च मरुतां व्यापाराद्भवतीति स्थूलोऽर्थः स्यात्। अन्तर्यागे चलति, दशाविशेषेषु मध्यमस्थाने ज्योतिर्दर्शनं दिव्यनादश्रवणं रसवृष्टिश्च मरुत्प्रसादाद्भवन्तीति प्रोक्तं भवति॥ वाश्रेव—वाशृ शब्दे रक्प्रत्ययः। मिमाति—माङ् माने शब्दे च व्यत्ययेन परस्मैपदम्। सिषक्ति—षच समवाये (सेवायां च) शपः श्लुः। असर्जि—सृज विसर्गे, कर्मणि लुङ्॥

नवमीमृचमाह—

दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन।
यत्पृथिवीं व्युन्दन्ति ॥९॥

दिवा चित् तमः कृण्वन्ति पर्जन्येन उदऽवाहेन यत् पृथिवीम् विऽउन्दन्ति ॥

उदवाहेन उदकवाहिना पर्जन्येन मेघेन दिवा चित् दिनवेलायामपि तमः अन्धकारं कृण्वन्ति कुर्वन्ति। यत् यदा पृथिवीम् भूमिम् व्युन्दन्ति विशेषेण क्लेदयन्ति। तदा तमः कृण्वन्तीति पूर्वेणान्वयः। अन्तर्यागे सत्यपि नित्ये ज्योतिर्विलासे रसवर्षातिरेकात् क्वचित् विश्वं तमोवृतमिव भवति, इदं च तात्कालिकं मरुद्वेगकृत्यं कादाचित्कमिति बोध्यम्॥ उदवाहेन–उदकानि वहतीत्युदवाहः, उदकशब्दस्य उदभावः। व्युन्दन्ति–उन्दी क्लेदने रुधादिः॥

दशमीमृचमाह—

अध॑ स्व॒नान्म॒रुतां॒ विश्व॒मा सद्म॒ पार्थि॑वम्।
अरे॑जन्त॒ प्र मानु॑षाः ॥१०॥

अध॑ स्व॒नात् म॒रुता॑म् विश्व॑म् आ सद्म॑ पार्थि॑वम् अरे॑जन्त प्र मानु॑षाः॥

मरुताम् संबन्धिनः स्वनात् ध्वनेः अध अनन्तरं पार्थिवम् पृथिवीसंबन्धि विश्वं सर्वं सद्म गृहं आ समन्तात् अरेजतेति शेषः। मानुषाः मनुष्या अपि प्रारेजन्त प्रकर्षेण अकम्पन्त। अत्र सर्वं सद्म सर्वं यजमानशरीरं भवति। मानुषाः शरीरिणः जीवाः आत्मानः, न केवलं शरीरे कम्पः, अन्तरेऽपि। तथाविधो मारुतः क्रियावेगः॥ अध–थस्य धः छान्दसः। अरेजन्त–रेजृ कम्पने॥

इति प्रथमस्य तृतीये षोडशो वर्गः

एकादशीमृचमाह—

मरु॑तो वीळुपा॒णिभि॑श्चि॒त्रा रोध॑स्वती॒रनु॑।
या॒तेमखि॑द्रयामभिः ॥११॥

मरु॑तः वी॒ळु॒पा॒णि॒ऽभिः॑ चि॒त्राः रोध॑स्वतीः अनु॑ या॒त ई॒म् अखि॑द्रयामऽभिः॥

हे मरुतः, यूयं वीळुपाणिभिः वीळु बलनाम, वीळवः दृढाः पाणयः हस्ताः तैः सहिताः सन्तः, चित्राः दर्शनीयाः रोधस्वतीः अनु कूलयुक्ता नदीरनुलक्ष्य अखिद्रयामभिः अच्छिद्र-

गमनैः ईम् एनं यजमानमुद्दिश्य यात गच्छत। कूलस्थानीयं शरीरं नद्यः शक्तिधारा-वाहिन्यः प्राणस्थानाः॥ रोधस्वतीः-रुधिर् आवरणे, रुणद्धि स्रोत इति रोधः कूलं, असुन्। तद्वत्यः मतुपो वत्वम्। अखिद्रयामभिः-खिद दैन्ये रक्, खिद्रं यान्तीति खिद्र-यामानः तैः॥

(see Dayananda)

द्वादशीमृचमाह—

स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम्।
सुसंस्कृता अभीशवः ॥१२॥

स्थिराः वः सन्तु नेमयः रथाः अश्वासः एषाम् सुऽसंस्कृताः अभीशवः॥

हे मरुतः एषाम् वः युष्माकं नेमयः रथाङ्गवलयाः स्थिराः सन्तु। तथा रथाः अश्वासः अश्वाश्च स्थिराः सन्तु। अभीशवः-रथबन्धनरज्जवः सुसंस्कृताः परिष्कृताः सन्तु॥ अभीशवः-अभिदश्नोतेः उण्॥ अङ्गुलय इति निघण्टुः। किरणा इत्यर्थान्तरम्॥ रथयुक्ताश्वस्थानीयप्राणशक्तिविभवानां बन्धनरज्जुस्थानीयाः चिद्रश्मयः संस्कृताः स्वच्छाः सन्त्वित्युक्तं भवति॥

त्रयोदशीमृचमाह—

अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम्।
अग्निं मित्रं न दर्शतम् ॥१३॥

अच्छ वद तना गिरा जरायै ब्रह्मणः पतिम् अग्निम् मित्रम् न दर्शतम्।

ऋषेरात्मसंबोधनम्। मारुतेऽस्मिन् सूक्ते मरुद्गणस्वरूपप्रकाशनाय मरुत्सखस्य अग्नेः प्रसादात् वाक् प्रयुज्यतामित्याह-तना तनया देवतास्वरूपं विस्तारयन्त्या प्रकाशयन्त्या गिरा वाचा जरायै स्तुतये अग्निम् वाचोऽधिदैवतं अच्छ आभिमुख्येन वद ब्रूहि। कीदृशं अग्निम्? ब्रह्मणः पतिम् मन्त्रस्य पालकं अधिदैवतं, मित्रम् न दर्शतम् मित्रमिव प्रियसुहृदमिव दर्शनीयम्॥ अग्निः होतृवाग्विशिष्टोऽपि सामान्येन

सर्वस्याश्च वाचो देवता। तत्र वाग्विशेषस्य मन्त्रस्य तु सर्वदेवात्मकोऽग्निरेव ब्रह्मणस्पतिर्भवति। तना–तनु विस्तारे, पचाद्यच्, तना, तृतीयाया डादेशः॥

चतुर्दशीमृचमाह—

मिमीहि श्लोकमास्ये पर्जन्य इव ततनः।
गाय गायत्रमुक्थ्यम् ॥१४॥

मिमीहि श्लोकम् आस्ये पर्जन्यःऽइव ततनः गाय गायत्रम् उक्थ्यम्॥

अत्रापि ऋषेरात्मसंबोधनं युक्तम्। आस्ये स्वीये मुखे श्लोकम् स्तोत्रं मिमीहि मितं कुरु, यः श्लोकः हृदये प्रादुर्भूतः, तं मुखे आविष्कृतं धेहि। ततः तं पर्जन्य इव मेघः वर्षमिव ततनः विस्तारय। उक्थ्यम् शस्त्रयोग्यं मन्त्रविशेषं गायत्रम् गायत्रीच्छन्दस्कं गाय गानं कुरु॥ वाचा स्तोत्रोच्चारणस्य वैभवं देवताप्रीणनं भवतीति बोध्यम्॥ ततनः–तनु विस्तारे, लेट्, विकरणस्य श्लुः॥

पञ्चदशीमृचमाह—

वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम्।
अस्मे वृद्धा असन्निह ॥१५॥

वन्दस्व मारुतम् गणम् त्वेषम् पनस्युम् अर्किणम् अस्मे इति वृद्धाः असन् इह॥

सर्वोऽपि देवभक्तः प्रेर्यते। मारुतम् मरुत्संबन्धिनं गणम् समूहं वन्दस्व स्तुहि, नमस्कुरु वा। कीदृशं गणम्? त्वेषम् दीप्तम् पनस्युम् स्तोत्रकामम् अर्किणम् अर्कः दीप्तः स्तवः सोऽस्यास्तीति अर्की तम्। अस्मे अस्मासु इह अस्मिन्नन्तर्यागे वृद्धाः वृद्धिं प्राप्ताः असन् भवन्तु मरुतः॥ वन्दस्व–वदि अभिवादनस्तुत्योः। पनस्युम्–पन स्तुतौ असुन्, पनः स्तोत्रं आत्मन इच्छति पनस्युः, क्यच्।

इति प्रथमस्य तृतीये सप्तदशो वर्गः

'प्र यदित्थे'ति दशर्चं चतुर्थं सूक्तम्। घोरपुत्रः कण्व ऋषिः मरुतो देवता। अयुजो बृहत्यः, युजः सतोबृहत्यः॥

तत्र प्रथमामृचमाह—

प्र यदि॒त्था प॑रा॒वतः॑ शो॒चिर्न मान॒मस्य॑थ।
कस्य॒ क्रत्वा॑ मरुतः॒ कस्य॒ वर्प॑सा॒ कं या॑थ॒ कं ह॑ धूतयः॥१॥

प्र यत् इ॒त्था प॒राऽवतः॑ शो॒चिः न मान॑म् अस्य॑थ कस्य॑ क्रत्वा॑ म॒रु॒तः॒ कस्य॑ वर्प॑सा कम् या॒थ कम् ह॒ धू॒त॒यः॒॥

हे धूतयः कम्पनकारिणः मरुतः, यत् यदा शोचिर्न तेज इव मानम् मननीय बलं इति सायणः, मननीयां मतिं इति वयम्, परावतः दूरादूर्ध्वदेशात् इत्था इत्थं अन्तरिक्षात् प्रास्यथ प्रक्षिपथ, ऊर्ध्वदेशात् यथा ज्योतींषि तेजः प्रक्षिपन्ति भूमौ तथा मरुतः स्वमतिं सङ्कल्परूपां मर्त्ये प्रक्षिपन्ति। यदैवं कुरुथ, तदानीं कस्य पुरुषस्य क्रत्वा क्रतुना प्रज्ञाकर्मणा सङ्गच्छध्वे यूयम्? कस्य पुण्यपुरुषस्य वर्पसा रूपेण सङ्गताः भवथ? कम् याथ कं भक्तं प्राप्नुथ? कम् ह कं वा अनुग्रहास्पदं कुरुथ? मरुतः स्वमतिप्रक्षेपेण द्वारेण पुरुषस्य प्रज्ञाकर्मबलेन रूपेण च एकतां प्राप्य तमाविश्य अनुगृह्णन्ति। कस्य 'क्रत्वा' 'वर्पसा' इत्यत्र अन्यथाप्यध्याहारो घटते। कस्य क्रतुना प्रेरिताः कस्य 'वर्पसा' रूपव्यक्त्या आकृष्टाः युष्मदीयां मतिं प्रक्षिपथेति तात्पर्यमुपपद्यते। उभयथापि, 'कीदृशी स्यात् तस्य योग्यता यस्मिन् पुरुषे युष्मदीयः सङ्कल्पः पतेदि'ति तात्पर्यं भवति। 'मानम्' इत्यत्र विविधमाचक्षते वेदार्थचिन्तकाः। मन ज्ञाने इति धातोरेव निष्पन्नं मन्यते सायणः, मानं मननीयं बलमित्याह। मानं ज्ञानमिति कश्चित्। 'माङ् माने' इति धातोर्निष्पादयन्ति नव्यानामेके, आहुश्च मरुद्व्यापारस्य लक्ष्यभूतानां तरुगिरिशृङ्गादीनां मरुतां च अन्तरं कियद्दूरमिति निर्णये मरुतो 'मानम्' गन्तव्यदेशमानं कामपि मानरेखां प्रक्षिपन्तीति॥

द्वितीयामृचमाह—

स्थि॒रा वः॑ स॒न्त्वायु॑धा परा॒णुदे॑ वी॒ळू उ॒त प्र॑ति॒ष्कभे॑।
यु॒ष्माक॑मस्तु॒ तवि॑षी॒ पनी॑यसी॒ मा मर्त्य॑स्य मा॒यिनः॑॥२॥

स्थिरा वः सन्तु आयुधा पराऽनुदे वीळु उत प्रतिऽस्कभे
युष्माकम् अस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः ॥

हे मरुतः, वः युष्माकं आयुधा आयुधानि परा नुदे शत्रूणां अपनोदनाय स्थिरा सन्तु स्थिराणि भवन्तु। उत अपि च प्रतिष्कभे प्रतिबन्धाय, प्रत्यवरोधाय वीळु दृढानि सन्तु। युष्माकं संबन्धिनी तविषी बलं पनीयसी अतिशयेन स्तोतव्यं अस्तु। मायिनः माया कूटयुक्तिः तद्वतः मर्त्यस्य मनुष्यस्य 'तविषी पनीयसी' मा भूत् ॥ यद्यपि मानुषबलेन शत्रुजयः संभवेत् क्वचित् तथापि तत् मायारूय-अनृतप्रज्ञावशंवदत्वात् न स्पृहणीयं स्तुत्यं भवति, तादृशेन मानुषबलेन जयो मा भूत्, अतः तद्बलं स्तुत्यं न भवति, मा भूच्च। मारुतबलमेव जयप्रदं स्यात् अतः स्तुत्यम् ॥ स्थिरा, आयुधा– उभयोः शेर्लोपः। पराणुदे–णुद प्रेरणे, क्विप्, उपसर्गादसमासेऽपि णत्वम्। वीळु–वीळूनि, विभक्तेर्लुक्। प्रतिष्कभे–स्कम्भुः सौत्रो धातुः, संपदादिलक्षणो भावे क्विप्। पनीयसी– पनतिः स्तुतिकर्मा, औणादिकः असुन्, तत ईयसुनि टेर्लोपः, ङीप्। मायिनः– मत्वर्थीय इनिः ॥

तृतीयामृचमाह—

परा ह यत्स्थिरं हथ नरो वर्तयथा गुरु।
वि याथन वनिनः पृथिव्या व्याशाः पर्वतानाम् ॥३॥

परा ह यत् स्थिरं हथ नरः वर्तयथ गुरु वि याथन वनिनः पृथिव्याः वि आशाः पर्वतानाम् ॥

हे नरः नेतारः मरुतः, यत् यदा स्थिरम् वस्तु परा ह हथ पराहतं कुरुथ, गुरु दुर्भरं अलघु वस्तु वर्तयथ प्रेरयथ तदा पृथिव्याः संबन्धिनः वनिनः वनवतः पृथिवीरुहान् वियाथन वियुज्य गच्छथ, पर्वतानाम् सानुमतां आशाः पार्श्वदिशः वि वियाथनेति संबन्धः। अत्र 'स्थिरं' वृक्षादिकं 'गुरु' पाषाणादिकं इति मन्यते सायणः। मन्त्रे तु रहस्यार्थद्योतनाय 'इदं स्थिरं इदं गुरु' इत्यनुक्त्वा, उत्तरार्धे च स्थिरा पृथिवी गुरवः पर्वता इति पूर्वार्धश्रुतस्थिरगुरुशब्दक्रमानुसारेण बोधनीयतया विसृष्टम्। एवं मरुतां पृथिव्यां अन्नमयभुवि प्रवेशः अन्नमयशरीरसंभूतानां वननीयानां सुखानां द्वारेण

साध्यो भवति। ततः उपर्युपरि अवस्थितैः पर्वभिः युक्तानां पर्वतानां आशाः प्रदेशाः अन्नमयप्राणमयाद्याः ऊर्ध्वकक्ष्याः मरुद्भिः प्रवेश्या भवन्ति॥ याथन–थनादेशः। अन्ये च गताः॥

चतुर्थीमृचमाह—

नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां रिशादसः।
युष्माकमस्तु तविषी तना युजा रुद्रासो नू चिदाधृषे॥४॥

नहि वः शत्रुः विविदे अधि द्यवि न भूम्याम् रिशादसः
युष्माकम् अस्तु तविषी तना युजा रुद्रासः नु चित् आऽधृषे॥

हे रिशादसः हिंसकानां भक्षकाः शत्रुनाशनाः, अधि द्यवि द्युलोकस्योपरि वः युष्माकं शत्रुः नहि विविदे न विद्यते, न भूम्याम् पृथिव्यामपि शत्रुर्न भवति। हे रुद्रासः रुद्राः रुद्रसंबन्धिनः भयङ्कराः मरुतः, युष्माकम् गणात्मकानां सर्वेषां युजा योगेन परस्परसङ्गत्या आधृषे सर्वतः शत्रूणां धर्षणाय तविषी बलं नु चित् क्षिप्रमेव तना अस्तु विस्तृता भवतु, प्रकटिता भवतु॥ विविदे–विद सत्तायाम्–लडर्थे लिट्। रिशादसः–रिश हिंसायाम्, अद भक्षणे, रिशान् अदन्ति इति रिशादसः, असुन्। युजा–युजिर् योगे–क्विन् ऋत्विगित्यादिना। अन्ये गताः॥

पञ्चमीमृचमाह—

प्र वेपयन्ति पर्वतान्वि विञ्चन्ति वनस्पतीन्।
प्रो आरत मरुतो दुर्मदा इव देवासः सर्वया विशा॥५॥

प्र वेपयन्ति पर्वतान् वि विञ्चन्ति वनस्पतीन् प्रो इति आरत
मरुतः दुर्मदाःऽइव देवासः सर्वया विशा॥

पर्वतान् पृथिवीभृतः, रहस्यपक्षे प्रागुक्तलक्षणान् प्रवेपयन्ति प्रकर्षेण कम्पयन्ति मरुतः। तथा वनस्पतीन् महीरुहान् विविञ्चन्ति वियुक्तान् सान्तरान् कुर्वन्ति। अत्रापि 'परा ह यत्' इत्यत्र व्याख्यातमनुसंधेयम्। हे देवासः, देवाः, हे मरुतः, सर्वया विशा प्रजया संयुक्ताः भूत्वा यूयं दुर्मदा इव मदोन्मत्ता स्वेच्छाविहारिण इव प्रो आरत प्रकर्षेण गच्छत।

युष्माभिर्युक्तैः सर्वैरपि भक्तैः सह परिश्रमं कुरुत प्राप्तव्यं प्रति। वेपयन्ति–वेपृ कम्पने–हेतुमण्णिच्। आरत–अर्तेः छन्दसि लोडर्थे लुङ्॥

इति प्रथमस्य तृतीयेऽष्टादशो वर्गः

षष्ठीमृचमाह—

उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः।
आ वो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः॥६॥

उपो इति रथेषु पृषतीः अयुग्ध्वम् प्रष्टिः वहति रोहितः आ वः यामाय पृथिवी चित् अश्रोत् अबीभयन्त मानुषाः॥

हे मरुतः, रथेषु युष्मदीयेषु पृषतीः बिन्दुमृगीः वाहनभूताः उपो समीपमेव अयुग्ध्वम् यूयं योजितवन्तः। प्रष्टिः वाहनत्रययुगमध्यवर्ती रोहितः लोहितवर्णः मृगविशेषः वहति नयति रथम्। वः युष्माकं यामाय गमनाय पृथिवी चित् पृथिव्यपि पृथुला भूमिः सर्वापि (अन्तरिक्षमिति एके) आ आभिमुख्येन अश्रोत् अशृणोत् शृणोति, तव गमनं प्रतिपालयतीत्यर्थः। मानुषाः पृथ्वीवर्तिनः पुरुषाः अबीभयन्त स्वयं भीताः भीतिमन्येषां जनयन्ति, तथाविधं वः प्रचण्डगमनम्। पृषत्यो मरुद्वाहा उक्ताः। अत्र तेषां त्रित्वं शरीरप्राणमनस्तत्त्वापेक्षयेति बोध्यम्। रोहितो लोहितवर्णस्तु क्रियाभोगसमर्थप्राणतत्त्व-द्योतकं ज्ञेयम्। एवं मरुतां रोहितवाहत्वे प्राधान्यम् भवति॥ उपो–निपातद्वयम्। अयुग्ध्वम्–युजिर् योगे लुङ्। यामाय–यमेर्भावे घञ्। अश्रोत्–शृणोतेः, विकरणस्य लुक् छन्दसि। अबीभयन्त–ञिभी भये, ण्यन्ताल्लुङ्। भीस्म्योर्हेतुभये इत्यात्मनेपदम्॥

सप्तमीमृचमाह—

आ वो मक्षू तनाय कं रुद्रा अवो वृणीमहे।
गन्ता नूनं नोऽवसा यथा पुरेत्था कण्वाय बिभ्युषे॥७॥

आ वः मक्षु तनाय कम् रुद्राः अवः वृणीमहे गन्त नूनम् नः अवसा यथा पुरा इत्था कण्वाय बिभ्युषे॥

हे रुद्राः रुद्रसंबन्धिनो रुद्रकर्माणो मरुतः, तनाय कम् विततये, अस्मद्विकास-विसरायेत्यर्थः (स्थूलपक्षे तनयाय पुत्राय) वः युष्मत्संबन्धि अवः वर्धनं आ सर्वतः मक्षु क्षिप्रं वृणीमहे प्रार्थयामः। यथा येन प्रकारेण पुरा पूर्वं नः अस्माकं अवसा वर्धनेन निमित्तभूतेन यूयं प्राप्तवन्तः, इत्था अनेन प्रकारेण बिभ्युषे भीतियुक्ताय कण्वाय मेधाविने यजमानाय, एतन्नाम्ने मह्यं, अनुग्रहार्थं नूनं गन्त प्राप्नुत॥ मक्षु—संहितायां दीर्घः। तनाय—तनु विस्तारे पचाद्यच्। कम् पादपूरणः। रुद्राः—रोदयन्ति शत्रून्, रोदेर्णिलुक् चेति रक्प्रत्ययः। गन्त—लोटि शपो लुक्, तबादेशः अनुनासिकलोपा-भावश्च छान्दसाः। बिभ्युषे—बिभेतेर्लिटः क्वसुः॥

अष्टमीमृचमाह—

युष्मेषितो मरुतो मर्त्यैषित आ यो नो अभ्व ईषते।
वि तं युयोत शवसा व्योजसा वि युष्माकाभिरूतिभिः॥८॥
युष्माऽइषितः मरुतः मर्त्यऽइषितः आ यः नः अभ्वः ईषते वि तम् युयोत शवसा वि ओजसा वि युष्माकाभिः ऊतिऽभिः॥

हे मरुतः, यः यः कोऽपि अभ्वः बलेन महान्, बलाधिकः, युष्मेषितः युष्माभिः इषितः प्रेरितः, मर्त्यैषितः मर्त्यैः मनुष्यैः प्रेरितो वा नः अस्मान् आ ईषते आभि-मुख्येन प्राप्नोति अभिगच्छतीत्यर्थः, तम् युष्मदीयबलदर्पितं मानुषबलदर्पितं वा बलिनं शवसा दीप्तेन विसारिणा बलेन वि युयोत वियुक्तं कुरुत। तथा ओजसा देहधारणेन प्राणबलेन वि युयोत। तथा युष्माकाभिः ऊतिभिः युष्मदीयाभिः रक्षाभिश्च वि युयोत॥ सायणस्तु अभ्वः शत्रुः पृषोदरादित्वादभिमतरूपस्वरसिद्धिरिति मन्यते। तथा भक्तैः सह योद्धुं भक्तान् प्रत्येकमभिभवितुं वा मरुतो देवाः शत्रून् प्रेषयन्तीति द्योतितो भावो वैरस्यमावहति अतात्त्विकश्च भवति। मनुष्यतपसो बिभ्यति असूयया देवाः, मनुष्याणां परीक्षायै शत्रून् प्रेषयन्तीत्यादिपुराणकथासु तत्त्वं किमपि अस्ति वेति नेह विचार्यते। इदं त्विह वक्तव्यम्। वेदे मरुतः अन्ये वा देवाः मनुष्यस्य सखायः, न शत्रवः, नापि प्रेषयन्ति शत्रुं मनुष्याभिभूत्यै॥ युष्मेषितः—युष्माभिरिषितः सुब्लुकि प्रत्यय-लक्षणेन युष्मदस्मदोरनादेशे इत्यात्वम्। अभ्वः—अभ्वं महन्नाम। ईषते—ईष गतिहिंसा-

दर्शनेषु। युयोत—यु मिश्रणे अमिश्रणे च, लोण्मध्यमबहुवचने शपः श्लुः, तबादेशश्च। युष्माकाभिः—युष्मच्छब्दस्य युष्माकादेशः, ङीप् वृद्धिश्च न भवतः छान्दसत्वात्॥

नवमीमृचमाह—

असामि हि प्रयज्यवः कण्वं दद प्रचेतसः।
असामिभिर्मरुत आ न ऊतिभिर्गन्ता वृष्टिं न विद्युतः॥९॥
असामि हि प्रऽयज्यवः कण्वम् दद प्रऽचेतसः असामिऽभिः मरुतः आ नः ऊतिऽभिः गन्त वृष्टिम् न विऽद्युतः॥

असामि हि संपूर्णमेव यथा भवति तथा प्रयज्यवः प्रकर्षेण यष्टव्याः प्रचेतसः प्रकृष्टज्ञानाः हे मरुतः, कण्वं मेधाविनं, एतन्नामकं वा दद धारयत। असामिभिः पूर्णाभिः ऊतिभिः रक्षाभिः नः अस्मान् प्रति आगन्त आगच्छत। तत्र दृष्टान्तः—विद्युतः वृष्टिम् न विद्युतो यथा वृष्टिं गच्छन्ति तथा यूयमस्मान् आगच्छत॥ असामि—न सामि, सामि अर्धम्। प्रयज्यवः—यजेः कर्मणि युप्रत्ययः। दद—डुदाञ् दाने लोण्मध्यमबहुवचनस्य लङात्मनेपदप्रथमपुरुषबहुवचनादेशः, आकारलोपादयश्छान्दसाः। प्रचेतसः—प्रकृष्टं चेतो येषां ते। विद्युतः—विद्योतते इति विद्युत्॥

दशमीमृचमाह—

असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः।
ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम्॥१०॥
असामि ओजः बिभृथ सुऽदानवः असामि धूतयः शवः ऋषिऽद्विषे मरुतः परिऽमन्यवे इषुम् न सृजत द्विषम्॥

हे सुदानवः शोभनदानयुक्ताः, मरुतः, असामि पूर्णं ओजः बलं देहे प्राणधारणसमर्थं, बिभृथ धारयथ। हे धूतयः कम्पनकारिणः, असामि पूर्णं शवः अमितो विसारि दीप्तं बलं बिभृथ। परिमन्यवे क्रोधपरिवृताय ऋषिद्विषे मन्त्रदर्शिषु द्वेषं कुर्वते राक्षसादये मानुषाय वा जनाय, तद्विघातार्थं द्विषम् शत्रुं प्रतिवैरिणं सृजत मुञ्चत क्षिपत। इषुम् न बाणमिव, यथा शत्रोरुपरि बाणं मुञ्चति कश्चित् तद्वत्॥ परिमन्यवे—प्रादिसमासः, मन्युना परिवृतः।

इषुम्—इष गतौ, इष्यति गच्छति लक्ष्यं प्रति। सृजत—सृज विसर्गे। द्विषम्—क्विप्। अन्ये गताः॥

इति प्रथमस्य तृतीय एकोनविंशो वर्गः

अथाष्टमेऽनुवाके पञ्चमं सूक्तम् अष्टर्चं कण्वास्यार्षं बार्हतम्। ब्रह्मणस्पतिदेवताकम्। युजः सतोबृहत्यः अयुजो बृहत्यः॥

उत्तिष्ठेत्यस्य सूक्तस्य व्याख्यानात् प्राक् सूक्ते प्रतिपादितां देवतामधिकृत्यैषद् वक्तव्यम्। यद्यपि वेदे वर्णितानां देवतानां नामानि अग्नीन्द्रादीनि पुराणेष्वपि स्मृतानि भवन्ति, तथापि उभयत्र देवतानां स्वरूपव्यापारस्थानादिष्वस्ति भेदः। पुराणेषु वेदप्रतिपादितदेवतानां नामान्यपि कानिचिन्न श्रुतानि भवन्ति, येषामेकं ब्रह्मणस्पतिनाम। ब्रह्मणस्पतेस्तत्त्वे विचार्य निर्धारिते, अयमेव देवो वेषान्तरेण तान्त्रिकयोगप्रथितो मूलाधारचक्रनिलयः परस्या वाचोऽधिदैवतं गणपतिरित्याराधितो योगिभिरित्यसंशयं भवति, एष एव गजमुख ओंकारवदनो गणपतिर्बहुनामतां भजते पुराणेषु। वेदवर्णितमिमं देवमधिकृत्य बहुभ्यो मन्त्रवर्णेभ्यः उद्धृतं सारांशमत्र ब्रूमहे॥

ब्रह्मणस्पतिः बृहस्पतिः ब्रह्मेति त्रीणि नामान्येकां देवतां निर्दिशन्ति। ब्रह्मा इति पुँल्लिङ्गोऽपि शब्दः प्रयुज्यते 'यस्मिन् ब्रह्मा राजनि पूर्व एति' (४.५०.८) 'ब्रह्मणे राजा तमवन्ति देवाः' (४.५०.९)। वेदे ब्रह्म मन्त्रो मन्त्रात्मिका वाक् च भवति। ब्रह्मा तस्याधिदैवतं भवति। वाक् स्रष्ट्री विश्वस्य। नैषा आद्या तीव्रतमस्पन्दना ब्रह्माण्डस्य स्थूलजगत एव निष्पादिका भवति, अपितु पिण्डाण्डे हृदये सहजावबोधाद्वा अन्तर्दृष्टस्यार्थस्य शब्दात्मकतया आविष्कर्त्री शक्तिश्च भवति। एवमाविष्कृतोऽर्थवान् नादात्मा ब्रह्मपदवेदनीयो वेदमन्त्रो भवति। सैषा मूलतश्छान्दसी वाक्, यया विश्वसृष्टिरन्तर्बहिर्वा प्रवर्तिता अनवरतं प्रवर्त्यते चेति बोध्यम्॥

यद्यपि चिन्मयमखण्डं "स्वधया तदेकं" वेदान्तभाषया सच्चिदानन्दं परस्मिन् धामनि स्वतः स्वस्मिंश्च विश्वं धत्त एव, तथापि इह अधस्ताद्रात्रिपदलक्षिते तमसि तमसा गूढं सर्वं प्रविश्य अचित्तिभ्यः अद्भ्यः 'अप्रकेतात् सलिलात्' जगतोऽर्थानां उद्धाराय व्यक्ततामापाद्य स्वमहिम्ना यथायथं तानूर्ध्वमुन्नेतुमाविष्कुरुते। तथा आविष्कर्तृ प्रज्ञानं 'सुप्रकेतम्' च वागात्मकं ब्रह्मशब्देन व्यवह्रियते। एवं इत ऊर्ध्वं उद्यन्नात्मा यः पुरुषो मनुष्ये वर्तते, स ब्रह्मा भवति देवस्य पुरुषस्यैव तथा ज्ञानशक्त्यात्मना आविर्भावात्। देवस्यायं विभवो

यदा ब्रह्मशब्दवाच्यो भवति, तदा वाचा प्रकाशितां पुरुषगतां दिव्यशक्तिं स विशेषतो लक्षयति, न तु वाचो वैशिष्ट्यस्य प्राधान्यम्। एष एव आविष्कृतस्वात्मशक्तिः दिव्यविभवः अन्नमयादूर्ध्वभूकक्ष्याः प्रबोधवति मानुषे पुरुषे निर्मिमाणो ब्रह्माख्या छन्दोमयी वागुच्यते, अस्याः पतिः बृहस्पतिः। अनेन नाम्ना स्रष्ट्र्याः वाचः प्राधान्यं विशेषतो द्योत्यते, न तु तथा सा देवशक्तिः या प्रागुक्तलक्षणाया वाचोऽप्याधारभूता भवति। एवमेक एव देवताविशेषः अंशद्वयबोधकत्वाद्धेतोः ब्रह्मबृहस्पतिनामभ्यां निर्दिश्यते। यद्यप्युभयोः सूक्ष्मो विशेषस्तत्र तत्र मन्त्रार्थानुसन्धानबलाद् ग्राह्यः, तथापि उभयोः एकदेवतानिर्देशकत्वं संबन्धकत्वं समीकरणं च ब्रह्मणस्पतौ युक्तानि भवन्ति। एवं त्रीणि नामानि एकां देवतामभिदधत इत्युक्तं भवति। इदं च गार्त्समदसूक्तेभ्यः (२. २३–२६) वामदेवसूक्तात् (४. ५०) अन्यतश्च स्फुटं लक्ष्यते॥

बृहस्पतिर्ज्ञानगर्भितां छन्दोमयीं वाचं उत्तमपदप्रज्ञानाविष्कारिणीं देवेभ्यो दिशति विशेषत इन्द्राय। स हि राजा त्रैलोक्यदेवानां, दैव्यस्य मनसस्पतिः। आङ्गिरसतत्त्वविचारे बृहस्पतेराङ्गिरसत्वं इन्द्रसाहाय्यकारित्वादीनि चोक्तानि। यथा अग्नेर्मरुतां इन्द्रस्य वा कार्येषु अङ्गिरसां मुख्यं कृत्यं वर्ण्यते वेदेषु, तथा बृहस्पतेरपीति ज्ञेयम्। अत एव मरुद्भिः इन्द्रेण वा सह ब्रह्मणस्पतिः स्तूयते। ब्रह्मणस्पतिर्मनुष्यस्यान्तः सुप्त इव स्थितः उत्थानाय प्रार्थ्यते प्रथममस्मिन् सूक्ते, तस्य ब्रह्मणो महिम्ना मरुतः सूनृता वाक् इन्द्रो मित्रो वरुणोऽर्यमेत्यन्ये च देवा यजमाने लब्धस्थाना भवन्ति, यजमानस्यान्तः स्वयं निवासं च धत्ते स देव इत्यादि चावगम्यते॥

तस्यास्य सूक्तस्य प्रथमामृचमाह—

**उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे।**
**उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा॥१॥**

**उत् तिष्ठ ब्रह्मणः पते देवऽयन्तः त्वा ईमहे उप प्र यन्तु मरुतः सुऽदानवः इन्द्र प्राशूः भव सचा॥**

हे ब्रह्मणस्पते एतन्नामक देव, उत्तिष्ठ उत्थानं कुरु, त्वदीयगुप्तिस्थानात् व्यक्तीभूयोद्गच्छ। देवयन्तः देवकामाः वयं त्वा त्वां ईमहे प्रार्थयामहे। सुदानवः शोभनदानोपेताः

मरुतः उप प्रयन्तु समीपे प्रकर्षेण गच्छन्तु। हे इन्द्र, प्राशूः प्रकर्षेण शीघ्रो भव, सचा ब्रह्मणस्पतिना सह गमनाय॥ प्राशूः-(सोमस्य) प्राशको (वृत्रस्य) हिंसको वेति सायणः। प्रकर्षेण शीघ्र इति उवटः। आशु शब्दे दीर्घश्छान्दस इति महीधरः। आशु विलम्बाभावमात्रे क्लीबं, तद्विशिष्टद्रव्यपरत्वे त्रिलिङ्गम्। तस्मात् शीघ्रो भवेत्येव गृहीतमस्माभिः दीर्घस्तु छान्दसः। सोमप्राशनवृत्रवधप्रस्तावोऽत्र नोपपद्यते। ब्रह्मणस्पतेरुत्थाने अन्येषां देवानां तेन सह गमनं भवतीति हेतोः तेषां क्षिप्रगतिः प्रार्थ्यते॥

द्वितीयामृचमाह—

त्वामिद्धि सहसस्पुत्र मर्त्य उपब्रूते धने हिते।
सुवीर्यं मरुत आ स्वश्व्यं दधीत यो व आचके॥२॥

त्वाम् इत् हि सहसः पुत्र मर्त्यः उपऽब्रूते धने हिते सुऽवीर्यम् मरुतः आ सुऽअश्व्यम् दधीत यः वः आऽचके॥

हे सहसस्पुत्र, बलस्य पुत्र ब्रह्मणस्पते! सहसस्पुत्र इति अग्नेर्विशेषणं प्रसिद्धं वेदे। अवस्थाविशेषेषु अग्निसाहचर्यात् अग्निकार्यकारित्वात् अग्निविशेषणमुपपद्यते। एवमुत्तरत्र "वज्रिणः" इति इन्द्रकार्यकारितया इन्द्रविशेषणं ब्रह्मणस्पतेः प्रयुक्तम्। मर्त्यः मनुष्यः हिते धने निहिते गुप्तं निक्षिप्ते धने गवाश्वादिरूपे चित्प्रकाशप्राणबलादौ प्राप्तव्यतया निमित्तभूते सति, त्वामित् त्वामेव उपब्रूते हि अन्तिके वक्तव्यं वक्ति खलु, लब्धव्यं धनं लम्भय नः इति प्रार्थयते हि। हे मरुतः, ब्रह्मणस्पतिसहायान् वः युष्मान् यः यो मर्त्यः आ चके स्तौति, सः स्वश्व्यम् शोभनाश्वयुक्तं सुवीर्यम् शोभनवीर्योपेतं च धनं दधीत धारयेत्॥ हिते-दधातेर्निष्ठायां हिरादेशः। सुवीर्यम्-शोभनं वीर्यं यस्य तत्। स्वश्व्यम्-अश्वानां समूहः, समूहार्थे छप्रत्ययः। आचके-कै शब्दे लडर्थे लिट्॥

तृतीयामृचमाह—

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः॥३॥

प्र एतु ब्रह्मणः पतिः प्र देवी एतु सूनृता अच्छ वीरम् नर्यम् पङ्क्तिऽराधसम् देवाः यज्ञम् नयन्तु नः॥

ब्रह्मणस्पतिः देवः प्रैतु प्राप्नोत्वस्मान् । सूनृता देवी शुभसत्यरूपा वाग्देवता प्रैतु अस्मान् प्राप्नोतु । देवाः ब्रह्मणस्पतिप्रमुखाः वीरम् वीरवन्तमिति मतुबर्थे, वीर्ययुक्त-मित्यर्थः नर्यम् नरेभ्यो नेतृभ्यो हितम् पङ्क्तिराधसम् पङ्क्तिसमृद्धं राधो यस्य तम्, बहुविधधनसन्ततियुक्तमित्यर्थः, तादृशं यज्ञम् नः अस्मान् अच्छ आभिमुख्येन नयन्तु प्रापयन्तु । देवानां प्रसादाद्वयं उक्तलक्षणयज्ञसमृद्धाः स्यामेत्युक्तम् ॥ पङ्क्तिभी राध्नो-तीति पङ्क्तिराधास्तं पङ्क्तिराधसमिति सायणः ॥

चतुर्थीमृचमाह—

यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः ।
तस्मा इळां सुवीरामा यजामहे सुप्रतूर्तिमनेहसम् ॥४॥

यः वाघते ददाति सूनरम् वसु सः धत्ते अक्षिति श्रवः तस्मै इळाम् सुवीराम् आ यजामहे सुऽप्रतूर्तिम् अनेहसम् ॥

यः यो यजमानः भक्तः वाघते मन्त्रमुच्चारयते आत्मार्थध्यानानि वाचा आविष्कुर्वते ब्रह्मणस्पतये सूनरम् सुष्ठु नेतव्यं वसु धनं (स्वीयं सत्त्वं) ददाति समर्पयति, सः अन्तर्याजी भक्तः अक्षिति क्षयरहितं श्रवः अन्तःश्रवणं दिव्यावेशवाचमित्यर्थः धत्ते धारयति । अत्र वाघत् ब्रह्मणस्पतिरेव भवति, 'प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदति' इति स्पष्टमुक्तमुत्तरस्यामृचि । अन्तर्यागे यदा यजमाने ब्रह्मणस्पतिरुत्थितो भवति यजमानवसु च स्वीकुरुते, तदा स एव मन्त्रवाचमुच्चारयति यजमानार्थम्, करोति च तं अक्षयान्तःश्रुतिसम्पन्नम् । तस्मै तादृशाय पुण्यपुरुषाय तदनुग्रहार्थं इळाम् एतन्नाम्नीं पश्यन्तीं वाचं आ यजामहे सर्वतो यजामः वयं देवकामा ऋषयः । कीदृशीं इळाम् ? सुवीराम् शोभनवीर्यसम्पन्नां सुप्रतूर्तिम् सुष्ठु प्रकर्षेण वेगवतीं हिंसाकारिणीं शत्रूणामिति शेषः । अनेहसम् केनाप्यहिंस्याम् ॥ सुप्रतूर्तिम्–तुर्वी हिंसायाम् । सूनरम्–सुखेन नीयते, खल्, निपातस्य चेति उपसर्गस्य दीर्घ-त्वम् । अक्षिति–क्षयो नास्त्यस्येति । श्रवः–श्रूयत इति श्रवः, असुन् । सुप्रतूर्तिम्–तुर्वी हिंसायाम्, प्रपूर्वादस्माद्भावे क्तिन्, शोभना प्रतूर्तिर्यस्याः सा । अनेहसम्–न हन्यत इत्यनेहाः–धातोः एह आदेशः ॥

पञ्चमीमृचमाह—

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥५॥

प्र नूनम् ब्रह्मणः पतिः मन्त्रम् वदति उक्थ्यम् यस्मिन् इन्द्रः वरुणः मित्रः अर्यमा देवाः ओकांसि चक्रिरे ॥

ब्रह्मणस्पतिः देवः उक्थ्यम् शस्त्रयोग्यं (शस्त्रं शंसनम्) मन्त्रम् नूनम् अवश्यं प्रवदति प्रकर्षेण ब्रूते । यस्मिन् मन्त्रे, ब्रह्मणस्पतिसाधितवागाविष्कारे देवाः इन्द्रादयः ओकांसि स्थानानि चक्रिरे कृतवन्तः । के ते देवाः ? इन्द्रः मित्रः वरुणः अर्यमा इत्येते । ब्रह्मणस्पतिना उदीरिते मन्त्रे देवाः स्वीयाधारस्थानानि कृत्वा यजमानं पुरुषमनुग्रहीतुं प्रसन्ना भवन्तीत्यर्थः ॥

इति प्रथमस्य तृतीये विंशो वर्गः

षष्ठीमृचमाह—

तमिद्वोचेमा विदथेषु शंभुवं मन्त्रं देवा अनेहसम् ।
इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत् ॥६॥

तम् इत् वोचेम विदथेषु शम्ऽभुवम् मन्त्रं देवाः अनेहसम् इमाम् च वाचम् प्रतिऽहर्यथ नरः विश्वा इत् वामा वः अश्नवत् ॥

हे देवाः, तमित् तमेव इन्द्रादिदेवानां प्रादुर्भावस्थानभूतं ब्रह्मणस्पतिविभवं मन्त्रम् विदथेषु ज्ञानागमेषु यजनेषु वोचेम ब्रवाम । कीदृशं मन्त्रम् ? शंभुवम् सुखस्य भावयितारम्, अनेहसम् अहिंसनीयम् निर्दोषमित्यर्थः । हे नरः नेतारो देवाः, इमां च अस्माभिरुच्यमानां वाचम् स्तुतिं च प्रतिहर्यथ कमनीयां कान्तिमतीं कुरुत, ब्रह्मणस्पतिप्रयुक्तायाः दिव्यायाः मन्त्रवाचः प्रतिध्वनिभूतां प्रतिबिम्बवद्वा निष्पन्नां इमामस्मदीयां वाचं शोभायुक्तां विधत्तेत्यर्थः । विश्वा इत् सर्वापि वामा वननीया संभजनीया वाक् वः युष्मान् अश्नवत् प्राप्नोतु ॥ वोचेम–वचधातोराशीर्लिङ्, छान्दसम् । विदथेषु–विद ज्ञाने, गतम् । शम्भुवम्–भवतेरन्तर्भावितण्यर्थात् क्विप् । प्रतिहर्यथ–हर्य गतिकान्त्योः । अश्नवत्–अशू व्याप्तौ, लेटि आडागमः ॥

सप्तमीमृचमाह—

को दे॒व॒यन्त॑मश्नव॒ज्जनं॒ को वृ॒क्तब॑र्हिषम् ।
प्रप्र॑ दा॒श्वान्प॒स्त्या॑भिरस्थितान्त॒र्वाव॒त्क्षयं॑ दधे ॥७॥

कः दे॒व॒ऽयन्त॑म् अ॒श्नव॒त् जन॑म् कः वृ॒क्तऽब॑र्हिषम् प्रऽप्र॑ दा॒श्वान् प॒स्त्या॑भिः अ॒स्थि॒त अ॒न्तः॒ऽवाव॑त् क्षय॑म् द॒धे ॥

देवयन्तम् देवान् कामयमानं जनम् मनुष्यं कः ब्रह्मणस्पतिमन्तरा को वान्यो देवः अश्नवत् प्राप्नुयात् ? तथा वृक्तबर्हिषम् देवार्थं कृतासनसन्नाहं जनं कः को वान्योऽश्नवत् इति संबन्धः। दाश्वान् दत्तवान् यजमानः पस्त्याभिः गोनिवासस्थानैः द्वारा (पस्त्यं गृहनाम, गोष्ठेऽपि वर्तते) चिद्ररश्मिस्थानभूमिकानां द्वारेणेति भावः, प्रास्थित प्रस्थितवान्। तथा प्रस्थाय अन्तर्वावत् अन्तर्गतवस्तुसम्पन्नं क्षयम् निवासस्थानं दधे धृतवान्। यजमानः 'पस्त्याभिः' ऋत्विग्भिः सह प्रस्थाय बहुपुत्रपौत्रादिसम्पन्नं गृहं दधे इति स्थूलं व्याचष्टे सायणः॥ 'पस्त्याभिः' 'अन्तर्वावत्' इति शब्दद्वयार्थे निर्धारिते सूक्ष्मोऽर्थः सुगमः स्यात्। पस्त्याभिः प्रजाभिः ऋत्विग्भिरिति चेत् ताः प्रजाः दैव्याः, न मानुष्याः इति ग्राह्यम्। अन्तर्वावत्—अन्तर्वाति गच्छतीति अन्तर्वाः, अन्तर्गतं अन्तःस्थितं वा वस्तु, ततो मतुप्, मतोर्वः। यस्मिन् क्षये अन्तरे सर्वस्वभूतं वस्तु विद्यते तं वासस्थानं 'दधे' धारयितुं प्रभुरभवद्यजमानः। देवयन्तमित्यादयो गताः। प्रप्रेति द्विर्भावः पादपूरणः॥

अष्टमीमृचमाह—

उप॑ क्ष॒त्रं पृ॑ञ्ची॒त हन्ति॒ राज॑भिर्भ॒ये चि॑त्सुक्षि॒तिं द॑धे ।
नास्य॑ व॒र्ता न त॑रु॒ता म॑हाध॒ने नार्भे॑ अस्ति व॒ज्रिणः॑ ॥८॥

उप॑ क्ष॒त्रम् पृ॒ञ्ची॒त हन्ति॑ राज॑ऽभिः भ॒ये चि॒त् सु॒ऽक्षि॒तिम् द॒धे न अ॒स्य व॒र्ता न त॒रु॒ता म॒हा॒ऽध॒ने न अर्भे॑ अ॒स्ति॒ व॒ज्रिणः॑ ॥

ब्रह्मणस्पतिः क्षत्रम् बलं उप पृञ्चीत स्वात्मनि संपृक्तं कुर्यात्। ततो राजभिः इन्द्रादिभिः सह हन्ति मारयति देवशत्रून्। भये चित् भीतिहेतौ वर्तमानेऽपि सुक्षितिम् सुष्ठु

वासं दधे धारयति निवासं स्थैर्येण । महाधने महति धने लब्धव्यतया निमित्तभूते अर्भे अल्पे वा वस्तुनि प्राप्तव्ये अस्य ब्रह्मणस्पतेः वज्रिणः वज्रवतो दृढायुधस्य सहसस्पुत्रवत् (वज्रिविशेषणस्य तात्पर्यं प्रागुक्तं स्मार्यम्) वर्ता प्रवर्तयिता न अस्ति, न तरुता तरणस्य उल्लङ्घनस्य कर्ता नास्ति । द्विविधोऽपि न नास्ति ॥ पृञ्चीत—पृची संपर्के, रुधादिः, लिङ् । सुक्षितिः—शोभना क्षितिः । वर्ता—वर्ततेर्वृणोतेर्वा, इडभावश्छान्दसः । तरुता—तरतेः, तृचि उडागमो निपातितः ॥

इति प्रथमस्य तृतीय एकविंशो वर्गः

यं 'रक्षन्ती'ति नवर्चं षष्ठं सूक्तं गायत्रम् । घोरपुत्रः कण्व ऋषिः । यद्यपि सर्वं सूक्तं आदित्यदेवताकं भवति मित्रादीनामप्यादित्यत्वात्, तथापि पूर्वे "आद्यान्तयोस्तृचयोः वरुण-मित्र-अर्यमणो देवताः मध्यतृचस्य 'सुगः पन्था' इत्यस्य आदित्या देवता" इत्याहुः । सामान्यत आदित्या विशेषतो मित्रादय इति तत्र कारणं बोध्यम् ॥

तत्र प्रथमामृचमाह—

यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा ।

नू चित्स दभ्यते जनः ॥१॥

यम् रक्षन्ति प्रऽचेतसः वरुणः मित्रः अर्यमा नु चित् सः दभ्यते जनः ।

प्रचेतसः प्रकृष्टज्ञानाः वरुणः मित्रः अर्यमा एते देवाः यम् रक्षन्ति, स जनः यजमानः नुचित् क्षिप्रमेव दभ्यते दभ्नोति हिनस्ति । दमयति वा शत्रून् ॥ नूचित्—ऋचि तु नु घेत्यादिना दीर्घः । दभ्यते—व्यत्ययेन श्यन् आत्मनेपदं च ॥

द्वितीयामृचमाह—

यं बाहुतेव पिप्रति पान्ति मर्त्यं रिषः ।

अरिष्टः सर्व एधते ॥२॥

यम् बाहुताऽइव पिप्रति पान्ति मर्त्यम् रिषः अरिष्टः सर्वः एधते ॥

यम् यजमानं पिप्रति पूरयन्ति पूर्वोक्ताः देवा इति शेषः। केन पूरयन्ति? व्याख्यातृ-पक्षानुसारेणाध्याहारः "धनै" रिति, बलेन ऐश्वर्येण वेत्युपपद्यते। देवाः स्वयं पूरयन्ति इत्युपपन्नतमम्। तत्र दृष्टान्तः—बाहुता इव बाहुता भावे तल्, समूहार्थे वा, यथा स्वीया बाहुशालिता मर्त्यं पूरयति स्वत्वेन स्वबलेन बलसमृद्ध्या वा, तथा वरुणादयो देवा यं मर्त्यं स्वयं पूरयन्ति, पान्ति तथा पूरणेन पान्ति रक्षन्ति रिषः हिंसकात्, स सर्वः तादृशः सर्वोऽपि मर्त्यो यजमानः अरिष्टः अहिंसितः सन् एधते वर्धते॥ पिप्रति—पिपर्तेः पूरणा-र्थात् प्रथमपुरुषबहुवचनान्तः, जुहोत्यादिः। पान्ति—पा रक्षणे। रिषः—रिष हिंसायाम्, क्विप्, पञ्चम्येकवचनम्। अरिष्टः—रिष हिंसायाम्, कर्मणि क्तः, एकाच इति इट्-प्रतिषेधः॥

तृतीयामृचमाह—

वि दुर्गा वि द्विषः पुरो घ्नन्ति राजान एषाम्।
नयन्ति दुरिता तिरः॥३॥

वि दुःऽगा वि द्विषः पुरः घ्नन्ति राजानः एषाम् नयन्ति दुःऽइता तिरः॥

एषाम् पूर्वोक्तविधानां यजमानानां पुरः पुरस्तात् राजानः वरुणादयः दुर्गा दुःखेन गन्तुं शक्यानि शत्रूणां नगराणि विघ्नन्ति विशेषेण नाशयन्ति। तथा द्विषः शत्रूनपि विघ्नन्ति। दुरिता दुरितानि यजमानसंबन्धीनि तिरो नयन्ति विनाशं प्रापयन्ति॥ दुर्गादयो गताः॥

चतुर्थीमृचमाह—

सुगः पन्था अनृक्षर आदित्यास ऋतं यते।
नात्रावखादो अस्ति वः॥४॥

सुऽगः पन्थाः अनृक्षरः आदित्यासः ऋतम् यते न अत्र अवऽखादः अस्ति वः॥

हे आदित्यासः आदित्याः, ऋतम् सत्यं प्रति यते गच्छते भवद्वृन्दाय पन्थाः मार्गः सुगः सुष्ठु गन्तुं शक्यः अनृक्षरः कण्टकवर्जितश्च भवति। अत्र अस्मदीयेऽस्मिन् यजने वः युष्माकं अवखादः अवमः खादो नास्ति न विद्यते, दीयमानं सर्वं भोग्यमेव भवतां, न किमपि जघन्यरसमित्यर्थः॥ सुगः—सुदुरोरधिकरणे डप्रत्ययः। अनृक्षरः—ऋक्षरः कण्टकः। यते—इण् गतौ, अदादिः, शतरि चतुर्थ्येकवचनम्॥

पञ्चमीमृचमाह—

यं यज्ञं नयथा नर आदित्या ऋजुना पथा।

प्र वः स धीतये नशत्॥५॥

यम् यज्ञम् नयथ नरः आदित्याः ऋजुना पथा प्र वः सः धीतये नशत्॥

हे नरः आदित्याः, यम् यज्ञम् ऋजुना पथा अञ्जसा मार्गेण यूयं नयथ गन्तव्यं प्रापयथ, सः यज्ञः वः युष्माकं धीतये पोषणाय, भोगाय, प्रणशत् प्राप्नोति लडर्थे लेट्॥ धीयते—धेट् पाने क्तिच्, पानायेति सायणः, तर्हि भोगायेति ग्राह्यम्। धीरिव धीतिशब्दोऽपि दधातेः निष्पाद्यः, तर्हि धारणाय पोषणाय वेत्यर्थः। नशत्—नशतिर्गत्यर्थः, लेट्। 'ऋजुना पथा' इत्यत्र यज्ञयात्रामार्गस्य अवक्रता आञ्जस्यं आदित्यैः सम्पाद्यत इति ज्ञेयम्॥

इति प्रथमस्य तृतीये द्वाविंशो वर्गः

षष्ठीमृचमाह—

स रत्नं मर्त्यो वसु विश्वं तोकमुत त्मना।

अच्छा गच्छत्यस्तृतः॥६॥

सः रत्नम् मर्त्यः वसु विश्वम् तोकम् उत त्मना अच्छ गच्छति अस्तृतः॥

हे आदित्याः, स तादृशः मर्त्यः भवदनुग्रहपात्रं यजमानः अस्तृतः अहिंसितः रत्नम् रमणीयं हर्षाधायकं विश्वं वसु सर्वं धनं लौकिकमलौकिकं च अच्छ आभिमुख्येन गच्छति प्राप्नोति। उत अपि च त्मना आत्मना तोकम् अपत्यं गच्छति, स्ववैभवेन सन्ततिं

प्राप्नोति। तादृशस्तस्य प्रभावः येन स्वयं विस्तृतो भूत्वा स्वं तेजोऽन्यत्र सङ्क्रमय्य स्वसदृशं सृजतीत्यर्थः ॥ त्मना–आङि आदेरात्मनः आकारलोपो मन्त्रेषु। अस्तृत–स्तृञ् हिंसायाम् ॥

सप्तमीमृचमाह—

कृथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः ।
महि प्सरो वरुणस्य ॥७॥

कथा राधाम सखायः स्तोमम् मित्रस्य अर्यम्णः महि प्सरः वरुणस्य ॥

हे सखायः समानोद्योगाः सुहृदः, सखिभूतानां देवानामादित्यानामेव वा संबोधनम्। युष्मासु विशिष्टानां मित्रादीनां, मित्रस्य अर्यम्णः वरुणस्य च महि महत् प्सरः भक्षणं आहारभूतं स्तोमम् स्तोत्रं कथा राधाम कथं साधयामः ? स्तोत्रं हि देवानामाराधनं, स्तुत्या हि देवताः वर्धन्ते। तस्माद्वर्धनहेतुं स्तोमं भक्ष्यस्थानीयमाहुः। "देवप्सरस्तमं वचः" (१. ७५. १) इत्यत्र सायणः 'देवानां प्रीणयितृतमं' वच इति व्याचष्टे। अत्रापि प्सातेर्भक्षणार्थादेव निष्पादयति। किंतु 'प्सरो रूपं अतस्तदनुरूपं स्तोमं' कथा राधाम इत्याह। तदनुरूपमित्यमूलम्। प्सरो रूपं चेत् स्तोमो मन्त्र एव रूपं शरीरं वरुणादीनां देवानामिति व्याख्याय, तादृशं देवानां शरीरभूतं स्तोमं कथं साधयाम इति भावो वक्तव्यः। प्सरो भक्षणमित्युक्तमेव साधीयः॥ कथा–था हेतौ च च्छन्दसि। राधाम–राध साध संसिद्धौ, लेटि विकरणस्य लुक्। महि–मह पूजायां औणादिक इन्प्रत्ययः। प्सरः–प्सा भक्षणे औणादिको डरप्रत्ययः॥

अष्टमीमृचमाह—

मा वो घ्नन्तं मा शपन्तं प्रति वोचे देवयन्तम् ।
सुम्नैरिद्व आ विवासे ॥८॥

मा वः घ्नन्तम् मा शपन्तम् प्रति वोचे देवऽयन्तम् सुम्नैः इत् वः आ विवासे ॥

हे मित्रादयो देवाः, देवयन्तम् देवकामं यजमानं यो हन्ति तं घ्नन्तम् हिंसितारं वः युष्मभ्यं मा प्रति वोचे न कथयामि प्रतीकारेच्छया। तथा शपन्तम् यो यजमानं देवकामं शपति शत्रुः तमपि मा प्रति वोचे। कुतः? नेदमावश्यकं भवति मम कर्तव्यं वा युष्मासु यजमानयोगक्षेमधुरंधरेषु परीक्षणविचारणशिक्षणाद्यधिकारिषु जाग्रत्सु। तर्हि किं करोमि? वः युष्मान् सुम्नैरित् सुखमयैः स्तोत्रैरेव आविवासे प्रकाशयामि, परिचरामि वा निरुक्तानुसारतः॥

नवमीमृचमाह—

चतुरश्चिद्दद॑मानाद्बिभीयादा निधातोः।

न दुरुक्ताय स्पृहयेत् ॥९॥

चतुरः चित् दद॑मानात् बिभीयात् आ निऽधातोः न दुःऽउक्ताय स्पृहयेत्॥

प्रथमं सायणमनुसृत्य मन्त्रार्थमुक्त्वा अनन्तरं अस्मदीयमाचक्ष्महे। दुरुक्ताय न स्पृहयेत् दुष्टं वाक्यं न कामयेत, दुष्टं प्रतिवचो न दद्यात्। किं तु दुरुक्ताद्बिभीयात्। अवशिष्टो मन्त्रभागः सर्वोऽपि दृष्टान्तः। चतुरः चित् चतुःसंख्याकान् कपर्दकान् ददमानात् हस्ते धारयतः पुरुषात् अक्षद्यूतं कुर्वतः आ निधातोः कपर्दकनिपातपर्यन्तं अन्यो द्यूतवर्ती पुरुषः बिभीयात् अस्य जयो भविष्यति न वेति भीतो भवेत्, अत्र यथा भयं तथा दुरुक्ताद्भेतव्यमिति धर्मरहस्यम्। इदं सायणीयं तात्पर्यं, अस्याधारः यास्कः। मूले अक्षशब्दो न श्रूयते। चित् उपमार्थीयः गृहीतः। नासाधु तथा ग्रहणम्। किं तु चिदित्येषोऽनेकार्थः। अप्यर्थे वर्तते यच्चिदित्यादौ। 'आचार्यश्चिदिदं ब्रूयात्' पूजायाम्। अथास्यां ऋचि पूर्वव्याख्यातारो यजमानस्य दुरुक्ताद् भयस्यावश्यकत्वं दृष्टान्तेन चमत्कृतां पश्यन्ति॥ नैतद्युक्तं दृश्यते। चित् इह नोपमार्थीयः। चतुरश्चित् चतुरो देवानपि ददमानात् ददतः यजमानाय तदनुग्रहार्थं, आ निधातोः समन्तात् नितरां धारकात् एकस्मादेवदेवात् बिभीयात् उद्विजेत, इमे चत्वारो देवाः मह्यं तेनैकेन निधातुना देवदेवेन दत्ताः मां मा हासिषुः मय्येव तिष्ठन्तु, तान् मे दत्तवतो निधातोः सर्वस्वामिनः शिक्षाधिकारे सति, दुरुक्तस्य प्रतिक्रियां माऽहं कार्षमिति 'निधातोर्भयं स्यात्। एवं "मा वो

श्नन्त"मिति पूर्वयर्चा अर्थसङ्गतिः। तृतीयपादे न विशेषः। क इमे चत्वारो देवताः? त्रयोऽत्र सूक्ते प्रतिपादिताः मित्रो वरुणोऽर्यमा च। यद्यप्यवशिष्टो भगो नोऽक्तः, तथापीदं देवताचतुष्टयं व्यूहात्मकं वेदे प्रसिद्धम्। प्रागुपन्यस्तम्। (पृ.११०) "अदर्शि गातुः... चक्षुर्भगस्य रश्मिभिः। द्युक्षं मित्रस्य सादनं अर्यम्णो वरुणस्य च..." (१. १३६. २) इति चतुर्णामेकसदनत्वं श्रूयते॥ ददमानात्–दद दाने शानच्। बिभीयात्–बिभेतेर्लिङ्। निधातोः–निपूर्वाद्धातेः भावे तुन्प्रत्ययः, तेन तस्य कर्ता लक्षितः। दुरुक्ताय स्पृहयेत्–संप्रदानसंज्ञायां चतुर्थी, स्पृह ईप्सायाम्, चुरादिरदन्तः॥

इति प्रथमस्य तृतीये त्रयोविंशो वर्गः

अथ सं पूषन्निति दशर्चं सप्तमं सूक्तम्। ऋषिर्घौरः कण्वः गायत्री छन्दः पूषा देवता। आदित्यानामेकः पूषा कीर्त्यते। पृथिव्यभिमानीति सायणः तैत्तिरीयश्रुतिबलादाह। 'पूषाध्वनः पात्वित्याह, इयं वै पूषा' 'इयं वै पूषा इयं हीदं सर्वं पुष्यति यदिदं किञ्चे'ति। सर्वथा पोषकत्वात् पूषा। यद्यपि सर्वेषां देवानामूर्ध्वमायतनं भवति, तथापि तेषां मुख्यं स्थानं कार्यक्षेत्रं वा भिद्यत इति बोध्यम्। एवं दैव्यस्य मनसस्पतेरिन्द्रस्य तृतीयं स्थानं स्वराख्यम्। अग्निः सन्निहितोऽस्माकं पृथिव्याम्। मरुतः प्राणभुवो मध्यमस्थानाः। एवमन्ये च देवाः तत्तत्स्थानमधिष्ठाय स्वीयानि कृत्यानि निर्वहन्ति। पूषा त्वादित्यस्तृतीयस्थानोऽपि मातुः पृथिव्याः पतिर्दिधिषुः पोषकः, एतदर्थं पृथिवीस्थानो वक्तव्यः। यदात्र बहिः पृथिवीक्षेत्रं अन्तः पृथिवीचितिं च स्वीयादित्यविभवेन पुष्णन् स्वयं च पोषं प्राप्तः प्रादुर्भवति, तदा तदनु प्रज्ञानप्रभातलक्षणा उषोदेवी जायते। ततोऽयं अश्विनोः सूर्यायाः उषसः परिग्रहे, तौ अश्विनौ स्वीयस्योत्तरोत्तरपोषस्य विधायकौ आरोग्यप्रदौ पितृत्वेन वृणोति। पातृत्वाद्धि पिता। एवं पोषितः पूषा आदित्य इन्द्रस्य तेजोबलैश्वर्यादीनां वर्षिता भ्राता भवति। अन्ते पृथिव्याः दिवश्च सुबन्धुर्भवति। एवमुक्तमर्थं ज्ञापयन्तो मन्त्रवर्णाः सन्ति बहव ऋक्संहितायाम्। इह केचनोदाह्रियन्ते॥ "मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः। भ्रातेन्द्रस्य सखा मम" (६.५५.५)॥ "पूषा सुबन्धुर्दिव आ पृथिव्या इळस्पतिर्मघवा दस्मवर्चाः। यं देवासो अददुः सूर्यायै कामेन कृतं तवसं स्वञ्चम्" (६.५८.४)॥ "यदश्विना पृच्छमानावयातं... विश्वे देवा अनु तद्वामजानन् पुत्रः पितराववृणीत पूषा" (१०.८५.१४)॥

वृत्रवधात्परमपि पणयोऽसुराः यजमानस्य मार्गं रुन्धन्ति, गाश्चापहरन्ति अन्ये च तादृशाः देवद्विषः ऊर्ध्वगामिनं देवभक्तं पुरुषं प्रत्यक्षमप्रत्यक्षं वा बाधन्ते तद्रोधनाद्यपहारेण मार्गतिरोधानविधिना अमार्गदर्शनेन। अत्रैव पूष्णः कृत्यं विशिष्टं लक्ष्यते। पणीनामसुराणां वणिजामिव व्यवहारिणां व्यवहारः पूष्णि देवे न मूर्च्छति। अयं पथस्पतिः। अनष्टपशुश्च भवति। जीवत्येव यजमाने लोकान्तरमार्गं अधिगन्तुं उद्यते, पूषैव सहकारी देवो भवति। अत्रैते मन्त्रा भवन्ति॥ "अदित्सन्तं चिदाघृणे पूषन् दानाय चोदय। पणेश्चिद् वि म्रदा मनः" (६.५३.३)॥ "परि तृन्धि पणीनामारया हृदया कवे। अथेमस्मभ्यं रन्धय" (६.५३.५)॥ "इमं च नो गवेषणं सातये सीषधो गणम्। आरात् पूषन्नसि श्रुतः" (६.५६.५)॥ "पूषा त्वेतश्च्यावयतु प्रविद्वाननष्टपशुर्भुवनस्य गोपाः" (१०.१७.३)॥ मेधातिथेस्तृचस्य (१.२३.१५) व्याख्यायां यदुक्तं तदप्यवधेयम्। 'देवद्विड्भिः अपहृत्य रहसि निहितं देवानामन्नभूतममृतं सोममाहृत्य यजमानं पुष्णन् ऊर्ध्वलोकविभवान् सोमरसभरितान् पदे पदे पुनः पुनः सम्पाद्य सर्वथा तं सोमसम्पन्नं विधत्ते स एष पौष्णो विभव' इत्युक्तम्॥ 'दिवो धरुणं (सोमं) आजा नष्टं यथा पशुम्... अपगूळ्हं गुहाहितं राजानं (सोमं) अविन्दत् गोभिर्यवं न चर्कृषत्' (पृ. २४४.२४५) इत्यादयो मन्त्रभागा अत्र प्रमाणम्॥ संपूषन्नित्यस्मिन् अन्यत्र च मन्त्रेषु 'विमुचो नपात्' इति पूषा निर्दिश्यते। प्रथमं तावदस्य विवरणं कर्तव्यम्। विमुञ्चतीति विमुक् (क्विप्) मेघः तस्य नपात् पुत्रः पूषेत्याह सायणः। उपपादयति चैवम्—जलविमोचनहेतोर्मेघस्य पुत्रः पूषा, पृथिव्या एव पूषत्वात्। अद्भ्यः पृथिवीति श्रुतेः अपां सार एव पृथिवी, सैव पूषा भवतीति। अस्त्वेष स्थूलपक्षीयोऽर्थः युक्तोऽयुक्तो वा। अस्मदीयः पूषा तु पोषको यजमानस्य, पृथिव्याश्च। स ज्ञानैश्वर्यतेजोबलादीनां वर्षितुः इन्द्रात्मन आदित्यस्य सन्ततिः, पतिः पाता पृथिव्याः पूर्वज उषसः, भ्रातेन्द्रस्य, यजमानस्य पथस्पतिः मार्गरक्षी, यजमानगवेषणपरायणः, यजनोद्यमप्रचोदनपरश्चेत्यादिगुणविशिष्टो भवतीति बोध्यम्॥

तामेतां सूक्ते प्रथमामृचमाह—

**सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात्।**
**सक्ष्वा देव प्र णस्पुरः ॥१॥**

सम् पूषन् अध्वनः तिर वि अंहः विऽमुचः नपात् सक्ष्व देव प्र नः पुरः ॥

हे पूषन् देव, अध्वनः मार्गात् सं तिर सम्यक् प्रापय गन्तव्यं स्थानम्। अंहः दुरितं वितिर विनाशय। हे विमुचो नपात् वर्षितुरिन्द्रात्मन आदित्यस्य पुत्र देव, नः अस्माकं पुरः पुरस्तात् प्र सक्ष्व प्रसक्तो भव॥ सक्ष्व—षच सेवने, लोट्, शपो लुक्, छन्दसि बहुलम्। प्र णः—नस्य णत्वं, उपसर्गाद्बहुलम्॥

द्वितीयामृचमाह—

यो नः पूषन्नघो वृको दुःशेव आदिदेशति।
अप स्म तं पथो जहि॥२॥

यः नः पूषन् अघः वृकः दुःऽशेवः आऽदिदेशति अप स्म तम् पथः जहि॥

हे पूषन्, यः प्रतिपक्षी नः अस्मान् आदिदेशति आज्ञापयति इतो गन्तव्यं इतो नेति तम् पथः मार्गात् अपजहि स्म अवश्यमपाकुरु। कीदृशः सः? अघः आहन्ता पापः वृकः ईहामृग इव आच्छिद्य अपहर्ता धनस्य दुःशेवः दुष्टसुखः॥ यागयात्रायां ईदृशः पापवर्गः मार्गे बाधको वर्तते, तदपसारणं पूष्णो देवस्य सुकरम्, तस्मात्प्रार्थना॥ वृकः—वृक वृक आदाने इत्यस्मात्, छेदनार्थाद् वृश्चतेर्वा। दुःशेवः दुष्टं शेवं यस्य सः। आदिदेशति—दिश अतिसर्जने, लेट्, छन्दसि शपः श्लुः॥

तृतीयामृचमाह—

अप त्यं परिपन्थिनं मुषीवाणं हुरश्चितम्।
दूरमधि स्रुतेरज॥३॥

अप त्यम् परिऽपन्थिनम् मुषीवाणम् हुरःऽचितम् दूरम् अधि स्रुतेः अज॥

त्यम् तं पूर्वोक्तविधं परिपन्थिनम् मार्गे प्रत्यवस्थातारं मुषीवाणम् तस्कररूपं

हुरश्चितम् कौटिल्यानां सञ्चेतारं स्रुतेः मार्गात् अधि अधिकं दूरम् दूरस्थानं प्रति अपाज अपगमय ॥ परिपन्थिनम्–"छन्दसि परिपन्थिपरिपरिणौ प्रत्यवस्थातरि" इति शत्रावभिधेये इनिप्रत्ययान्तो निपातितः। मुषीवाणम् मुषीवा इति तस्करनाम, मुष स्तेये मोषणं मुषिः औणादिको भावे किप्रत्ययः, मुषिं वनति संभजते मुषीवान्, पूर्वपददीर्घः छान्दसः। हुरश्चितम्–हुर्छा कौटिल्ये, क्विप् सम्पदादिलक्षणः। राल्लोप इति छकारलोपः, हुरश्चिनोति, क्विप्, हुरश्चित्, तम्। स्रुतेः–स्रु गतौ। अज–गत्यर्थे अन्तर्भावितण्यर्थः॥

चतुर्थीमृचमाह—

त्वं तस्य द्वयाविनोऽघशंसस्य कस्य चित्।
पदाभि तिष्ठ तपुंषिम् ॥४॥
त्वम् तस्य द्वयाविनः अघऽशंसस्य कस्य चित् पदा अभि तिष्ठ तपुंषिम् ॥

हे पूषन्, त्वम् तस्य उक्तविधस्य दुष्टस्य तपुषिम् अन्यतापकं देहं पदा त्वदीयेन पादेन अभितिष्ठ अभिगम्य तिष्ठ। कीदृशस्य ? द्वयाविनः प्रत्यक्षमप्रत्यक्षं चापहरणं द्विविधम्, तद् द्वयमस्येति द्वयावी, तस्य अघशंसस्य अघं अस्मदनिष्टं शंसतः कस्यचित् कस्यापि विशेषनिर्देशरहितस्य ॥ द्वयाविनः–मत्वर्थीयो विनिः, दीर्घः छन्दसि अन्येषामपि दृश्यते। अघशंसस्य–अघे पापे शंसोऽभिलाषोऽस्य। तपुषि–तापयत्यनेनेति तपुषिः, औणादिकः उषिन्प्रत्ययः॥

पञ्चमीमृचमाह—

आ तत्ते दस्र मन्तुमः पूषन्नवो वृणीमहे।
येन पितॄनचोदयः ॥५॥
आ तत् ते दस्र मन्तुऽमः पूषन् अवः वृणीमहे येन पितॄन् अचोदयः ॥

हे मन्तुमः ज्ञानवन्, दस्र शत्रूपक्षयकारिन्, पूषन् क्रियादक्ष, अत्र प्रसक्तौ, कर्मशूरत्वं ज्ञानवत्त्वं च पूष्णः उक्ते। (दर्शनीयेति सायणः) ते त्वदीयं तत् अवः तथाविधं रक्षणं

आ वृणीमहे सर्वतः प्रार्थयामहे। येन रक्षणेन पितॄन् पूर्वान् ऋषीन् अचोदयः प्रेरितवानसि, तत् तथाविधमिति पूर्वेणान्वयः॥ दस्र—गतः। मन्तुमः—मन ज्ञाने, भावे तुप्रत्ययः, मन्तुर्ज्ञानमस्येति मन्तुमान्, संबुद्धौ मतुवसोरिति रुत्वम्॥

इति प्रथमस्य तृतीये चतुर्विंशो वर्गः

षष्ठीमृचमाह—

अधा नो विश्वसौभग हिरण्यवाशीमत्तम।
धनानि सुषणा कृधि॥६॥

अध नः विश्वऽसौभग हिरण्यवाशीमत्ऽतम धनानि सुऽसना कृधि॥

हे विश्वसौभग, विश्वानि सौभगानि सौभाग्यानि यस्य सः सर्वसौभाग्ययुक्त, हिरण्यवाशीमत्तम हिरण्मयी वाशी आयुधं तदेषामस्तीति हिरण्यवाशीमन्तः, अतिशयेन हिरण्यवाशीमान्, तादृश, पूषन्, अध अथ अस्मत्प्रार्थनानुरोधेनातः परं नः अस्मदीयानि धनानि भोग्यानि वस्तूनि सुषणा सु सनानि सुखेन संभक्तुं दातुं वा शक्यानि कृधि कुरु॥ अधसौभगादयो गताः। सुषणा—ईषद्दुःसुष्विति खल्॥

सप्तमीमृचमाह—

अति नः सश्चतो नय सुगा नः सुपथा कृणु।
पूषन्निह क्रतुं विदः॥७॥

अति नः सश्चतः नय सुऽगा नः सुऽपथा कृणु पूषन् इह क्रतुम् विदः॥

सश्चतः बाधनाय अस्मासु सक्तान् शत्रून् नः अति अस्मानतिक्रम्य नय अन्यतः प्रापय। नः अस्मान् सुगा सुष्ठु गन्तुं शक्येन सुपथा शोभनेन मार्गेण कृणु गन्तॄन् कुरु। हे पूषन्, इह अस्मिन् मार्गे क्रतुं प्राज्ञं कर्म विदः जानीहि॥ सश्चतः—सश्चते-र्गत्यर्थादिति सायणो मन्यते। षच समवाये इत्यस्यैव शकारोपजनश्छान्दसः, एवं हि 'सश्चिर'इत्यादिप्रयोगस्थलेषु उपपत्तिर्दृश्यते। सुगा, सुपथा—उभयोस्तृतीयाया आकारः। विदः—विद ज्ञाने लेट्, अडागमः, इकारलोपः। अन्ये गताः॥

अष्टमीमृचमाह—

अभि सूयवसं नय न नवज्वारो अध्वने ।
पूषन्निह क्रतुं विदः ॥८॥
अभि सुऽयवसम् नय न नवऽज्वारः अध्वने पूषन् इह क्रतुम् विदः ॥

हे पूषन्, सुयवसम् शोभनतृणोपलक्षितं उपभोगक्षमं प्रदेशं अभि अभितः नय अस्मान् । अध्वने मार्गाय शोभनपथाधिगमार्थं नवज्वारः नूतनः संतापः अस्माकं न न भवतु । शिष्टं व्याख्यातम् ॥ सूयवसम्–शोभनं यवसं यस्मिन् सः, पूर्वपदस्य दीर्घत्वम् छन्दसि । नवज्वारः–ज्वर रोगे, भावे घञ् । अन्यत् व्याख्यातम् ॥

नवमीमृचमाह—

शग्धि पूर्धि प्र यंसि च शिशीहि प्रास्युदरम् ।
पूषन्निह क्रतुं विदः ॥९॥
शग्धि पूर्धि प्र यंसि च शिशीहि प्रासि उदरम् पूषन् इह क्रतुम् विदः ॥

हे पूषन्, शग्धि शक्तो भव । पूर्धि पूरय । प्रयंसि प्रयच्छ । च अपि च शिशीहि तीक्ष्णीकुरु । उदरम् कुक्षिं प्रासि पूरय । अस्मदनुग्रहे शक्तिमान् भव, अस्मान् तेजस्विनः कुरु, स्वात्मनैवास्मान् पूरय, क्षेमं नः प्रदेहि, उपभोगक्षमैराहारैरस्मदन्तरं पूरयेत्युक्तम् । शिष्टं गतम् ॥ शग्धि–शक्लृ शक्तौ, लोटो हिः, विकरणस्य लुक्, हेर्धिरादेशः । पूर्धि–पॄ पूरणे, अन्यत् पूर्ववत् । शिशीहि–शो तनूकरणे लोट्, अन्यत् छान्दसम् । प्रासि–प्रा पूरणे अदादिः ॥

दशमीमृचमाह—

न पूषणं मेथामसि सूक्तैरभि गृणीमसि ।
वसूनि दस्ममीमहे ॥१०॥

न पूषणम् मेथामसि सुऽउक्तैः अभि गृणीमसि वसूनि दस्मम् ईमहे ॥

पूषणम् देवं न मेथामसि न वयं निन्दामः । सूक्तैः शोभनवचनात्मकैः मन्त्रैः अभि गृणीमसि अभितः स्तुमः । दस्मम् अद्भुतकर्मकारिणं एनं बलाढ्यमित्यर्थः वसूनि सत्त्वात्मकानि धनानि ईमहे याचामहे ॥ मेथामसि—मेथृ हिंसने, मस इकारः । गृणीमसि—गॄ शब्दे, इदन्तो मसिः । दस्म—दस्यतेर्बलकर्मार्थात् मक् ॥

इति प्रथमस्य तृतीये पञ्चविंशो वर्गः

अथ 'कद्रुद्राये'ति नवर्चं अष्टमं सूक्तम् । घौरः कण्व एव ऋषिः । गायत्री छन्दः, अन्त्या अनुष्टुप् । रुद्रो देवता, तृतीयाया मित्रावरुणौ अन्त्यायाः सोमः ॥

तत्र प्रथमामृचमाह—

कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे ।
वोचेम शन्तमं हृदे ॥१॥

कत् रुद्राय प्रऽचेतसे मीळ्हुःऽतमाय तव्यसे वोचेम शम्ऽतमम् हृदे ॥

कत् कदा रुद्राय एतन्नामकाय देवाय शंतमम् अतिशयेन सुखकरं स्तोत्रं वोचेम ब्रूयाम । हृदे हृदयाय शंतमं हृदयस्यार्थे सुखकरं, हृद्यं इति अन्वय उपपद्यते । हृदे हृदयनिष्ठाय हृदयभूताय रुद्रायेति वा अन्वयः स्यात् । कीदृशाय रुद्राय? प्रचेतसे प्रकृष्टं चेतो यस्य तस्मै प्रकृष्टज्ञानाय, मीढुष्टमाय सेक्तृतमाय, अतिशयेन दिव्यसम्पदां वर्षित्रे तव्यसे तवीयसे अतिशयेन तवित्रे प्रवृद्धाय ॥ कत्—कदा, अन्त्यलोपः छान्दसः । रुद्राय रोदेः णिलुक् रक्, रोदयति सर्वं इति पूर्वे, पापानिति वयम् । मीढुष्टमाय—अतिशयेन मीढ्वान्, क्वसुप्रत्ययान्तो निपातितः । तव्यसे—तवतिर्वृद्ध्यर्थः, तुलोपः ईयसुनः इकारलोपः छान्दसः । अन्ये गताः ॥

द्वितीयामृचमाह—

यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे ।
यथा तोकाय रुद्रियम् ॥२॥

यथा नः अदितिः करत् पश्वे नृऽभ्यः यथा गवे यथा तोकाय रुद्रियम् ॥

अदितिः अखण्डसत्त्वक्षेत्रभूता सर्वदेवमाता अघ्न्याशब्दवाच्या देवी नः अस्माकं रुद्रियम् रुद्रसंबन्धि यत् किमपि भवतु तत् (सत्त्वं बलं वेति ब्रूमः) यथा येन प्रकारेण सिध्यति तथा करत् करोतु । किं च अस्मदीयाय पश्वे अश्वादये नृभ्यः पुरुषेभ्यः यथा गवे तोकाय च अपत्याय च यथा रुद्रियं सत्त्वं सिध्यति तथा करोतु । अत्र अस्मत्-संबन्धि यद्यद्वस्तु वर्तते तत्सर्वं रुद्रानुग्रहपात्रं रुद्रबलसंपन्नं भवत्विति विवक्षा । तस्मात् पशु-नृ-गो-तोकशब्दानां तत्त्वार्थदानं नावश्यम् ॥ पश्वे—संज्ञापूर्वकविधिरनित्यः, तस्माद् गुणाभावः यणादेशः । रुद्रियम्—रुद्रस्येदम्, घप्रत्ययः ॥

तृतीयामृचमाह—

यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति ।
यथा विश्वे सजोषसः ॥३॥

यथा नः मित्रः वरुणः यथा रुद्रः चिकेतति यथा विश्वे सऽजोषसः ॥

नः अस्मान् मित्रः यथा चिकेतति जानाति, वरुणः यथा चिकेतति, रुद्रः यथा चिकेतति, यथा विश्वे देवाः सजोषसः समानप्रीतयः सन्तः चिकेतन्ति तथा भवत्विति शेषः । मित्रादीनां अस्मद्विषयकं ज्ञानं च अनुग्रहार्थकं ज्ञेयम् । तेषां ज्ञानमेव अनुग्रहात्मकं वा बोध्यम् । "यद्वा यथाशब्दोपेतस्य मन्त्रद्वयस्य तथा कदा वोचेमेति पूर्वत्रान्वयः" इति सायणीयं रमणीयम् उपपन्नं च ॥ चिकेतति, सजोषसः अन्ये च गताः ॥

चतुर्थीमृचमाह—

गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् ।
तच्छंयोः सुम्नमीमहे ॥४॥

गाथऽपतिम् मेधऽपतिम् रुद्रम् जलाषऽभेषजम् तत् शम्ऽयोः सुम्नम् ईमहे ॥

शंयोः सुखकामस्य दृष्टान्तभूतो यः शंयुर्नाम ऋषिर्बार्हस्पत्यः तस्य तत् प्रसिद्धं सुम्नम् सुखं ईमहे याचामहे । कमभिलक्ष्य 'ईमहे' ? गाथपतिम् स्तुतिरूपायाः वाचः पतिं, मेधपतिम् मेधो यज्ञः तल्लक्षितः सोमसवः तस्य पतिं, जलाषभेषजम् जलाषं सुखरूपं भेषजं औषधं यस्य तं रुद्रम् प्रस्तुतं देवम् ॥ गाथपतिम्—गै शब्दे, थन्प्रत्ययः । जलाषभेषजम्—जायन्त इति जाः, जानां लाषः अभिलाषो यस्मिन् तत् जलाषं सुखम्, जलाषरूपं सुखरूपं भेषजं यस्य तम् । रुद्रसंबन्धि औषधं अलौकिकं सुखरूपम् । जलमेव जलाषं भेषजं यस्येति प्राहुरेके, तत्र प्रक्रिया न ज्ञायते ॥

पञ्चमीमृचमाह—

यः शुक्र इव सूर्यो हिरण्यमिव रोचते ।
श्रेष्ठो देवानां वसुः ॥५॥

यः शुक्रःऽइव सूर्यः हिरण्यम्ऽइव रोचते श्रेष्ठः देवानाम् वसुः ॥

यः रुद्रः शुक्र इव सूर्यः सूर्य इव दीप्तिमान् हिरण्यमिव रोचते सुवर्णम् इव प्रीतिकरो भवति, सः देवानाम् सर्वेषां मध्ये श्रेष्ठः प्रशस्यतमः वसुः वासयिता, सर्वेषां वासहेतुश्च भवति ॥ रोचते—रुच दीप्तौ प्रीत्यां च । वसुः—वस निवासे, अन्तर्भावितण्यर्थः, उप्रत्ययः ॥

इति प्रथमस्य तृतीये षड्विंशो वर्गः

षष्ठीमृचमाह—

शं नः करत्यर्वते सुगं मेषाय मेष्यै ।
नृभ्यो नारिभ्यो गवे ॥६॥

शम् नः करति अर्वते सुऽगम् मेषाय मेष्ये नृऽभ्यः नारिऽभ्यः गवे ॥

नः अस्माकं सम्बन्धिने अर्वदादये सुगम् सुष्ठु गम्यम् शम् सुखं देवः करति करोति । केभ्यः ? अर्वते अश्वाय मेषाय तज्जातिपुरुषाय मेष्ये मेष्यै तज्जातिस्त्रियै नृभ्यः पुरुषेभ्यः नारिभ्यः स्त्रीभ्यः गवे गोजातये, एवं अस्मदीयेभ्यः सर्वेभ्यः शं करोति रुद्रः ॥ करति–करोति, व्यत्ययेन शप् । अर्वते--अर्तिं अर्वा, वनिप्, चतुर्थ्येकवचने नकारस्य तृ आदेशः । मेष्ये–चतुर्थ्येकवचने आगमानुशासनमनित्यम् इति आडागमाभावः ॥

सप्तमीमृचमाह—

अस्मे सोम श्रियमधि नि धेहि शतस्य नृणाम् ।
महि श्रवस्तुविनृम्णम् ॥७॥

अस्मे इति सोम श्रियम् अधि नि धेहि शतस्य नृणाम् महि श्रवः तुविऽनृम्णम् ॥

हे सोम, नृणाम् शतस्य पुरुषशतस्य, शतं बहुवाचि, पर्याप्तां श्रियम् सम्पदं अस्मे अस्मासु अधि निधेहि आधिक्येन निक्षिप, बहुपुरुषसङ्घस्य समाश्रय-दानसमर्थं शरणं अस्मासु निधेहि । महि महत् तुविनृम्णम् प्रभूतबलयुक्तं श्रवः श्रवणं च निधेहि । विपुलप्रभावाः भवेम येन बहूनां आश्रयतां प्राप्नुयाम, प्रबलं च भवतु दिव्यावेशश्रवणं नः ॥ अस्मे–सप्तम्याः शे आदेशः । अन्ये गताः ॥

अष्टमीमृचमाह—

मा नः सोम परिबाधो मारातयो जुहुरन्त ।
आ न इन्दो वाजे भज ॥८॥

मा नः सोमऽपरिबाधः मा अरातयः जुहुरन्त आ नः इन्दो इति वाजे भज ॥

सोमपरिबाधः सोमस्य सोमाभिषवस्य परिबाधकाः अयज्वानो रसनिष्पादनप्रतिबन्धकाः अदैव्या इति यावत्। नः अस्मान् मा जुहुरन्त मा बलात्कुर्वन्तु। तथा अरातयः अदातारः अन्ये शत्रवः मा जुहुरन्त। हे इन्दो क्लेदनकारितया रसेन सुखप्रद, सोम देव, वाजे बलसमृद्धौ विषये नः अस्मान् आ सर्वतः भज सेवस्व॥ सोमपरिबाधः—बाधन्त इति बाधः, क्विप् चेति क्विप्। जुहुरन्त—हृ प्रसह्यकरणे, लङि जुहोत्यादित्वात् श्लुः, अन्यच्च छान्दसम्॥

नवमीमृचमाह—

यास्ते॑ प्र॒जा अ॒मृत॑स्य॒ पर॑स्मि॒न्धाम॑न्नृ॒तस्य॑।
मू॒र्धा नाभा॑ सोम वेन आ॒भूष॑न्तीः सोम वेदः ॥९॥

याः ते प्रऽजाः अमृतस्य परस्मिन् धामन् ऋतस्य मूर्धा नाभा सोम वेनः आऽभूषन्तीः सोम वेदः॥

हे सोम, अमृतस्य मरणरहितस्य नित्यस्य, परस्मिन् उत्तमे धामन् धामनि स्थाने स्थितस्य ऋतस्य सत्यस्य ते तव त्वत्संबन्धिन्यः, त्वत्सेविन्यः याः प्रजाः सन्ति ताः वेनः कामयस्व। कीदृशस्त्वम्? मूर्धा शिरःस्थानीयस्त्वं नाभा नाभौ मध्ये, चक्रस्य नाभिरिव स्थिते मुख्ये मध्ये अन्तरे स्थाने त्वदीयाः प्रजाः सुस्थिताः विधाय ताः कमनीयाः कुरु इत्यर्थः। कीदृशीस्ताः? आभूषन्तीः अलङ्कुर्वाणाः नाभिभूतं सर्वान्तरमन्तर्यजनस्थानं इति शेषः। सर्वतस्त्वामलङ्कुर्वाणा इति सायणो मन्यते। हे सोम! तथाभूताः प्रजाः वेदः जानीहि॥ धामन्—सप्तम्या लुक्। नाभा—सप्तम्या डादेशः। वेनः—वेनतिः कान्तिकर्मा, लेट्। वेदः—विद ज्ञाने, लेट्। उभयत्र सिप्यडागमः॥

घौरस्य कण्वस्य रौद्रं सूक्तं समाप्तम्। इदानीं रुद्रस्य तत्त्वमधिकृत्य अवधातव्यः सारांशो वक्ष्यते। त्रिमूर्तिव्यवस्थानुरोधेन पुराणेषु शैवशाक्ताद्यागमेषु च प्रसिद्धो रुद्रः संहारकृत् शिव इत्यपि गीयते। पुराणे वर्णितानां ब्रह्मेन्द्रादीनां वेदे प्रतिपादितानां तेषामेव च विशेषो बोध्यः। प्रागेवोक्तं यदग्न्यादयो देवाः यद्यपि मुखतः पृथक्स्थिताः स्वाधिकारेषु वर्तमाना अत एव विशिष्टलिङ्गा भवन्ति, तथापि तेषामेकैकोऽपि स्वयं

सर्वदेवसहायः अन्तर्निहितसर्वदेवप्रकृतिकः सर्वदेवतामूलभूतपरमपुरुषः स एकस्तदेकं च ज्योतिर्वा भवतीति। एवं एकैकस्या देवतायाः स्वरूपगुणबोधके लिङ्गे लक्ष्यमाणेऽपि तत्रैव क्वचित् अन्यदेवतालिङ्गदर्शनेन देवतावैशिष्ट्यप्रतिपादनं न सुकरं भवति। यथा 'आ वो राजानमध्वरस्य रुद्रम्' (४.३.१) इत्याग्नेयसूक्ते रुद्रवैभवश्रवणात् सामान्यतः अग्निरुद्रयोर्लिङ्गभेदेप्यभेदश्रवणं स्पष्टम्, तथा रुद्रेन्द्रयोः अभेदः अन्यत्र श्रूयते। यद्यप्येवं रुद्रे अग्निगुणं इन्द्रगुणं सर्वेश्वरगुणं च तत्र तत्र मन्त्रेषु वर्णितं लक्षयामः, तथापि रुद्रतत्त्वं दाशतय्या उद्धृत्य कथञ्चिद् ग्राह्यम्। याजुषाथर्वणसंहितयोर्बहुषु रुद्रस्वरूपप्रतिपादकेषु मन्त्रेषु सत्स्वपि, ऋक्संहितायां पठितान् रुद्रमन्त्रान् समालोच्य तत्र वर्णितस्य रुद्रस्य वैशिष्ट्यमेवेह स्मारयामः। अत्रैके मन्यन्ते—यथा पुराणेषु ब्रह्मविष्णुरुद्राणां महत्त्वं, न तथा वेदे। अत एव पुराणप्रथितत्रिमूर्तिवर्णनपराणि सूक्तान्यल्पसंख्याकानि भवन्ति। इन्द्रस्याग्नेर्वा सूक्तानि भूयांसि, तेषां महत्त्वादिति। नैतद्युक्तं। न हि सूक्तसंख्याबाहुल्यं देवताविशेषस्य महत्त्वनिर्णायकं भवति। इन्द्रसूक्तानि भूयिष्ठानि दाशतय्यां, अल्पीयांस्येव सूर्यसूक्तानि, तथापि सूर्य एव परमो देव इति निर्विवादम्। रुद्रदेवताकानि सूक्तानि त्रिचतुराण्येव ऋग्वेदे, मारुतानि त्वधिकानि, तथापि मरुतां पितेति वेदगीतो रुद्रो मरुद्भ्यो न्यून इति चेदुपहसनीयमेव भवति। न वा विष्णुरल्पसंख्याकैः सूक्तैरभिवर्णितः अत्यधिकसूक्तप्रतिपादितादिन्द्रादग्नेर्वा न्यूनो भवति। तस्मान्न सूक्तसंख्यया महत्त्वं निश्चीयते देवताविशेषस्येति बोध्यम्॥

कथं तर्हि महत्तरत्त्वमन्तरा भूयिष्ठानि सूक्तानीन्द्रस्य भूयांस्यग्नेर्वा वेदे गीतानि भवन्ति? ब्रूमः। अन्तर्यागप्रवृत्तानामाद्यानामृषीणां स निष्ठामार्गः ऊर्ध्वारोहणपद्धतिः, यत्र ऋषेरुपास्तिदशाविशेषेषु यस्य यस्य देवताविशेषस्य प्रसादोऽन्तर्यामिन आवश्यकः साहाय्यकारी भवति तस्य तस्य प्राधान्यं सूक्तैराविष्कृतं भवति। एवं रुद्रस्य विष्णोर्वा न तथा प्राधान्यं भवति यथा दशाविशेषेषु अग्नेरिन्द्रस्य वा आवश्यकतामूलकं प्राधान्यं भवति। इदं तर्हि विचारणीयम्—कीदृशं वर्णितं भवति वेदे ब्रह्मणो रुद्रस्य विष्णोर्वा स्वरूपं लक्षणं वेति? उच्यते। ब्रह्मणस्पतेस्तत्त्वं विचारितम्। तत्र ब्रह्मणोऽधिकार उपन्यस्तः। तत्रोक्तस्य सारांश इह स्मार्यः। ब्रह्मबृहस्पत्योरधिकारस्य ब्रह्मणस्पतौ समन्वयमवोचाम। स वाचा सृजति सर्वम्। सृष्टिश्च आविष्कारात्मिका भवति। सतामेव वस्तूनां तमसि निमग्नानां उद्धरणद्वारा प्रकाशप्राप्तिः सम्पद्यते। तामेतां

सृष्टिशब्दवाच्यां विश्वस्याप्याविष्कृतिं निर्वहन् ब्रह्मा ब्रह्मणस्पतिः स्रष्टोच्यते। सोऽचेतनाचमसः सर्वाणि वस्तून्युत्थाप्य तेषां प्राणमनोज्ञानयुक्तानि रूपाणि सम्पादयति। स एष ब्रह्मा ॥

रुद्रस्तु तां सृष्टिं प्रसह्योर्ध्वं नयति। तस्योन्नयनस्य ये प्रतिरोधकाः सन्तः तत्र प्रमत्ता वा प्रत्यवतिष्ठन्ते तान् प्रहरति, कशाभिस्ताडयन्निव शिक्षयति, प्रध्वंसयति च पापान् प्रतिबन्धकान् आयुधपाणिरुग्रः शर्व इति श्रुतश्च। एवं घोरोऽपि स शिवो दयालुः प्रसादयत्यार्तान् सर्वार्तिनाशनः शिवङ्करः शिवतमभैषज्येन। विष्णुस्तु पदत्रयक्रमणेन विश्वं धारयमाणः मर्त्येष्वस्मासु इन्द्राय विततं स्थानं दधाति, येन वयं परं धाम गच्छेम। एवं वेदप्रतिपादितस्य महतो देवतात्रयस्य विवरणं सुलभं भवति तत्तत्सूक्तार्थविचारतः इत्यलं विस्तरेण ॥

अथ रुद्रशब्दोऽवयवार्थानुगमेनापि घोर उग्र इत्याद्यर्थको भवति। यद्यपि प्राचीनार्यभाषाशाखीयानां रक्तकान्त्याद्यर्थकधातूनां रुप्यतिरुशत्यादीनां परीक्षणेन रुद्रशब्दस्य रुधिरार्थकधातुसंबन्धो वृत्तचर इति नव्यानामूहो न्याय्य एव भवति, तथापि तेषामेव धातूनां उग्रभीषणाद्यर्थकत्वं वर्तत इति बहुमन्त्रपर्यालोचनेन सुगमं स्यात्। 'सोऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वं' इत्यादिब्राह्मणनिर्वचनम् वैदिकपदस्वरूपपरीक्षायां न युक्तं भवति। न चोपयुक्तं स्यात् 'रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वे'-त्यादि विशृङ्खलविकल्पभूयिष्ठं शब्दरूपावतारमर्यादाविदूरकल्पनाशबलं नैरुक्तं निर्वचनम्। उग्रो घोरो वा भवति रुद्रशब्दार्थो वेदे रूढः। तस्मादास्तां रुद्रो रोदयतेः, उन्नयनमार्गपरिपन्थिनः रोदयति रोषणो रुद्र इति। ईदृशः प्रचण्डकर्मा प्राणबलानामखण्डनिधिरेक एव बहूनां रुद्राणां पिता, मरुतां पितेति च प्रसिद्धः, शिवं तन्वानो जगत्पितेति च ऋग्वेदे कुत्सगृत्समदवसिष्ठसूक्तान्यावेदयन्ति। अन्यत्र च 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः' (६.६६.३) 'ते जज्ञिरे दिव ऋष्वास उक्षणो रुद्रस्य मर्या असुरा अरेपसः' (१.६४.२) इत्येवंजातीयकैर्मन्त्रैः रुद्रस्य महत्त्वं बहुपुत्रत्वं पृश्निमातॄणां इन्द्रभ्रातॄणां मरुतां पितृत्वं च आर्तिहरत्वादि च प्रतिपादितानि भवन्ति। स एष रुद्रो भुवनस्य पिता सर्वस्यापि सुखकृत् अन्तःस्थितो मृत्युञ्जय इति चान्ये मन्त्रा उद्घोषयन्ति। 'भुवनस्य पितरं गीर्भिरामी रुद्रं दिवा वर्धया रुद्रमक्तौ' (६.४९.१०) 'अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया' (८.७२.३) 'शं नो रुद्रो रुद्रेभिर्जलाषः' (७.३५.६)

'रुद्रो रुद्रेभिर्देवो मृळयाति नः' (१०.६६.३) इत्यन्याश्चैवंविधा ऋचः सूक्तेषु तत्र तत्र द्रष्टव्याः। 'त्र्यम्बकं यजामहे' इति (७.५९.१२) मृत्युञ्जयरुद्रमन्त्रार्थचिन्तनात् मृत्योर्विमोक्षणलक्षणं वेदोक्तमतिचिरन्तनरहस्यं विदितं भवति। तत्र उत्तरेणार्धर्चेन बन्धनान्मोक्षो येन दृष्टान्तेन निरूपितं भवति, सोऽद्यापि योगिभिर्ज्ञानिभिः भाषाभेदेनोपयुज्यते स्वानुभूतिमूलकतत्त्वोपदेशप्रसङ्गेषु। 'उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्' इत्यस्य तात्पर्यं तु–यथा उर्वारुकं नाम कर्कटीफलं परिपक्वं सत् परिवेष्टनत्वचः पृथग्भूतं अत एव मुक्तं भवति (वृन्तात् बन्धनात् फलं मुक्तं भवतीत्येके) तथा अन्तरात्मनः पुरुषस्य मृत्युग्रस्ताच्छरीरात्पृथग्भावः परिपक्वस्य मानुषस्य अनुभवात्मको मोक्षो भवतीत्याशयः। एवं मृत्योर्बन्धनान्मोचय, अमृतात् मा मोचयेति ऋषिर्ब्रूते। ईदृशमोक्षविषयकानुभव एव मूलं भवति 'तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण' (कठोपनिषत् ६.१७) एवंविधस्योपनिषद्वाक्यस्य। एतावान् महिमा त्रिलोकपितुः 'त्र्यम्बकस्य' 'पुष्टिवर्धनस्य' मृत्युञ्जयस्य रुद्रस्य वेदे गीत इति शिवम्॥

इति प्रथमस्य तृतीये सप्तविंशो वर्गः

इति प्रथमे मण्डलेऽष्टमोऽनुवाकः

अथ नवमोऽनुवाकः। तत्र सप्त सूक्तानि। कण्वपुत्रः प्रस्कण्व ऋषिः। चतुर्दशर्चं 'अग्ने विवस्वत्' इति प्रथमं सूक्तम्। कृत्स्नं सूक्तमाग्नेयम्। आद्ये द्वे अश्विदेवताके उषोदेवताके च। अयुजो बृहत्यः, युजः सतोबृहत्यः॥

तत्र प्रथमामृचमाह—

अग्ने॒ विव॑स्वदु॒षस॑श्चि॒त्रं राधो॑ अमर्त्य ।
आ दा॒शुषे॑ जातवेदो वहा॒ त्वम॒द्या दे॒वाँ उ॑ष॒र्बुधः॑ ॥१॥

अग्ने॑ विव॑स्वत् उ॒षसः॑ चि॒त्रम् राधः॑ अ॒म॒र्त्य॒ आ दा॒शुषे॑ जा॒त॒ऽवे॒दः॒ व॒ह॒ त्वम् अ॒द्य दे॒वान् उ॒षः॒ऽबुधः॑ ॥

हे अमर्त्य मरणरहित, जातवेदः जातानां वेदितः, अग्ने, त्वम् विवस्वत् प्रकाशयुक्तं चित्रम् नानाविधम् राधः धनं उषसः उषोदेव्याः सकाशात् आवह आहर। कस्मै? दाशुषे दत्तवते यजमानाय। किञ्च, अद्य इदानीं उषर्बुधः उषसि बुध्यमानान् देवान्

आवहेति संबन्धः। ऋतज्योतिरुदयात्प्रागुषस आविष्कार इति पूर्वं सविस्तरमुक्तमत्र स्मार्यम्। अन्तर्यजने तस्मादुषसि सर्वदेवानयनं अग्नेः कृत्यं भवति॥ विवस्वदादयः सर्वे गताः। जातवेदः—अस्य बहुधा भवति यास्कीयं निर्वचनम्। अस्माकं तु, जातानि वेत्तीति जातवेदाः, असुन्। उषर्बुधः—उषसि बुध्यन्त इति उषर्बुधः, रोरुत्वाभावः छान्दसः॥

द्वितीयामृचमाह—

जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम्।
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत्॥२॥
जुष्टः हि दूतः असि हव्यऽवाहनः अग्ने रथीः अध्वराणाम् सऽजूः अश्विऽभ्याम् उषसा सुऽवीर्यम् अस्मे इति धेहि श्रवः बृहत्॥

हे अग्ने, त्वं जुष्टः सेवितः, दूतः देवानां दूतः, हव्यवाहनः हव्यस्य हविषः अर्पितस्य वाहनो वोढा प्रापयिता अध्वराणां रथीः यज्ञानां रथस्थानीयः असि हि। यज्ञान् गन्तव्यं स्थलं प्रापयिता चासि। तथाभूतस्त्वं अश्विभ्याम् उभाभ्याम् उषसा च सजूः सहितो भूत्वा सुवीर्यम् शोभनवीर्ययुक्तं बृहत् महत् दिव्यं श्रवः श्रवणं अस्मे अस्मासु धेहि प्रक्षिप॥ रथीः—रथशब्दात् स्वार्थिक ईकारप्रत्ययः। जुष्टादयः सर्वे गताः॥

तृतीयामृचमाह—

अद्या दूतं वृणीमहे वसुमग्निं पुरुप्रियम्।
धूमकेतुं भाऋजीकं व्युष्टिषु यज्ञानामध्वरश्रियम्॥३॥
अद्य दूतम् वृणीमहे वसुम् अग्निम् पुरुऽप्रियम् धूमऽकेतुम् भाःऽऋजीकम् विऽउष्टिषु यज्ञानाम् अध्वरऽश्रियम्॥

अद्य इदानीं, अस्मिन् दिने अग्निम् वृणीमहे प्रार्थयामहे। कीदृशम्? दूतं देवानां दूतं वसुम् धनभूतं पुरुप्रियम् पुरूणां बहूनां प्रियं धूमकेतुम् धूमलक्षणं (प्रागुक्तस्वरूपं १.२७.११) भाऋजीकम् भासः प्रकाशस्य ऋजीकं प्रार्जयितारम् व्युष्टिषु उषःसु यज्ञानां यजनविशेषाणां संबन्धिनं अध्वरश्रियम् अध्वरं श्रयत इति अध्वरश्रीः तम्॥ अद्या—निपातस्य

चेति दीर्घः । भाऋजीकम्—ऋजेश्चेति कन्प्रत्ययः, भासं ऋज्वीं करोतीत्यर्थः । व्युष्टिषु—उच्छी विवासे ॥

चतुर्थीमृचमाह—

श्रेष्ठं यविष्ठमतिथिं स्वाहुतं जुष्टं जनाय दाशुषे ।
देवाँ अच्छा यातवे जातवेदसमग्निमीळे व्युष्टिषु ॥४॥

श्रेष्ठं यविष्ठम् अतिथिम् सुऽआहुतम् जुष्टम् जनाय दाशुषे देवान् अच्छ यातवे जातऽवेदसम् अग्निम् ईळे विऽउष्टिषु ॥

श्रेष्ठम् अतिशयेन प्रशस्तं यविष्ठम् युवतमं अतिथिम् सततगमनक्षमं सत्कारार्हं स्वाहुतम् सुष्ठु समन्तात् हुतं दाशुषे दत्तवते जनाय यजमानाय जुष्टम् प्रीतं जातवेदसम् जातानां सर्वेषां वेदितारं, अग्निम् देवम् व्युष्टिषु उषस्सु देवान् सर्वान् अच्छ अभिमुखं यातवे गन्तुं ईळे अध्येषे ॥ अतिथिम्—अत सातत्यगमने, इथिन्प्रत्ययः । स्वाहुतम्—आहूयते अस्मिन् इत्याहुतः, हु दानादनयोः ॥

पञ्चमीमृचमाह—

स्तविष्यामि त्वामहं विश्वस्यामृत भोजन ।
अग्ने त्रातारममृतं मियेध्य यजिष्ठं हव्यवाहन ॥५॥

स्तविष्यामि त्वाम् अहं विश्वस्य अमृत भोजन अग्ने त्रातारम् अमृतम् मियेध्य यजिष्ठम् हव्यऽवाहन ॥

विश्वस्य सर्वस्यापि जगतः अमृत भोजन अमृतत्वविशिष्टभोगसमर्थ विश्वस्य नित्यो भोक्ता भोजयिता परिपालकोऽग्निरित्यर्थः, तादृश, हव्यवाहन, हविषो वोढः, मियेध्य मेध्य यज्ञार्ह, अग्ने, अमृतं मरणरहितं, त्रातारम् विश्वस्य रक्षकं यजिष्ठं अतिशयेन यष्टारं त्वाम् अहम् स्तविष्यामि स्तोष्यामि स्तुत्या कीर्तयिष्यामि ॥ स्तविष्यामि—इडागमव्यत्ययः छान्दसः । भोजन—भुनक्तेः, नन्द्यादिलक्षणो ल्युः । मियेध्य—इयागमः छान्दसः । यजिष्ठम्—यष्टृशब्दात् इष्ठन् छन्दसि ॥

इति प्रथमस्य तृतीयेऽष्टाविंशो वर्गः

षष्ठीमृचमाह—

सुशंसो बोधि गृणते यविष्ठ्य मधुजिह्वः स्वाहुतः ।
प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे नमस्या दैव्यं जनम् ॥६॥

सुऽशंसः बोधि गृणते यविष्ठ्य मधुऽजिह्वः सुऽआहुतः प्रस्कण्वस्य प्रऽतिरन् आयुः जीवसे नमस्य दैव्यम् जनम् ॥

हे यविष्ठ्य युवतम अग्ने, गृणते स्तुवते यजमानाय त्वं सुशंसः शोभनः शंसः स्तुतिः यस्य सः, सुष्ठु शंसनीय इत्यर्थः, मधुजिह्वः मधुमयी आनन्दकरी जिह्वा ज्वाला यस्य सः, स्वाहुतः सुष्ठु आभिमुख्येन हुतः सन् बोधि बुध्यस्व यजमानगतं सर्वं जानीहि तदनुग्रहार्थमित्यर्थः, अपि च प्रस्कण्वस्य अस्य मम यजमानस्यर्षेः (ज्ञानार्थककण्वप्रभवस्य प्रकृष्टज्ञानस्येत्यन्वयवार्थानुगमादुपपत्तिरन्तर्यागे द्रष्टव्या) जीवसे जीवनाय आयुः प्रतिरन् वर्धयन् दैव्यम् देवसंबन्धिनं जनम् नमस्य पूजय, प्रस्कण्वस्य शुभजीवनाय आयुर्वर्धय, तेन देववृन्दस्य पूजनं कृतवान् भवेः। कथम्? प्रस्कण्वस्यायुः देवतार्थमेव विहितं भवति॥ प्रस्कण्वस्य–प्रभूतिरुत्पत्तिः कण्वाद्यस्य तस्य, प्रस्कण्वे हरिश्चन्द्रे च सुडागमो निपातितः। प्रतिरन्–प्रपूर्वस्तिरतिर्वर्धनार्थः। नमस्य–नमसः क्यच् पूजार्थे। दैव्यम्–देवाद्यञ् तस्येदमित्यर्थे॥

सप्तमीमृचमाह—

होतारं विश्ववेदसं सं हि त्वा विश इन्धते ।
स आ वह पुरुहूत प्रचेतसोऽग्ने देवाँ इह द्रवत् ॥७॥

होतारम् विश्वऽवेदसम् सम् हि त्वा विशः इन्धते सः आ वह पुरुऽहूत प्रऽचेतसः अग्ने देवान् इह द्रवत् ॥

विशः प्रजाः होतारम् विश्ववेदसम् विश्वस्य वेदितारं सर्वज्ञं त्वा त्वाम् समिन्धते हि ज्वलयन्ति खलु। हे पुरुहूत बहुभिराहूत अग्ने, सः तादृशस्त्वं प्रचेतसः प्रकृष्टचेतोयुक्तान् देवान् इह अस्मिन् यजने द्रवत् क्षिप्रं आवह आभिमुख्येन प्रापय॥ होतारम् इत्यादयः सर्वे गताः॥

अष्टमीमृचमाह—

सवितारमुषसमश्विना भगमग्निं व्युष्टिषु क्षपः ।
कण्वासस्त्वा सुतसोमास इन्धते हव्यवाहं स्वध्वर ॥८॥

सवितारम् उषसम् अश्विना भगम् अग्निम् विऽउष्टिषु क्षपः
कण्वासः त्वा सुतऽसोमासः इन्धते हव्यऽवाहम् सुऽअध्वर ॥

हे स्वध्वर शोभनाध्वरात्मकयज्ञयुक्ताग्ने, व्युष्टिषु उषःसु क्षपः रात्रिषु, विभक्तिव्यत्ययः सर्वदेत्यर्थः सवितृप्रभृतीनावहेति पूर्वेण संबन्धः । सवितारम्, उषसम् उषोदेवीं अश्विना अश्विनौ भगम् एतन्नामकं आदित्यं अग्निम् देवान् प्रति हविषः प्रापयितापि अग्निः तत्र भागमर्हति, तस्मात् देवतान्तरत्वेन तं गणयित्वा तमेव प्रार्थयते । अत्र अग्नेः सामान्यविशेषभावो बोध्यः । सामान्याग्निर्दूतः प्रार्थितः । हविर्भागादानाय आगतानां देवानां अग्निः अप्येकः, उच्यतां सोऽग्निविशेषः । 'व्युष्टिषु' उषसमप्यावहेत्यत्रापि उषोदेवीमावह अहःसु क्षपास्वपि इति सार्वकालिकदेवतासान्निध्यसम्पादनसमर्थमग्निं याचते । अत्र 'क्षपः' रात्र्यभिमानिनीं देवतां च आवहेति केचिन्मन्यन्ते । सुतसोमासः अभिषुतसोमाः कण्वासः कण्वा ऋषयो मेधाविनः हव्यवाहं त्वा त्वां इन्धते ज्वलयन्ति । क्षपः--क्षपाः, द्वितीयाबहुवचनम् । शसि आतो धातोरिति आकारलोपः । अन्ये गताः ॥

नवमीमृचमाह—

पतिर्ह्यध्वराणामग्ने दूतो विशामसि ।
उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ॥९॥

पतिः हि अध्वराणाम् अग्ने दूतः विशाम् असि उषःऽबुधः
आ वह सोमऽपीतये देवान् अद्य स्वःऽदृशः ॥

हे अग्ने, विशाम् प्रजानां दूतः देवान् प्रति असि । अध्वराणां पतिः हि त्वं यज्ञानां पालकः खलु । अत एव विशां क्षेमाय दूतकर्म करोषि । अद्य अस्मिन् दिने उषर्बुधः उषसि प्रबुध्यमानान् स्वर्दृशः स्वःशब्दवाच्यस्य सत्यज्योतिरात्मनः सूर्यस्य द्रष्टॄन् देवान्, सोमपीतये सोमपानाय आवह इह प्रापय ॥ स्वर्दृशः—सुष्ठु अर्तिं गच्छतीति स्वरादित्य इति

सायणः । प्रकाशार्थात् स्वृधातोः स्वरधातोर्वा सूर्यवाची स्वरिति वयम् । स्वरव्ययम् तृतीया व्याहृतिः । स्वः पश्यन्तीति स्वर्दृशः, क्विप् चेति क्विप् ॥

दशमीमृचमाह—

अग्ने पूर्वा अनूषसो विभावसो दीदेथ विश्वदर्शतः ।
असि ग्रामेष्वविता पुरोहितोऽसि यज्ञेषु मानुषः ॥१०॥

अग्ने पूर्वाः अनु उषसः विभाऽवसो इति विभाऽवसो दीदेथ विश्वऽदर्शतः असि ग्रामेषु अविता पुरःऽहितः असि यज्ञेषु मानुषः ॥

हे विभावसो विशिष्टा भा प्रकाशः विभा वसु धनं यस्य स तथाभूत अग्ने, विश्वदर्शतः विश्वं दर्शतं दर्शनीयं दर्शनक्षमं यस्य सः, विश्वदृष्टिः, विश्वं दृष्टिगोचरमग्नेरित्यर्थः तादृशः त्वं पूर्वा उषसः अनु अतीतानि चित्प्रकाशप्रभातान्यनुलक्ष्य दीदेथ दीप्तवानसि । ग्रामेषु संघेषु युध्यमानेषु अविता असि रक्षिताऽसि । यज्ञेषु पुरोहितः पुरस्तान्निहितः देवः, मानुषः यजमानस्य मनुष्यस्य हितः असि भवसि ॥ ग्रामेषु--जननिवासस्थानेषु इति सायणः । अवितेत्यस्यासचेः संघपर्यायो युक्ततरः, एवं सायण एवान्यत्र 'ग्रामः भरतानां संघः' (३.३३.११) 'अपश्यं ग्रामम् (भूत) सङ्घम्' (१०.२७.१९) । अन्तर्यजने महत ऋतस्य ज्योतिषः प्रादुर्भावात् पूर्वं बह्वय उषसो भवन्ति । तत्रैकैकस्यामुषसि प्रबुद्धोऽग्निः यजमानस्य हितः कार्यं निर्वहति पुरोहितो भूत्वा । बाह्ये कर्मणि तु प्रत्यहं उषःकाल एव भवति ॥

इति प्रथमस्य तृतीय एकोनत्रिंशो वर्गः

एकादशीमृचमाह—

नि त्वा यज्ञस्य साधनमग्ने होतारमृत्विजम् ।
मनुष्वद्देव धीमहि प्रचेतसं जीरं दूतममर्त्यम् ॥११॥

नि त्वा यज्ञस्य साधनम् अग्ने होतारम् ऋत्विजम् मनुष्वत् देव धीमहि प्रऽचेतसम् जीरम् दूतम् अमर्त्यम् ॥

हे अग्ने, देव, त्वा त्वां मनुष्वत् मनुरिव, यथा मनुः तथा वयम् निधीमहि स्थापयामः । कीदृशम् ? यज्ञस्य साधनम् यागनिष्पादकं होतारम् ऋत्विजम् काले यष्टारं प्रचेतसम् प्रकृष्ट-

ज्ञानयुक्तं जीरम् शीघ्रं दूतम् देवानां दूतं अमर्त्यम् मरणरहितम् ॥

मनुष्वत्–औणादिक-उसिप्रत्ययान्तो मनुस्शब्दः, गतः । प्राग्व्याख्यातम् (१.३१.१७) । जीरम्–क्षिप्रनाम, जु इति सौत्रो धातुः, जोः ई चेति रक्प्रत्ययः इति कात्यायनः, उपपन्ना चेयं रूपनिष्पत्तिः क्षिप्रार्थत्वात् । जॄ वयोहानौ इति धातोर्निष्पन्न इति कृत्वा व्याख्याय सायणः प्रक्रियादाने तु कात्यायनमुदाहरति ॥

द्वादशीमृचमाह—

यद्देवानां मित्रमहः पुरोहितोऽन्तरो यासि दूत्यम् ।
सिन्धोरिव प्रस्वनितास ऊर्मयोऽग्नेर्भ्राजन्ते अर्चयः ॥१२॥

यत् देवानां मित्रऽमहः पुरःऽहितः अन्तरः यासि दूत्यम् सिन्धोःऽइव प्रऽस्वनितासः ऊर्मयः अग्नेः भ्राजन्ते अर्चयः ॥

हे मित्रमहः मित्रैः अन्यैर्देवैः मह्यते पूज्यते इति मित्रमहाः तथाभूत मित्राणां पूज्य अग्ने, यत् यदा पुरोहितः पुरस्तात् स्थापितस्त्वं अन्तरः अन्तर्यजनस्थानमध्ये वर्तमानः सन् दूत्यम् देवानां दूतकर्म यासि प्राप्नोषि, तदा अग्नेः तव अर्चयः दीप्तयः भ्राजन्ते दीप्यन्ते । तत्र दृष्टान्तः–सिन्धोरिव यथा समुद्रस्य प्रस्वनितासः प्रकृष्टघोषयुक्ताः ऊर्मयः तरङ्गाः भ्राजन्ते तद्वत् ॥ प्रस्वनितासः–स्वनितं, स्वन शब्दे, भावे निष्ठा, प्रकृष्टं स्वनितं येषां ते, जसः असुगागमः ॥

त्रयोदशीमृचमाह—

श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।
आ सीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ॥१३॥

श्रुधि श्रुत्ऽकर्ण वह्निभिः देवैः अग्ने सयावऽभिः आ सीदन्तु बर्हिषि मित्रः अर्यमा प्रातःऽयावानः अध्वरम् ॥

हे श्रुत्कर्ण श्रवणशालिकर्णसम्पन्न, अग्ने, श्रुधि शृणु अस्मत्प्रार्थनामिति शेषः । मित्रः अर्यमा प्रातर्यावानः प्रभाते यजनं गच्छन्तो ये चान्ये देवाः सन्ति, ते सयावभिः त्वया

सह समानगतिभिः वह्निभिः वोढृभिर्हविर्भागस्येति शेषः, अन्यैः देवैः सह अध्वरम् यजनमुद्दिश्य बर्हिषि आस्तीर्णे आ सीदन्तु उपविशन्तु ॥ श्रुत्कर्ण—गतम् । सयावभिः—समानं यान्तीति सयावानः, आतो मनिन्निति वनिप् । एवमेव प्रातर्यावानः ॥

चतुर्दशीमृचमाह—

शृण्वन्तु स्तोमं मरुतः सुदानवोऽग्निजिह्वा ऋतावृधः ।
पिबतु सोमं वरुणो धृतव्रतोऽश्विभ्यामुषसा सजूः ॥१४॥

शृण्वन्तु स्तोमम् मरुतः सुऽदानवः अग्निऽजिह्वाः ऋतऽवृधः
पिबतु सोमम् वरुणः धृतऽव्रतः अश्विऽभ्याम् उषसा सऽजूः ॥

मरुतः देवाः स्तोमम् इदं स्तोत्रं शृण्वन्तु आकर्णयन्तु । कीदृशाः ? सुदानवः सुष्ठु दातारः अग्निजिह्वाः अग्निर्जिह्वास्थानीयो येषां ते । ऋतावृधः सत्यस्य वर्धकाः । तथा धृतव्रतः धृतं गृहीतं व्रतं कर्म येन स वरुणः देवः अश्विभ्याम् देवाभ्यां उषसा देव्या च सजूः सहितः सोमम् पिबतु ॥ अग्निजिह्वाः—अन्तोदात्तत्वं छान्दसम् । अन्ये गताः ॥

इति प्रथमस्य तृतीये त्रिंशो वर्गः

अथ नवमेऽनुवाके द्वितीयं 'त्वमग्ने वसू'निति दशर्चं सूक्तम् । प्रस्कण्व ऋषिः अनुष्टुप्छन्दः अग्निर्देवता, दशम्यां 'अयं सोम' इत्यर्धर्चो देवदेवत्यः ॥

तत्र प्रथमामृचमाह—

त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत ।
यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥१॥

त्वम् अग्ने वसून् इह रुद्रान् आदित्यान् उत यज सुऽअध्वरम्
जनम् मनुऽजातम् घृतऽप्रुषम् ॥

हे अग्ने, त्वं इह अस्मिन् मदीये यजने वसून् रुद्रान् आदित्यान् उत अपि यज पूजय । अपि च स्वध्वरम् शोभनयज्ञसंपन्नं मनुजातम् मनोर्देवस्य मन्तुः प्रजापतिरूपात्

जातं लब्धजन्मानं घृतप्रुषम् घृतेन दीप्त्यात्मकेन घरणेन सेचनेन प्रुष्णन्तं स्नेहयन्तं अञ्जन्तम् इति यावत्, तथाभूतं जन्म च यजेति संबन्धः। न केवलं वस्वादीन् देवान् यज, शुभाध्वरसम्पन्नं धीगतदीप्त्या अग्निं तन्मुखेन देवांश्च अभ्यञ्जन्तं मानुषं जनमपि यज, तादृशस्य मनुजन्मनः देवतुल्यत्वात् देवार्थजीवित्वाच्च ॥ वसुरुद्रादित्याः क्रमशः पृथिव्यादित्रिस्थानाः प्रसिद्धाः ॥

द्वितीयामृचमाह—

श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः।
तान्रोहिदश्व गिर्वणस्त्रयस्त्रिंशतमा वह ॥२॥

श्रुष्टीऽवानः हि दाशुषे देवाः अग्ने विऽचेतसः तान् रोहित्ऽअश्व गिर्वणः त्रयःऽत्रिंशतम् आ वह ॥

हे अग्ने, विचेतसः विशिष्टज्ञानसम्पन्नाः देवाः, दाशुषे दत्तवते यजमानाय श्रुष्टीवानो हि श्रवणानुरोधेन साहाय्यकारिणः खलु। हे रोहिदश्व रोहिन्नामकैः लोहितवर्णैरश्वैर्युक्त, गिर्वणः गीर्भिः स्तुतिभिर्वननीय अग्ने, त्रयस्त्रिंशतं अनया संख्यया संख्यातान् तान् देवान् आवह इहानय ॥ त्रयश्च त्रिंशच्च देवाः प्रागुपन्यस्ताः (१.३४.११) ॥ श्रुष्टीवानः—श्रुष्टी क्षिप्रार्थकः सर्वत्र, प्रेरणार्थकः इत्यत्र सायणः। शृणोतेरानुषङ्गिकात् श्रुषधातोर्निष्पन्न इति प्रयोगबलादूह्यः। श्रुष्टिं श्रवणं वनन्ति संभजन्ते अनन्तरकर्तव्यायेति श्रुष्टीवानः, दीर्घश्छान्दसः। अन्ये गताः ॥

तृतीयामृचमाह—

प्रियमेधवदत्रिवज्जातवेदो विरूपवत्।
अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥३॥

प्रियमेधऽवत् अत्रिऽवत् जातऽवेदः विरूपऽवत् अङ्गिरस्वत् महिऽव्रत प्रस्कण्वस्य श्रुधि हवम् ॥

हे महिव्रत, महाव्रत प्रभूतकर्मन्, जातवेदः अग्ने, प्रस्कण्वस्य मम हवं आह्वानं श्रुधि शृणु। अत्र चत्वारो दृष्टान्ताः—प्रियमेधवत् प्रियमेधस्येव, यथा प्रियमेधस्य ऋषेः,

हवं शृणोषि तद्वत्। अत्रिवत् अत्रेरिव, विरूपवत् विरूपस्येव अङ्गिरस्वत् अङ्गिरस इव। एते च दृष्टान्तभूता ऋषयः॥ प्रियमेधवत्–प्रियो मेधो यज्ञो यस्य सः, तत्र तस्येवेति षष्ठ्यर्थे वतिः। एवम् अत्रिवत्, अत्रिरत्तेः। विरूपः–विविधरूपः नानाकारः। अन्ये गताः॥

चतुर्थीमृचमाह—

महिकेरव ऊतये प्रियमेधा अहूषत।
राजन्तमध्वराणामग्निं शुक्रेण शोचिषा॥४॥

महिऽकेरवः ऊतये प्रियऽमेधाः अहूषत राजन्तम् अध्वराणाम् अग्निम् शुक्रेण शोचिषा॥

महिकेरवः महाकारवः प्रभूतस्तोत्रकर्माणः प्रियमेधाः प्रिययज्ञसम्पन्नाः ऋषयः ऊतये वृद्धये अग्निम् देवं अहूषत आहूतवन्तः। कीदृशम्? शुक्रेण शुभ्रेण शोचिषा रोचिषा अध्वराणाम् यज्ञानां मध्ये राजन्तं भ्राजमानम्। शुभ्रप्रकाशस्य तिमिरापहत्वात् 'शुक्रेण शोचिषा' स्वर्गाध्वगामिनां अध्वरपदवाच्यानां यज्ञानां ईशानमित्यर्थः॥ महिकेरवः–मह पूजायां, महयो महान्तः, औणादिक इन्प्रत्ययः, केरवः, आकारस्य एकारादेशः छान्दसः, महयो कारवो येषां ते। अन्ये गताः॥

पञ्चमीमृचमाह—

घृताहवन सन्त्येमा उ षु श्रुधी गिरः।
याभिः कण्वस्य सूनवो हवन्तेऽवसे त्वा॥५॥

घृतऽआहवन सन्त्य इमाः ऊम् इति सु श्रुधि गिरः याभिः कण्वस्य सूनवः हवन्ते अवसे त्वा॥

घृताहवन घृतेन दीप्तिसेचनेन आहूयमान, (दीप्तया धिया आहूयते अग्निरन्तर्यजने १.१२.५) सन्त्य दातः, इमा उ गिरः अस्माभिः प्रयुज्यमानाः स्तुतीरपि सु श्रुधि सुष्ठु शृणु। याभिः गीर्भिः कण्वस्य ऋषेः सूनवः सुताः त्वा त्वां अवसे स्वीयवर्धनाय हवन्ते आह्वयन्ति॥ घृताहवन–घृतेन आहूयतेऽस्मिन्, अधिकरणे ल्युट्। सन्त्य–षणु दाने, गतः॥

इति प्रथमस्य तृतीय एकत्रिंशो वर्गः

षष्ठीमृचमाह—

त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः ।
शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे ॥६॥
त्वाम् चित्रऽश्रवःऽतम हवन्ते विक्षु जन्तवः शोचिःऽकेशम् पुरुऽप्रिय अग्ने हव्याय वोळ्हवे ॥

हे चित्रश्रवस्तम अतिशयेन विविधश्रुतियुक्त (व्याख्यातम् १.१.५) पुरुप्रिय पुरूणां बहूनां प्रिय प्रीतिकर, अग्ने, त्वाम् हव्याय हवनस्य प्राप्यत्वात् तदर्थं वोढवे वोढुं विक्षु प्रजासु जन्तवः उत्पन्नाः यजमानाः हवन्ते आह्वयन्ति । कीदृशम् ? शोचिष्केशम् शोचींषि केशा यस्य तं, ज्वाला एव ह्यग्नेः केशा उच्यन्ते ॥ सर्वे गताः ॥

सप्तमीमृचमाह—

नि त्वा होतारमृत्विजं दधिरे वसुवित्तमम् ।
श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु ॥७॥
नि त्वा होतारम् ऋत्विजम् दधिरे वसुवित्ऽतमम् श्रुत्ऽकर्णम् सप्रथःऽतमं विप्राः अग्ने दिविष्टिषु ॥

हे अग्ने, विप्राः मेधाविनः दिविष्टिषु दिवः द्युलोकस्य इष्टयः एषणानि येषु तेषु यागेषु त्वा त्वां निदधिरे स्थापितवन्तः । कीदृशम् ? होतारम् ऋत्विजम् ऋतुषु यष्टारम्, वसुवित्तमम् अतिशयेन वसोः धनस्य सारभूतस्य द्रव्यस्य वेदितारं ज्ञातारं वेदयितारं लम्भयितारं वा, श्रुत्कर्णम् श्रवणसमर्थकर्णयुक्तं सप्रथस्तमम् अतिशयेन प्रथितम् ॥ दिविष्टिषु–अत्र दिव उत् इति उत्वं न क्रियते, छन्दसि विधयो विकल्प्यन्ते । अन्ये गताः ॥

अष्टमीमृचमाह—

आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः ।
बृहद्भा बिभ्रतो हविरग्ने मर्ताय दाशुषे ॥८॥

आ त्वा विप्राः अचुच्यवुः सुतऽसोमाः अभि प्रयः बृहत् भाः बिभ्रतः हविः अग्ने मर्ताय दाशुषे ॥

हे अग्ने, सुतसोमाः सोमाभिषवं कृतवन्तो यजमानाः विप्राः मेधाविनः प्रयः अभि प्रियं (वस्तु किमपि, व्याख्यातम् १.२.४) अभिलक्ष्य त्वा त्वां आ अचुच्यवुः आगमयन्ति। कीदृशम् त्वाम्? बृहत् महान्तं, लिङ्गव्यत्ययः, भाः भासमानं च। कीदृशा विप्राः? दाशुषे दत्तवते यजमानाय मर्ताय मनुष्याय हविः हव्यं बिभ्रतः धारयन्तः। यजमानस्य ऋषेः साहाय्यं कृत्वा महान्तं भान्तं अग्निं ये आगमयन्ति ते न साधारणमनुष्या ऋत्विजः, किं तु स्वयं सुतसोमाः विप्राः अत एव अन्तर्यजनरहस्यविदः सिद्धाः मर्त्यानामुपकुर्वते। गुरवः शिष्याणां भारं यथेदानीमपि वहन्तो तेषां कृत्यं निर्वहन्ति तथेति बोध्यम्॥ अचुच्यवुः--च्युङ् गतौ, अन्तर्भावितण्यर्थः, व्यत्ययेन परस्मैपदम्, लङ्, शपः श्लुः। अन्ये गताः॥

नवमीमृचमाह—

प्रातर्याव्णः सहस्कृत सोमपेयाय सन्त्य।
इहाद्य दैव्यं जनं बर्हिरा सादया वसो ॥९॥

प्रातःऽयाव्नः सहःऽकृत सोमऽपेयाय सन्त्य इह अद्य दैव्यम् जनम् बर्हिः आ सादय वसो इति ॥

हे सहस्कृत सहसा बलेन कृत मथित, (सहसः सूनुरग्निः वेदे विश्रुतः) सन्त्य दातः, वसो धनभूत, अग्ने, इह अस्मिन्नस्मदन्तर्यजनस्थाने अद्य इदानीं सोमपेयाय सोमपानार्थं प्रातर्याव्णः प्रातरागन्तॄन् देवान् दैव्यम् जनम् अन्यं देवताजनमपि बर्हिरासादय आस्तीर्णं प्रापय, सिद्धे आसने उपवेशयेत्यर्थः॥ सहस्कृत--तृतीया, अलुगभावश्छान्दसः। अन्ये गताः॥

दशमीमृचमाह—

अर्वाञ्चं दैव्यं जनमग्ने यक्ष्व सहूतिभिः।
अयं सोमः सुदानवस्तं पात तिरोअह्न्यम् ॥१०॥

अर्वाञ्चम् दैव्यम् जनम् अग्ने यक्ष्व सहूतिऽभिः अयम् सोमः सुऽदानवः तम् पात तिरःऽअह्न्यम् ॥

हे अग्ने, अर्वाञ्चम् समीपवर्तिनं (अभिमुखमिति सायणः) दैव्यम् जनम् देवसंबन्धिनं दिव्यभावमापन्नं वा जनम् सहूतिभिः समानाह्वानैः अन्यैर्देवैः सह, यक्ष्व यज। हे सुदानवः सुष्ठु दातारः देवाः, अयम् सोमः वर्तते, युष्माकं स्वीकाराय सुतः सिद्धो भवति। तम् पात पिबत। कीदृशम्? तिरोअह्न्यम् पूर्वस्मिन्नहनि अभिषुतो यः सोमः उत्तरेऽहनि हूयते स तिरोअह्न्य उच्यते यज्ञकर्मसु। अन्तर्यजने तु पूर्वं अभिषुतोऽपि यः सोमः सविलम्बं देवानामागमनं अनुपालयता यजमानेन हूयते स भवति॥ अह्न्यः–अह्नि भवः, भवे छन्दसीति यत्, तिरोहितः अह्न्यः तिरोअह्न्यः, प्रकृत्या अन्तःपादमिति प्रकृतिभावः॥

इति प्रथमस्य तृतीये द्वात्रिंशो वर्गः

एषो उषेति पञ्चदशर्चं तृतीयं सूक्तं प्रस्कण्वस्यार्षं गायत्रीच्छन्दस्कम्, आश्विनम्॥

तत्र प्रथमामृचमाह—

एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः।
स्तुषे वामश्विना बृहत् ॥१॥

एषो इति उषाः अपूर्व्या वि उच्छति प्रिया दिवः स्तुषे वाम् अश्विना बृहत् ॥

एषो एषैव इतो दृश्यमानास्माभिः अपूर्व्या इतः पूर्वमविद्यमाना इदानीमेव प्रादुर्भूता दिवः प्रिया द्युलोकस्य प्रीतिकरी उषाः व्युच्छति व्युष्टा, प्रभाता भवति। हे अश्विना अश्विनौ वाम् युवां बृहत् प्रभूतं यथा तथा स्तुषे स्तौमि॥ उषसि अश्विनोः रतिः प्रसिद्धा, दिवो दुहिता ह्यश्विनोर्भार्या॥ उच्छति–उच्छी विवासे, प्रभातप्रकाशार्थोऽयं धातुः, प्रायेण विपूर्वो वेदे प्रयुक्तः॥

द्वितीयामृचमाह—

या दस्रा सिन्धुमातरा मनोतरा रयीणाम्।
धिया देवा वसुऽविदा ॥२॥

या दुस्रा सिन्धुऽमातरा मनोतरा रयीणाम् धिया देवा वसुऽविदा ॥

या देवा यावुभौ देवौ दस्रा कर्मनिष्पादकौ सिन्धुमातरौ समुद्रमातृकौ, अखण्डसत्त्वात् समुद्भूतौ हि क्रियादक्षविभवौ तौ देवौ रयीणाम् धनानां मनोतरा मनसा तारयितारौ, मनोऽतीतानां उत्तमानां धनानां दिव्यसंपद्रूपाणां मनोमयतां मनोगोचरतां च आपादयितारौ इत्यर्थः, तथाकर्तुं करणभूता काचिद्धीर्भवति, तदाह–धिया कीदृश्या ? वसुविदा वसोर्मूल-द्रव्यस्य सर्वसत्त्वस्य वेदित्र्या लम्भयित्र्या वा। तादृश्या धारणात्मिकया बुद्ध्या 'रयीणां' उक्त-लक्षणानां मनोगोचरतां आपादयन्तौ अश्विनौ 'स्तुषे' इति पूर्वेण संबन्धः। अश्विनावधिकृत्य प्राग्विचारितम्, विशेषतः प्रथमेऽनुवाके॥ मनोतरा–मनसा तरत इति मनोतरौ, अन्तर्भावित-ण्यर्थः, तरतेः अप्, पूर्वपदान्तस्य सकारस्य रुत्वे सति उत्वं छान्दसम्॥

तृतीयामृचमाह—

वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि।
यद्वां रथो विभिष्पतात्॥३॥

वच्यन्ते वाम् ककुहासः जूर्णायाम् अधि विष्टपि यत् वाम् रथः विऽभिः पतात्॥

हे अश्विनौ, वाम् युवयोः रथः जूर्णायाम् स्तुतायां तत्त्ववेदिभिर्ऋषिभिरिति शेषः, अधिविष्टपि स्वर्लोके यत् यदा विभिः अश्वैः पतात् पतति गच्छति, तदा वाम् युवयोः ककुहासः ककुभः महिमानः वच्यन्ते उच्यन्ते उक्ताः स्तुता भवन्ति। स्तुत्ये द्युलोके यदा अश्विनोः रथो गच्छति तदैव अश्विनोरुत्कर्षाः स्पष्टाः लक्ष्यन्ते, ततः स्तुता भवन्ति। न चेत् स्तोत्रस्य वैयर्थ्यं, स्तोत्रस्य याथार्थ्यं तु अश्विरथस्य विष्टपादूर्ध्वयाने दृश्यमानेषु अश्विनोरुत्कर्षेषु उक्तं भवति॥

वच्यन्ते–वचेः संप्रसारणाभावः छन्दसि विकल्पितः। ककुहासः–ककुहः महन्नाम, श्रैष्ठ्ये शृङ्गे उत्कर्षे वा प्रयुक्तो वेदे। ककुभं शृङ्गं विदुरिति सायणः, (अत्र लक्षणया स्तुतय इति व्याचष्टे) भस्य हः छान्दसः। जूर्णायाम्–स्तुत्यर्थात् जरतेः जूर्यतेर्वा 'अग्ने रेभो न जरत

ऋभूणां जूर्णिः' (१.१२७.१०) इत्यादौ प्रयोगः स्पष्टः। विभिः-विशब्दो वेदे पक्षिषु शरेषु अश्वेषु मरुत्सु च वर्तते, वियन्ति गच्छन्तीति वयः। पतात्-लेटि आडागमः॥

चतुर्थीमृचमाह—

हविषा जारो अपां पिपर्ति पपुरिर्नरा।
पिता कुटस्य चर्षणिः॥४॥

हविषा जारः अपाम् पिपर्ति पपुरिः नरा पिता कुटस्य चर्षणिः॥

हे नरा नरौ देवौ अश्विनौ, अपाम् विश्वसर्जनधारणादिसमर्थानां अपूछब्दलक्षितानां शक्तीनां जारः गूढोपभोक्ता, गुप्तरतिकामः अग्निः हविषा यजमानदत्तेन हव्येन पिपर्ति पूरयति देवानिति शेषः। अत्र जारो जरयिता जलानां आदित्य इति सायणः। हविषा पूरणं अग्नेः कृत्यं, न तु सूर्यस्य। जारो रहोरत इति युक्तः, 'जारः कनीनां' 'उषो न जारः' इत्यादौ युक्तिर्द्रष्टव्या। कीदृशोऽसौ अपां जारः? पपुरिः उक्तप्रकारेण पूरणशीलः, पिता पालकः कुटस्य कृतस्य कर्मणः चर्षणिः द्रष्टा। कुटस्येति सकृदेव प्रयोगः ऋक्संहितायाम्। यास्कमनुसृत्य सायणः 'कृतस्य' इति व्याचष्टे। कुटः कुटी इव वासस्थाने गृहे भवति। तर्हि गृहमपि कृतमेव भवति, एवं सङ्गच्छते कुटस्य पिता गृहस्य पालकः अग्निर्गृहपतिरिति, चर्षणिर्द्रष्टेति अन्यद्विशेषणं बोध्यम्। पिपर्ति-पॄ पूरणे, जुहोत्यादिः। पपुरिः-पॄधातोः किन्॥

पञ्चमीमृचमाह—

आदारो वां मतीनां नासत्या मतवचसा।
पातं सोमस्य धृष्णुया॥५॥

आऽदारः वाम् मतीनाम् नासत्या मतऽवचसा पातम् सोमस्य धृष्णुऽया॥

हे मतवचसा, मतं अभिमतं वचः स्तोत्रात्मकं ययोस्तौ, नासत्या नासत्यौ अश्विनौ, वाम् युवयोः मतीनाम् बुद्धीनां आदारः आदरप्रदः उत्तेजकः यः सोमो भवति, तस्य सोमस्य पातम् तं सोमं पिबतम्। कीदृशम्? धृष्णुया धर्षणशीलं मदकरत्वात् तीव्रम्॥ आदारः—

दृङ् आदरे, आदरयतीत्यादारः, दारजारौ कर्तरि, णिलुक्, घञ्। धृष्णुया--विभक्तेर्याजादेशः॥

इति प्रथमस्य तृतीये त्रयस्त्रिंशो वर्गः

षष्ठीमृचमाह—

या नः पीपरदश्विना ज्योतिष्मती तमस्तिरः।

तामस्मे रासाथामिषम् ॥६॥

या नः पीपरत् अश्विना ज्योतिष्मती तमः तिरः ताम् अस्मे इति रासाथाम् इषम् ॥

हे अश्विना अश्विनौ, ज्योतिष्मती सारसम्पन्नसत्यात्मकज्योतिर्युक्ता या इट् एषणा तमः अन्धकारं तिरः अन्तर्हितं कृत्वा नः अस्मान् पीपरत् पारयेत् गन्तव्यं प्रापयेदित्यर्थः, ताम् इषम् एषणात्मिकां प्रेरणाशक्तिं अस्मे अस्मभ्यं रासाथाम् युवां दत्तम्। अत्र 'इषं' अन्नमिति सायणः, तदनुसारेण 'तमः' दारिद्र्यरूपं अन्धकारं इति व्याख्यातव्यमनिवार्यमभवत्। अस्माकं तु, तमः प्रकाशप्रतिद्वन्द्वि, तत् तिरस्कृत्य गन्तुमावश्यकी प्रेरणाशक्तिर्ज्योतिष्मती, सा अश्विभ्यां लब्धव्या॥ पीपरदादयो गताः॥

सप्तमीमृचमाह—

आ नो नावा मतीनां यातं पाराय गन्तवे।

युञ्जाथामश्विना रथम् ॥७॥

आ नः नावा मतीनां यातम् पाराय गन्तवे युञ्जाथाम् अश्विना रथम् ॥

हे अश्विना अश्विनौ, मतीनाम् मनोमयीनां धीवृत्तीनां पाराय गन्तवे मनोमयं प्रपञ्चमतीत्य वर्तमानं पारं गन्तुं नावा नौरूपेण यानसाधनेन नः अस्मदर्थं आयातम् आगच्छतम्। अश्विनौ सिन्धुमातरौ ह्युक्तौ, तद्युक्तं नौरूपं यात्रासाधनम्। रथम् भवदीयं युञ्जाथाम् अश्वयुक्तं कुरुताम्॥

अष्टमीमृचमाह—

अरित्रं वां दिवस्पृथु तीर्थे सिन्धूनां रथः।
धिया युयुज्र इन्दवः ॥८॥

अरित्रम् वाम् दिवः पृथु तीर्थे सिन्धूनाम् रथः धिया युयुज्रे इन्दवः ॥

हे अश्विनौ, वाम् युवयोः अरित्रम् नौरूपं साधनं दिवः द्युलोकादपि पृथु विस्तीर्णं भवति। किञ्च रथः भवदीयः सिन्धूनां समुद्राणां तीर्थे तीरे अवतरणप्रदेशे विद्यते। इन्दवः सोमाः धिया धारणसमर्थया बुद्ध्या युयुज्रे युक्ता भवन्ति ॥ अरित्रम्–ऋ गतौ, अर्तेः इत्र-प्रत्ययः। तीर्थे–तरतेः थक्। युयुज्रे–लडर्थे लिट्, एचो रे आदेशः ॥

नवमीमृचमाह—

दिवस्कण्वास इन्दवो वसु सिन्धूनां पदे।
स्वं वव्रिं कुह धित्सथः ॥९॥

दिवः कण्वासः इन्दवः वसु सिन्धूनाम् पदे स्वम् वव्रिम् कुह धित्सथः ॥

हे कण्वासः कण्वा ऋषयः मेधाविनो वा, 'अश्विनावित्थं पृच्छतेति शेषः' इति सायणः। यद्यपि चिन्त्यमेवेदं, केनाप्यध्याहारेण विना दुर्घटमेव तात्पर्यमिति नव्याः। नैवम्, पुरस्तात् ब्रूमः। इन्दवः सोमाः दिवः द्युलोकात् प्रादुर्भूताः विद्यन्ते, वसु सत्त्वात्मकं धनं सिन्धूनाम् समुद्राणां पदे स्थाने विद्यते। हे अश्विनौ युवां स्वम् स्वीयं वव्रिम् रूपं कुह कुत्र धित्सथः धातुं स्थापयितुमिच्छथः ? द्युस्थानः सोमः प्रसिद्धः। 'उच्चा ते जातमन्धसः दिवि सत्' । (९.६१. १०) इत्यादयो मन्त्रवर्णाः प्रमाणम्। अखण्डसत्त्वसमृद्धः समुद्रः प्रथितः, तत्र वसु विद्यते। सिन्धुमातरौ अश्विनौ वसुविदौ, सोमस्य पातारौ च भवतः, अतः पृच्छति स्तोता यजमानः 'हे अश्विनौ युवां किं वसुस्थाने समुद्रे उत सोमजन्मस्थाने दिवि वा स्वीयं रूपं शरीरं आविष्कृत्य प्रतिष्ठापयथः' इत्यत्र, कण्वास इति अश्विनोरेव संबोधनं गृहीतं चेत् क्लेशः शिथिलितः स्यात्, अध्याहारोप्यनावश्यकः। कथमेवं संबोधनमश्विनोरुपपद्यते ? ऋषयः स्वनाम्ना देवता-

माह्वयन्ति, तत्र युक्तिश्चास्माभिः प्राक् प्रदर्शिता । पूजायां बहुवचनं कण्वास इति । कण्वासः कण्वपुत्राः । प्रस्कण्व ऋषिरपि कण्वपुत्र इति स्मार्यम् । इयमृषेर्विवक्षा–सिन्धुपदे युवयोरुद्भव-स्थाने वसु सिद्धमेव भवति, दिवि सोमश्च भवदर्थं सिद्धो वर्तते । शीघ्रं प्रयातं, युवयोः रूपं च प्रकव्यताम् इति । पूर्वं अरित्रं सिन्धुपदे वर्तते प्रयाणायेत्युक्तम्, उत्तरासु ऋक्षु सोमस्य पानं उषस आगमश्च कीर्त्यते, तस्मादिदं तात्पर्यं सङ्गच्छते ॥ वव्रिम्–वृञ् वरणे, आवरणार्थे वव्रिः, रूपमप्यावरकं भवति रूपिणः, तस्य प्रतिष्ठापकं आविष्कर्तृ च भवति ॥

दशमीमृचमाह—

अभूदु भा उ अंशवे हिरण्यं प्रति सूर्यः ।
व्यख्यज्जिह्वयासितः ॥१०॥

अभूत् ऊम् इति भाः ऊम् इति अंशवे हिरण्यम् प्रति सूर्यः वि अख्यत् जिह्वया असितः ॥

ऋतज्योतिष उदय आसन्नः, अतः अश्विनौ प्रयाणाय सन्नद्धौ पदं दधातामिति उदयं वर्णयति, भा उ दीप्तिस्तु अपरिच्छिन्ना एतावत्पर्यन्तं अनुदिता अगोचरा, इदानीं अंशवे अंश-भूताय परिच्छिन्नाय दृग्गोचराय किरणाय सिद्धयर्थं अभूत् उ प्रादुर्भूतैव । सूर्यः सत्यज्योतिरात्मा हिरण्यम् प्रति हिरण्यसदृशः अभूत् । अग्निश्च असितः कृष्णो भूत्वा जिह्वया ज्वालया व्यख्यत् प्रकाशितवान्, सूर्यस्य पुरस्तात् ज्वलनस्य अग्नेः कृष्णत्वम् ॥ हिरण्यं प्रति–प्रतिः प्रतिनिधौ, कर्मप्रवचनीयः, तद्युक्ते द्वितीया । अख्यत्–चक्षेर्लुङ्, चक्षेः ख्यानादेशः ॥

इति प्रथमस्य तृतीये चतुस्त्रिंशो वर्गः

एकादशीमृचमाह—

अभूदु पारमेतवे पन्था ऋतस्य साधुया ।
अदर्शि वि स्रुतिर्दिवः ॥११॥

अभूत् ऊम् इति पारम् एतवे पन्थाः ऋतस्य साधुऽया अदर्शि वि स्रुतिः दिवः ॥

ऋतस्य सत्यस्य ज्योतिषः पारम् एतवे तमसस्पारं गन्तुं साधुया समीचीनः पन्थाः मार्गः अभूत् उ निष्पन्न एव। दिवः द्युलोकात् स्रुतिः स्रवः, दीप्तिप्रसरः व्यदर्शि विशेषेण दृष्टो भवति। तस्मादश्विनोरागमनदशा प्रत्यासन्ना॥ एतवे—एतेः तुमर्थे तवेन्प्रत्ययः। साधुया—सुपां सुलुक्, विभक्तेर्याच् आदेशः॥ अदर्शि—कर्मणि लुङ्। स्रुतिः—स्रु गतौ, क्तिच्॥

द्वादशीमृचमाह—

तत्तदिदश्विनोरवो जरिता प्रति भूषति।
मदे सोमस्य पिप्रतोः॥१२॥

तत्ऽतत् इत् अश्विनोः अवः जरिता प्रति भूषति मदे सोमस्य पिप्रतोः॥

सोमस्य मदे सोमपानजन्ये हर्षे सति पिप्रतोः पूरयतोः यजमानमिति शेषः (सोमं पूरयतोरिति सायणः) अश्विनोः सम्बन्धि तत् तत् इत् तत्तत् कृतं सर्वं अपि, यजमानकृते अश्विनोः प्रसादात् विविधं यद्यद्वैभवं निष्पन्नं तत् सर्वमपि अवः वर्धनं प्रति भूषति प्रत्येकं तदा तदा अलङ्करोति, कृतज्ञतया वर्णयतीत्यर्थः, कः? जरिता स्तोता यजमानः॥ पिप्रतोः—पॄ पालनपूरणयोः, जुहोत्यादिः, लटः शतृ॥

त्रयोदशीमृचमाह—

वावसाना विवस्वति सोमस्य पीत्या गिरा।
मनुष्वच्छम्भू आ गतम्॥१३॥

ववसाना विवस्वति सोमस्य पीत्या गिरा मनुष्वत् शम्ऽभू आ गतम्॥

शम्भू सुखस्य भावयितारौ, विवस्वति प्रकाशवति ववसानौ निवासशीलौ हे अश्विनौ, मनुष्वत् मनौ इव मयि कृपया सोमस्य पीत्या सोमपानाय, चतुर्थ्यर्थे तृतीया, गिरा स्तुत्यै, विभक्तिव्यत्ययः, अस्मदीयस्तोत्राङ्गीकाराय आगतम् आगच्छतम्॥ 'विवस्वति' परिचरणवति यजमाने 'मनुष्वत्' मनाविव 'ववसाना' निवासशीलौ इति सायणः॥ ववसाना—वस निवासे,

ताच्छीलिकः चानश्, शपः श्लुः बहुलं छन्दसि, संहितायां अभ्यासस्य दीर्घत्वम्। मनुष्वत्--सप्तम्यर्थे वतिः ॥

चतुर्दशीमृचमाह—

युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् ।
ऋता वनथो अक्तुभिः ॥१४॥

युवोः उषाः अनु श्रियम् परिऽज्मनोः उपऽआचरत् ऋता वनथः अक्तुऽभिः ॥

हे अश्विनौ, परिज्मनोः परितो गन्त्रोः युवोः युवयोः श्रियम् शोभां अनु अनुसृत्य उषाः उषोदेवी उपाचरत् उपागता, प्रादुर्भूता युष्मदुपचारायेत्यर्थः। युवां ऋता ऋतानि सत्यानि सत्यसंबन्धीनि वैभवानि अक्तुभिः रात्रिभिः वनथः संभजेथे। कथं ऋतवननं रात्रिभिः उपपद्यते? अप्रकाशावस्थाः रात्रयः, तदीयानां रात्रिगर्भेऽवस्थितानां सर्वेषां वस्तूनां अनुभवानां च ऋतप्रकाशं प्रति प्रापणं आश्विनं कृत्यं भवति, तस्मात् अश्विनोः ऋतवैभवसंमदभरो तदन्तर्वर्तीभिः रात्रिभिर्भवति । तेन यजमानः कृतार्थो भवत्याश्विनेन ऋतवैभवसंभजनेनेति बोध्यम् ॥ परिज्मनोः—परितः अजतो गच्छत इति परिज्मानौ, अजतेर्मनिन् । युवोरित्यादयो गताः ॥

पञ्चदशीमृचमाह—

उभा पिबतमश्विनोभा नः शर्म यच्छतम् ।
अविद्रियाभिरूतिभिः ॥१५॥

उभा पिबतम् अश्विना उभा नः शर्म यच्छतम् अविद्रियाभिः ऊतिऽभिः ॥

हे अश्विना अश्विनौ, उभा उभौ युवां पिबतम् सोमं पिबतम्। ततः परं उभा उभौ युवां अविद्रियाभिः अविदार्याभिः अत एव दृढाभिः ऊतिभिः रक्षाभिः नः अस्मभ्यं शर्म सुखं शरणं वा यच्छतम् दत्तम् ॥ अविद्रियाभिः—दॄ विदारणे, इत्यस्मात् विपूर्वात् भावे किः, विद्रिः,

तद्विरोधिनी अविद्रिः अविदार्यता अभेद्यतेत्यर्थः, तां यान्तीति अविद्रियाः, ताभिरूतिभिः। द्रा कुत्सायां गतौ इत्यस्मान्निष्पादयति रूपं सायणः, प्रक्रिया तु समाना ॥

इति प्रथमस्य तृतीये पञ्चत्रिंशो वर्गः

तृतीयोऽध्यायः समाप्तः

अथ प्रथमाष्टके चतुर्थोऽध्याय आरभ्यते। प्रथमे मण्डले नवमेऽनुवाके त्रीणि सूक्तानि गतानि। 'अयं वाम्' इति दशर्चं चतुर्थं सूक्तम्। कण्वपुत्रः प्रस्कण्व ऋषिः अश्विनौ देवते प्रथमातृतीयाद्या अयुजो बृहत्यः द्वितीयाचतुर्थ्याद्याः सतोबृहत्यः।

तत्र प्रथमामृचमाह—

अयं वां मधुमत्तमः सुतः सोम ऋतावृधा।

तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥१॥

अयम् वाम् मधुमत्ऽतमः सुतः सोमः ऋतऽवृधा तम् अश्विना पिबतम् तिरःऽअह्न्यम् धत्तम् रत्नानि दाशुषे ॥

हे ऋतावृधा ऋतस्य सत्यस्य वर्धयितारौ अश्विनौ, वाम् युवयोः अयम् पुरोवर्ती मधुमत्तमः अतिशयेन माधुर्यवान्, अत्यन्तमधुरः सोमः सुतः अभिषुतो भवति। हे अश्विना अश्विनौ, तिरोअह्न्यम् तिरोभूते पूर्वस्मिन्नहनि भवं अभिषुतं तम् पिबतम्। दाशुषे यथाभागं दत्तवते यजमानाय रत्नानि रमणीयानि हर्षाधायकानि रतिशब्दवाच्यानि धत्तम् धारयतम्॥ तिरोअह्न्यम्–पूर्वसूक्ते व्याख्यातम्। अन्ये गताः ॥

द्वितीयामृचमाह—

त्रिबन्धुरेण त्रिवृता सुपेशसा रथेना यातमश्विना।

कण्वासो वां ब्रह्म कृण्वन्त्यध्वरे तेषां सु शृणुतं हवम् ॥२॥

त्रिऽबन्धुरेण त्रिऽवृता सुपेशसा रथेन आ यातम् अश्विना कण्वासः वाम् ब्रह्म कृण्वन्ति अध्वरे तेषाम् सु शृणुतम् हवम् ॥

हे अश्विना अश्विनौ, त्रिबन्धुरेण त्रिविधबन्धनयुक्तेन त्रिवृता लोकत्रये अप्रतिहतगमनतया वर्तमानेन, सुपेशसा शोभनरूपयुक्तेन रथेन युष्मदीयेन यानसाधनेन आयातम् आगच्छतम्।

कण्वासः कण्वपुत्राः (मेधाविनः) अध्वरे यजने वाम् युष्मदर्थं ब्रह्म मन्त्रात्मकं स्तोत्रं कृण्वन्ति कुर्वन्ति । तेषाम् कण्वपुत्राणां हवम् आह्वानं सु शृणुतम् सुष्ठु आकर्णयतम् ॥ त्रिवन्धुरेण– बन्धेरौणादिक उरन्प्रत्ययः । त्रिश्चिन्नो अद्येति (३४ सू.) सूक्तस्य व्याख्यायां त्रिकस्य विचारः कृतः । सुपेशसा–शोभनं पेशो रूपं (हिरण्यं वा) ययोस्तौ । अन्ये गताः ॥

तृतीयामृचमाह—

अश्विना मधुमत्तमं पातं सोममृतावृधा ।
अथाद्य दस्रा वसु बिभ्रता रथे दाश्वांसमुप गच्छतम् ॥३॥

अश्विना मधुमत्ऽतमम् पातम् सोमम् ऋतऽवृधा अथ अद्य दस्रा वसु बिभ्रता रथे दाश्वांसम् उप गच्छतम् ॥

हे ऋतावृधा सत्यस्य वर्धयितारौ, अश्विना अश्विनौ, मधुमत्तमम् अत्यन्तमाधुर्योपेतं सोमम्, पातम् पिबतम् । अथ सोमपानात्परं अद्य इदानीं हे दस्रा अश्विनौ, रथे स्वकीये वसु सत्त्वात्मकं धनं बिभ्रता बिभ्रतौ वहन्तौ सन्तौ दाश्वांसम् दत्तवन्तं यजमानं उप गच्छतम् समीपे प्राप्नुतम् ॥ सर्वे शब्दा गताः ॥

चतुर्थीमृचमाह—

त्रिषधस्थे बर्हिषि विश्ववेदसा मध्वा यज्ञं मिमिक्षतम् ।
कण्वासो वां सुतसोमा अभिद्यवो युवां हवन्ते अश्विना ॥४॥

त्रिऽसधस्थे बर्हिषि विश्वऽवेदसा मध्वा यज्ञम् मिमिक्षतम् कण्वासः वाम् सुतऽसोमाः अभिऽद्यवः युवाम् हवन्ते अश्विना ॥

हे विश्ववेदसा विश्वस्य वेदितारौ सर्वज्ञौ, त्रिषधस्थे त्रिविधे स्थानत्रये सहावस्थिते, बर्हि-स्त्रिलोक्यां अन्तः अन्नमयादिस्थानत्रये, बर्हिषि सिद्धे आसने (कक्षात्रयरूपेण आस्तीर्णे दर्भे इति याज्ञिकपक्षे बोध्यम्) स्थितौ सन्तौ युवां यज्ञम् अस्मदीयं मध्वा मधुना मधुरेण रसेन मिमिक्षतम् सेक्तुमिच्छतम्, इदं नो यजनं रसार्द्रं कुरुतम् । वाम् युष्मदर्थं सुतसोमाः सोमाभिषवं कृतवन्तः अभिद्यवः अभिगतदीप्तयः कण्वासः कण्वपुत्राः ऋषयः मेधाविनो वा हे अश्विना अश्विनौ युवाम् उभौ हवन्ते आह्वयन्ति ॥ त्रिषधस्थे–त्रिषु स्थानेषु सह तिष्ठतीति त्रिषधस्थम्, छन्दसि सहशब्दस्य

सधादेशः । मघ्वा–नुमभावः छन्दसि । मिमिक्षतम्–मिह सेचने, सनि लोट्, मध्यमद्विवचनम् । अभिद्यवः–द्युरित्यहर्नाम, तेन प्रकाशो लक्ष्यते, अभिगता द्युं इति अभिद्यवः ॥

पञ्चमीमृचमाह—

याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना ।
ताभिः ष्व १ स्माँ अवतं शुभस्पती पातं सोममृतावृधा ॥५॥

याभिः कण्वम् अभिष्टिऽभिः प्र आवतम् युवम् अश्विना ताभिः सु अस्मान् अवतम् शुभः पती इति पातम् सोमम् ऋतऽवृधा ॥

हे अश्विना अश्विनौ, युवम् युवां उभौ याभिः अभिष्टिभिः आभिमुख्येन इष्टिभिः इच्छाभिः कण्वम् महर्षिं मेधाविप्रतिमानभूतं प्रावतम् प्रकर्षेण रक्षितवन्तौ, हे शुभस्पती (शोभनस्य कर्मणः पालकौ, इति सायणः) शोभमानायाः सर्वस्या दीप्तेः पालकौ ताभिः 'अभिष्टिभिः' अस्मान् सु सुष्ठु अवतम् रक्षतम् । हे ऋतवृधा सोमम् पातम्, स्पष्टमेतत् ॥ अभिष्टयः– अभिमुखं इष्यन्त इति अभिष्टयः, कर्मणि क्तिन्, एमन्नादिषु छन्दसि पररूपम् । शुभस्पती-त्यादयो गताः ॥

इति प्रथमस्य चतुर्थे प्रथमो वर्गः

षष्ठीमृचमाह—

सुदासे दस्रा वसु बिभ्रता रथे पृक्षो वहतमश्विना ।
रयिं समुद्रादुत वा दिवस्पर्यस्मे धत्तं पुरुस्पृहम् ॥६॥

सुऽदासे दस्रा वसु बिभ्रता रथे पृक्षः वहतम् अश्विना रयिम् समुद्रात् उत वा दिवः परि अस्मे इति धत्तम् पुरुऽस्पृहम् ॥

हे दस्रा कर्मनिष्पादनसमर्थौ अश्विना अश्विनौ, सु दासे शोभनदानयुक्ताय, एतन्नामकाय, राज्ञे वा, रथे वसु बिभ्रता युवां पृक्षः प्रीणनं, पूरयितृ सर्वं वहतम् प्रापितवन्तौ, तथा उदारौ युवां समुद्रात् सत्त्वसमृद्धादखण्डमूलस्थानात् उत वा अथवा दिवः द्युलोकात् परि पर्याहृत्य पुरुस्पृहम् बहुभिर्बहुधा वा स्पृहणीयं रयिम् धनं अस्मे धत्तम् अस्मासु धारयतम् ॥ सुदासे–

सुष्ठु ददातीति सुदाः, असुन्, तस्मै । पुरुस्पृहम्—पुरुभिः बहुभिः स्पृह्यते, कर्मणि घञ् । पृक्षः—पॄ पालनपूरणयोः अस्मात् (पृची संपर्के प्रीणने वा इत्यस्मादित्येके) असुनि सुडागमः ॥

सप्तमीमृचमाह—

यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे ।
अतो रथेन सुवृता न आ गतं साकं सूर्यस्य रश्मिभिः ॥७॥

यत् नासत्या पराऽवति यत् वा स्थः अधि तुर्वशे अतः रथेन सुऽवृता नः आ गतम् साकम् सूर्यस्य रश्मिभिः ॥

हे नासत्या अश्विनौ, यत् यदि युवां परावति परस्तात् परस्मिन् स्थाने अतिदूरे स्थः वर्तेथे यद्वा अथवा अधितुर्वशे अधिके समीपे स्थः अतः अस्माद्दूरात् समीपाद्वा सूर्यस्य रश्मिभिः साकम् ऋतज्योतिषोंऽशुभिः सह सुवृता शोभनवर्तनेन रथेन नः अस्मान् प्रति आगतम् आगच्छतम् ॥

अधितुर्वशे अधिके समीपे इति सायणीयम् । तुर्वशशब्दार्थो न कथितः, दूरे समीपे वेति तात्पर्यं तूपपन्नमेव । अत्र वयम्—ऋग्वेदे यदुना सह पठ्यते तुर्वशः एतत्संज्ञको यदोर्भ्राता तुर्वशः तुर्वसुर्वा । संज्ञाशब्दस्यापि अवयवार्थानुसारेणोपपत्तिर्गूढार्थविचार इति स्मारयामः । तर्हि तुर्वशः तुतोर्तेः हिंसार्थात् वष्टेः कान्त्यर्थाच्च निष्पन्नः, वीरः कान्तः कमनीयो वा । तस्मात् जित्वरो वीरः कमनीयो हि स पुरुषः यो देवभावकामः यज्वा अदेव्यान् अरीन् हिंसित्वा जयति, देवप्रियो भवति । अत एव "अधितुर्वशे" इत्यत्र वीरपुरुषस्य यजमानस्य अधिके समीपे वेति व्याख्येयम् ॥ सुवृता—सुष्ठु वर्तत इति सुवृत् तेन ॥

अष्टमीमृचमाह—

अर्वाञ्चा वां सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप ।
इषं पृञ्चन्ता सुकृते सुदानव आ बर्हिः सीदतं नरा ॥८॥

अर्वाञ्चा वाम् सप्तयः अध्वरऽश्रियः वहन्तु सवना इत् उप इषम् पृञ्चन्ता सुऽकृते सुऽदानवे आ बर्हिः सीदतम् नरा ॥

हे अश्विनौ, अध्वरश्रियः अध्वरं श्रयन्ते, यज्ञसेविन इत्यर्थः, सप्तयः अश्वाः सवना इत् उप सवनानि अस्मदीयान्युपलक्ष्यैव अर्वाञ्चा अर्वाञ्चौ अभिमुखौ वाम् युवां वहन्तु प्रापयन्तु । हे नरा नरौ नेतारौ देवौ, सुकृते शोभनकर्मकारिणे सुदानवे शोभनदानयुक्ताय यजमानाय इषम् एषणां प्रेरणात्मिकां शक्तिं पृञ्चन्ता पृञ्चन्तौ संयोजयन्तौ युवां बर्हिः आस्तीर्णं सिद्धमासनं आसीदतम् प्राप्नुतम् ॥ अर्वाञ्चा-विभक्तेराकारः । पृञ्चन्ता-पृची संपर्के, शतरि रुधादित्वात् श्नम् । अन्ये गताः ॥

नवमीमृचमाह—

तेन॑ नास॒त्या ग॑तं॒ रथे॑न॒ सूर्य॑त्वचा ।

येन॒ शश्व॑दू॒हथु॑र्दा॒शुषे॒ वसु॒ मध्वः॒ सोम॑स्य पी॒तये॑ ॥९॥

तेन॑ ना॒स॒त्या आ ग॒त॒म् रथे॑न सूर्य॑ऽत्वचा येन॑ शश्व॑त् ऊ॒हथुः॑ दा॒शुषे॑ वसु॒ मध्वः॑ सोम॑स्य पी॒तये॑ ॥

हे नासत्या अश्विनौ, सूर्यत्वचा सूर्यः त्वक् चर्मसंवरणं यस्य तेन सूर्यप्रभासंवृतेन तेन प्रसिद्धेन रथेन आगतम् युवां आगच्छतम् । दाशुषे दत्तवते यजमानाय वसु सत्त्वात्मकं द्रव्यं शश्वत् सर्वदा येन रथेन ऊहथुः वोढवन्तौ प्रापितवन्तौ, तेन रथेनेति पूर्वेण संबन्धः । किमर्थमागमनम्? मध्वः मधुरस्य सोमस्य पीतये पानाय ॥

दशमीमृचमाह—

उ॒क्थेभि॑र॒र्वागव॑से पुरू॒वसू॑ अ॒र्कैश्च॒ नि ह्व॑यामहे ।

शश्व॒त्कण्वा॑नां॒ सद॑सि प्रि॒ये हि कं॒ सोमं॑ प॒पथु॑रश्विना ॥१०॥

उ॒क्थेभिः॑ अ॒र्वाक् अव॑से पु॒रु॒ऽवसू॑ इति॑ पु॒रु॒ऽवसू॑ अ॒र्कैः॑ च॒ नि ह्व॒या॒म॒हे॒ शश्व॑त् कण्वा॑नाम् सद॑सि प्रि॒ये हि क॒म् सोम॑म् प॒पथुः॑ अ॒श्वि॒ना॒ ॥

पुरूवसू बहुधनौ, अश्विनौ अवसे अस्मदभिवृद्ध्यर्थं उक्थेभिः शंसनात्मकैः शस्त्रैर्मन्त्रैः अर्कैश्च दीप्तैः ऋग्रूपैः स्तोत्रैश्च अर्वाक् अस्मदाभिमुख्येन निह्वयामहे नितरामाह्वयामः । हे अश्विना, कण्वानाम् कण्वपुत्राणां, मेधाविनां वा प्रिये सदसि इष्टे यजनस्थाने शश्वत् सर्वदा सोमम् पपथुः

हि कम् युवां सोमं पीतवन्तौ खलु ॥ उक्थेभिः—भिस एसादेशः । अर्कैः—ऋच स्तुतौ, पुंसि संज्ञायामिति करणे घः । निह्वयामहे—निपूर्वो ह्वयतिरात्मनेपदम् । पपथुः—पा पाने, लिटि मध्यमपुरुषद्विवचनम् ।

इति प्रथमस्य चतुर्थे द्वितीयो वर्गः

'सह वामेन' इति षोडशर्चं पञ्चमं सूक्तम् । प्रस्कण्व ऋषिः, अयुजो बृहत्यः युजः सतोबृहत्यः, उषा देवता ॥

तत्र प्रथमामृचमाह—

सह वामेन न उषो व्युच्छा दुहितर्दिवः ।
सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ॥१॥

सह वामेन नः उषः वि उच्छ दुहितः दिवः सह द्युम्नेन बृहता विभाऽवरि राया देवि दास्वती ॥

हे दिवो दुहितः, द्युलोकस्य पुत्रि, उषः उषोदेवि, वामेन सह वननीयेन सौभाग्येन सह नः अस्माकमर्थे व्युच्छ विभाहि, प्रभातं कुरु हे विभावरि उषः, बृहता बृहच्छब्दवाच्येन सत्यसंबन्धिना महता द्युम्नेन सह दिव्यप्रकाशेन सह व्युच्छ । हे देवि, दास्वती त्वं दानयुक्ता सती राया धनेन दिव्यलक्षणेन व्युच्छ ॥ उच्छ—उच्छी विवासे । विभावरि—भा दीप्तौ, आतो मनिन्नित्यादिना वनिप्, वनो र चेति ङीप्, नकारस्य रेफादेशः, संबोधने ह्रस्वः । दास्वती—डुदाञ् दाने, भावे असुन्, तदस्याः अस्तीति दास्वती ॥

द्वितीयामृचमाह—

अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवन्त वस्तवे ।
उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनाम् ॥२॥

अश्वऽवतीः गोऽमतीः विश्वऽसुविदः भूरि च्यवन्त वस्तवे उत् ईरय प्रति मा सूनृताः उषः चोद राधः मघोनाम् ॥

अश्वावतीः भोगक्रियासमर्थप्राणबलस्य सङ्केतयितारः अश्वाः तद्वत्यः, गोमतीः चित्प्रकाश-मरीचयो गावः तद्वत्यः, उभयत्र मतुप् भूमार्थे, विश्वसुविदः विश्वस्य कृत्स्नस्य सुष्ठु वेदित्र्यः लम्भयित्र्यो वा उषसः वस्तवे अस्माकं भानाय, वासायेत्येके, तर्हि दिव्याय वासाय भूरि प्रभूतं यथा तथा च्यवन्त प्राप्ताः। हे उषः, उषोदेवि, मा प्रति मामुद्दिश्य सूनृताः शोभनाः सत्या वाचः उदीरय ब्रूहि, मघोनाम् धनवतां संबन्धि राधः साधकं धनं चोद अस्मदर्थं चोदय प्रेरय। 'सं चोदय चित्रं राधः विश्व प्रभु' (१.९.५) इत्यत्र यद्राधः चोदयेति प्राह ऋषिः तदेवेहापि राधसो लक्षणं बोध्यम्॥ अश्वावतीः—मन्त्रे सोमादेः मतौ पूर्वपददीर्घत्वं छन्दसि पाक्षिकम्। च्यवन्त—च्युङ् गतौ, लङि अडभावः। वस्तवे—वस निवासे उच्छत्यर्थे, तुमर्थे तवेन्। चोद—चुद सञ्चोदने, चुरादिः, छन्दसि शप्॥

तृतीयामृचमाह—

उवासोषा उच्छाच्च नु देवी जीरा रथानाम्।
ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥३॥

उवास उषाः उच्छात् च नु देवी जीरा रथानाम् ये अस्याः आऽचरणेषु दध्रिरे समुद्रे न श्रवस्यवः॥

उषाः देवी उवास उष्टा अभवत्, प्रभातमकरोत्। च नु अद्यापि उच्छात् व्युच्छति प्रभातं करोति। कीदृशी? रथानाम् जीरा प्रेरयित्री। अस्याः उषसः आचरणेषु आगमनेषु ये रथाः दध्रिरे धृताः सज्जीकृता भवन्ति तेषां रथानामिति पूर्वेण संबन्धः। तत्र दृष्टान्तः—श्रवस्यवः समुद्रे न श्रवणकामाः दिव्यावेशश्रुतिं कामयमाना ऋषयः यथा अखण्डसत्त्वसमृद्धे अपां राशौ ध्रियन्ते, तथा धृताश्च ईप्सितार्थप्राप्तये श्रुतियोगायाधिकारितां लभन्ते, तथोषस आगतये रथाः धृत्या अवस्थिता भवन्ति। स्थूलपक्षीयास्तु, 'श्रवस्यवः धनकामाः समुद्रमध्ये नावं सज्जीकृत्य यथा प्रेरयन्ति तद्वत्' इति॥ उवास—वस उच्छत्यर्थे, लिट्। उच्छात्—लेटि आडागमः। भूते वर्तमाने च 'उवास उच्छात्' इति प्रयोगोऽवधातव्यः। जीरा—जु इति सौत्रो धातुः, जोः ई चेति रक्। दध्रिरे—धृङ् अवस्थाने। श्रवस्यवः—श्रूयत इति श्रवः श्रवणं श्रुतिः क्वचित् यशो वा, असुन्, तदात्मन इच्छन्तीति श्रवस्यवः॥

चतुर्थीमृचमाह—

उषो ये ते प्र यामेषु युञ्जते मनो दानाय सूरयः ।
अत्राह तत्कण्व एषां कण्वतमो नाम गृणाति नृणाम् ॥४॥

उषः ये ते प्र यामेषु युञ्जते मनः दानाय सूरयः अत्र अह तत् कण्वः एषाम् कण्वऽतमः नाम गृणाति नृणाम् ॥

हे उषः, ते तव यामेषु गमनेषु सत्सु ये सूरयः विद्वांसः प्रेरणाबलयुक्ताः दानतत्त्वज्ञाः दानाय देवेभ्यो दानार्थं मनः स्वकीयं प्रयुञ्जते प्रेरयन्ति, एषां सूरीणां दानदक्षाणां कण्वतमः अतिशयेन कण्वः मेधावी कण्वः महर्षिः नृणाम् दानशीलानां यजमानानां लोके तत् प्रसिद्धं नाम अत्र अह अस्मिन्नेव काले स्थाने वा गृणाति उच्चारयति । देवभावं प्राप्तानां विदुषां दानक्रियाफलरहस्यविदां श्रेष्ठतमो मेधावी कण्वो महर्षिरेव उषसि प्रादुर्भूतायां दानप्रथितानां नामोच्चारयति, तथोच्चारणेन दाता यजमानश्च उद्दीपितदानप्रेरणाबलः दानफलभूतदिव्यप्रबोधशाली अनन्तरकरणीयाय सन्नद्धो भवति । उषसः प्रादुर्भावस्यायं स्तुत्या महिमा यदत्र देवेभ्यो दानप्रेरणा सूरिभिः कृता यजमानेषु सुफला भवति । अस्यामृचि 'एषां' सूरीणामिति व्याख्यातं, यत्तदोर्नित्यसंबधात् । 'ये सूरयः' इति पूर्वत्र स्थितेश्च । अन्यथा कथयन्ति पूर्वे 'यो दातुमिच्छति यश्च नामग्रहणेन दातारं प्रशंसति तावुभावप्युषःकाल एव तथा कुरुत' इति स्थूलः पक्षः ॥ अह–अवधारणार्थो निपातः । गृणाति–गॄ शब्दे ॥

पञ्चमीमृचमाह—

आ घा योषेव सूनर्युषा याति प्रभुञ्जती ।
जरयन्ती वृजनं पद्वदीयत उत्पातयति पक्षिणः ॥५॥

आ घ योषाऽइव सूनरी उषाः याति प्रऽभुञ्जती जरयन्ती वृजनम् पत्ऽवत् ईयते उत् पातयति पक्षिणः ॥

उषाः देवी प्रभुञ्जती प्रकर्षेण पालयन्ती विश्वमिति शेषः, आयाति घ आगच्छति खलु । केव? सूनरी सुष्ठु नेत्री गृहकृत्यस्य योषेव गृहिणी इव । कीदृशी उषाः? वृजनम् वर्ज्यं वर्जनीयं वा आवरकं तमःप्रदेशं जरयन्ती जरां प्रापयन्ती, क्षपयन्तीत्यर्थः । अत्र वृजनं प्राणिजातमिति सायणः, अन्यत्र (१.१६४.९) स एव 'वृजनीष्वन्तः मेघपङ्क्तिष्वन्तः' इति व्याचष्टे ।

वृजनं प्रावरणं दुर्गस्थानं वा भवति, तत्रापि वर्ज्यत्वाद्धेतोरिति धात्वर्थानुगमो बोध्यः । किञ्च पद्वत् पादयुक्तं प्राणिजातं गमनशीलं ईयते स्वकृत्यार्थं प्रबोधसम्पदा सह गच्छति । पक्षिणः उत्पातयति पतत्रिणः उत्पतनसमर्थान् करोति । अत्र प्रातःकाले प्राणिनः मनुष्याश्च सुप्तोत्थिताः स्वस्वकृत्ये प्रवर्तन्ते, तथा पक्षिणश्च उड्डयन्ते, अयं बाह्योऽर्थः । दिव्यज्ञानप्रभाते अन्तर्याजिनो जनस्य तीव्रा गतिः, ऊर्ध्वगतिसम्पन्नस्य लोकान्तरगतिरत्रस्थस्यैव देहिनः सिध्यतीति रहस्यम् ॥ घा–संहितायां दीर्घः । सूनरी–सुष्ठु नयति, नॄ नये । प्रभुञ्जती–भुज पालनाभ्यवहरणयोः रुधादिः, लटः शतृ, उगितश्चेति ङीप् । वृजनम्–वृजी वर्जने, वर्ज्यत इति वृजनम्, कॄपॄवृजिप्रभृतिभ्यः क्युरिति क्युप्रत्ययः । पद्वत्–पद् पादः तद्वत्, झय इति मतुपो वत्वम् ॥

इति प्रथमस्य चतुर्थे तृतीयो वर्गः

षष्ठीमृचमाह—

वि या सृजति समनं व्य१र्थिनः पदं न वेत्योदती ।
वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनीवति ॥६॥

वि या सृजति समनम् वि अर्थिनः पदम् न वेति ओदती वयः नकिः ते पप्तिऽवांसः आसते विऽउष्टौ वाजिनीऽवति ॥

या देवी समनम् सम्यक् अनिति चेष्टत इति समनः तं समीचीनचेष्टायुक्तं उद्योगिनं पुरुषं विसृजति विशेषेण प्रेरयति, किंच अर्थिनः मनुष्यान् उत्तममर्थं प्रार्थयतः महत्त्वकाङ्क्षिण इति यावत् वि सृजति प्रेरयति, प्रार्थनाशीलान् न त्वलसान् तमोऽभिभूतान् प्रेरयतीति बोध्यम् । सा ओदती उन्दनशीला, स्वांशुभिः क्लेदयन्ती सुखयन्ती उषोदेवी पदम् स्थानं न वेति न कामयते, न क्वापि स्थातुमिच्छति, सत्वरं गच्छत्येव । हे वाजिनीवति बहुविधसमृद्धियुक्ते उषोदेवते, ते तव व्युष्टौ प्रभाते पप्तिवांसः पतनयुक्ताः वयः पक्षिणः नकिरासते न तिष्ठन्ति, किंतु ऊर्ध्वं पतन्त्येव । वयः पक्षिण इति बाह्योऽर्थः । विशब्दो धीवृत्त्यादिषु अर्थेषु वर्तते, तथा प्रागुक्तम् (१.२५.४,७), तस्माद्वयः ज्ञानांशवः ऊर्ध्वं गच्छन्तीति ग्राह्यम् । ओदती–उन्दी क्लेदने, श्नम्विकरणो धातुः । शतरि व्यत्ययेन शप्, ङीप् । नकिष्टे–युष्मत्तत्ततक्षुष्वन्तःपादमिति षत्वम् । पप्तिवांसः–पत्लृ गतौ, लिटः क्वसुः,' अन्यत् छान्दसम् । वाजिनीवति–व्याख्यातम् (१.३.१०) ॥

सप्तमीमृचमाह—

एषायुक्त परावतः सूर्यस्योदयनादधि ।
शतं रथेभिः सुऽभगोषा इयं वि यात्यभि मानुषान् ॥७॥

एषा अयुक्त पराऽवतः सूर्यस्य उत् अयनात् अधि शतम् रथेभिः सुऽभगा उषाः इयम् वि याति अभि मानुषान् ॥

एषा प्रस्तुता देवता अयुक्त योजितवती । किं अयुक्त ? शतम् स्वकीयरथानामिति शेषः । सुभगा शोभनो भग ऐश्वर्यं यस्याः सा सौभाग्यवती इयम् उषाः देवी परावतः दूरस्थात् सूर्यस्य उदयनात् अधि सूर्योदयस्थानादधिकादूर्ध्वप्रदेशात् मानुषान् अभि मनुष्यानभिलक्ष्य रथेभिः स्वीयैर्युक्तैः वि याति विशेषेण गच्छति । अयुक्त—युजिर् योगे, लुङ् । उदयनात्—उदेत्यत्रेति उदयनं, इण् गतौ, अधिकरणे ल्युट् । मानुषान्—मनोः पुत्राः मानुषाः, मनोर्जातौ अञ्यतौ षुक् चेति अञ् षुगागमश्च ॥

अष्टमीमृचमाह—

विश्वमस्या नानाम चक्षसे जगज्ज्योतिष्कृणोति सूनरी ।
अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्रिधः ॥८॥

विश्वम् अस्याः ननाम चक्षसे जगत् ज्योतिः कृणोति सूनरी अप द्वेषः मघोनी दुहिता दिवः उषाः उच्छत् अप स्रिधः ॥

विश्वम् सर्वं जगत् जङ्गमं प्राणिजातं अस्याः उषसः चक्षसे दर्शनाय ननाम नतं भवति, भक्तिपुरःसरं प्रणतमित्यर्थः । कुत एवं प्रणतिरस्यै भक्तलोकेन क्रियते ? आह । एषा सूनरी सुष्ठु नेत्री, अभिमतं वस्तु स्थानं वा प्रापयति ह्युषोदेवी ज्योतिः कृणोति करोति, सूर्यात्मकसत्यज्योतिः प्रादुर्भावयति । किंच मघोनी आढ्या दिव्यधनसम्पन्ना दिवः दुहिता द्युलोकस्य पुत्री उषाः देवी द्वेषः द्वेष्टॄन् ज्योतिर्द्वेषिणः तामसान् असुरादीन् वा अप उच्छत् अपवर्ज्य प्रभाति, तथा स्रिधः शोषयितॄन् रसस्य, शुष्णादीन् अप उच्छत् ॥ द्वेषः—द्विष अप्रीतौ, विच्, लघूपधगुणः । मघोनी—मघं वनति, मघवन्शब्दः कनिन्प्रत्ययान्तो निपातितः, श्वयुवमघोनां संप्रसारणं, स्त्रियां ङीप् । उच्छत्—उच्छी विवासे, छन्दसि वर्तमाने लङ् । स्रिधः—स्रिधु शोषणे, क्विप् ॥

नवमीमृचमाह—

उष आ भाहि भानुना चन्द्रेण दुहितर्दिवः ।
आवहन्ती भूर्यस्मभ्यं सौभगं व्युच्छन्ती दिविष्टिषु ॥९॥

उषः आ भाहि भानुना चन्द्रेण दुहितः दिवः आऽवहन्ती भूरि अस्मभ्यम् सौभगम् विऽउच्छन्ती दिविष्टिषु ॥

हे दिवो दुहितः, उषः उषोदेवि, चन्द्रेण आह्लादकेन भानुना उस्रेण आ भाहि सर्वतः प्रकाशस्व । किं कुर्वती ? दिविष्टिषु दिवशब्दलक्षितस्य सूर्यस्य इष्टयः एषणानि येषु दिवसेषु अन्तयागेषु वा तेषु अस्मभ्यम् अस्मदर्थं भूरि प्रभूतं सौभगम् सौभाग्यं आवहन्ती संपादयन्ती, तथा व्युच्छन्ती व्युष्टा प्रभाता भवन्ती ॥ सौभगम्—सुभगस्य भावः, सुभगान्मन्त्रे इत्युद्गात्रादिषु पाठात् अञ्प्रत्ययः, हृद्भगादेः उभयपदवृद्धौ प्राप्तायां उत्तरपदवृद्धिर्न भवति, विधीनां छन्दसि विकल्पात् । अन्ये गताः ॥

दशमीमृचमाह—

विश्वस्य हि प्राणनं जीवनं त्वे वि यदुच्छसि सूनरि ।
सा नो रथेन बृहता विभावरि श्रुधि चित्रामघे हवम् ॥१०॥

विश्वस्य हि प्राणनम् जीवनम् त्वे इति वि यत् उच्छसि सूनरि सा नः रथेन बृहता विभाऽवरि श्रुधि चित्रऽमघे हवम् ॥

हे सूनरि सुष्ठु नेत्रि उषोदेवि, विश्वस्य सर्वस्य प्राणिलोकस्य प्राणनम् चेष्टनं जीवनम् प्राणधारणं च त्वे हि त्वय्येव वर्तेते । यत् यस्मात् त्वं व्युच्छसि व्युष्टा भवसि । हे विभावरि विशिष्टभायुक्ते, सा तथाभूता त्वं नः अस्मान् प्रति बृहता रथेन महता रथेन आ याहि इति शेषः । हे चित्रमघे चित्रं विविधं मघं धनं यस्याः सा चित्रमघा, संहितायां दीर्घः, तस्याः संबुद्धिः, हवम् आह्वानं अस्मदीयं श्रुधि शृणु ॥ प्राणनम्—अन चेष्टायाम्, भावे ल्युट् ॥

इति प्रथमस्य चतुर्थे चतुर्थो वर्गः

एकादशीमृचमाह—

उषो वाजं हि वंस्व यश्चित्रो मानुषे जने ।
तेना वह सुकृतो अध्वराँ उप ये त्वा गृणन्ति वह्नयः ॥११॥

उषः वाजम् हि वंस्व यः चित्रः मानुषे जने तेन आ वह सुऽकृतः अध्वरान् उप ये त्वा गृणन्ति वह्नयः ॥

हे उषः, वाजम् हि समृद्धिप्रतिपादकं बलादिकं भोग्यं प्रसिद्धम् वंस्व वनुष्व, अर्थय, स्वीकुरु । यः वाजः मानुषे मनुष्ये जने जाते यजमाने चित्रः विविधः चायनीयो वा वर्तते तं 'वाजं वंस्व' इति संबन्धः । तेन तथा त्वया करणेन, यजमानगतवाजस्वीकरणेन सुकृतः सुष्ठु कृतवतो यजमानान् अध्वरान् स्वर्मार्गप्रदान् यज्ञान् उपावह प्रापय । ये यजमानाः वह्नयः वोढारः, त्वदीयमनुग्रहं बिभ्रतः (यज्ञनिर्वाहका इति सायणः) त्वा त्वां गृणन्ति स्तुवन्ति । यजमानदत्तं वाजं स्वीकृत्य तं दिव्यमार्गप्रदं अध्वरशब्दवाच्यं फलविशेषं प्रापयत्युषाः ॥ वंस्व- वनु याचने, विकरणस्य लुक् । सुकृतः-सुकर्मेत्यादिना करोतेः क्विप् । अन्ये गताः ॥

द्वादशीमृचमाह—

विश्वान्देवाँ आ वह सोमपीतयेऽन्तरिक्षादुषस्त्वम् ।
सास्मासु धा गोमदश्वावदुक्थ्य १ मुषो वाजं सुवीर्यम् ॥१२॥

विश्वान् देवान् आ वह सोमऽपीतये अन्तरिक्षात् उषः त्वम् सा अस्मासु धाः गोऽमत् अश्वऽवत् उक्थ्यम् उषः वाजम् सुऽवीर्यम् ॥

हे उषः, त्वम् सोमपीतये सोमपानाय अन्तरिक्षात् आकाशात्, ऊर्ध्वस्थानोपलक्षणं अन्तरिक्षं बोध्यम्, ऊर्ध्वस्थाना हि देवाः । विश्वान् देवान् आवह प्रापय अस्मद्यजनमिति शेषः । हे उषः, सा तादृशी त्वम् गोमत् गोभिः चिद्रश्मिभिर्युक्तं अश्वावत् अश्वैः उक्तलक्षणैः प्राणबलसङ्केतभूतैर्युक्तं उक्थ्यम् उक्थे स्तोत्रे भवं प्रशस्यं सुवीर्यम् शोभनवीर्योपेतं वाजम् समृद्धिसम्पन्नं भोग्यं वस्तु अस्मासु यजमानेषु धाः निधेहि, स्थापयेत्यर्थः ॥ गोमत्-गोमन्तं, विभक्तेर्लोपः, एवं अश्वावत्, संहितायां मतुपि दीर्घत्वम् ॥

त्रयोदशीमृचमाह—

यस्या रुशन्तो अर्चयः प्रति भद्रा अदृक्षत ।
सा नो रयिं विश्ववारं सुपेशसमुषा ददातु सुग्म्यम् ॥१३॥

यस्याः रुशन्तः अर्चयः प्रति भद्राः अदृक्षत सा नः रयिम् विश्वऽवारम् सुऽपेशसम् उषाः ददातु सुग्म्यम् ॥

यस्याः उषसः अर्चयः प्रकाशाः रुशन्तः दीप्यमानाः सन्तः भद्राः कल्याणाः प्रत्यदृक्षत प्रतिदृश्यन्ते, सा तादृशी उषाः नः अस्मभ्यं रयिम् वक्ष्यमाणलक्षणं धनं ददातु । कीदृशं रयिम्? विश्ववारम् विश्वैर्वरणीयं सर्वोत्तमं सुपेशसम् शोभनस्वरूपं सुग्म्यम् सुखनाम, सुखेन गन्तव्यम् ॥ रुशन्तः–दीप्त्यर्थो धातुः हिंसार्थे गृहीतः सायणीये । अदृक्षत–दृशेः कर्मणि लुङ् । झस्यादादेशः, च्लेः सिच्, अन्यच्च छान्दसम् । विश्ववारम्–विश्वैर्व्रियत इति विश्ववारः, कर्मणि घञ् । सुग्म्यम्–सुष्ठु गन्तव्यः सुग्मः, गमेः घञर्थे कविधानं, उपधालोपः, तत्र भवं सुग्म्यं, भवे छन्दसि ॥

चतुर्दशीमृचमाह—

ये चिद्धि त्वामृषयः पूर्व ऊतये जुहूरेऽवसे महि ।
सा नः स्तोमाँ अभि गृणीहि राधसोषः शुक्रेण शोचिषा ॥१४॥

ये चित् हि त्वाम् ऋषयः पूर्वे ऊतये जुहूरे अवसे महि सा नः स्तोमान् अभि गृणीहि राधसा उषः शुक्रेण शोचिषा ॥

हे महि महिते, उषोदेवि, ये चिद्धि ये खलु विश्रुताः पूर्वे चिरन्तनाः ऋषयः मन्त्रद्रष्टारः त्वाम् ऊतये रक्षणाय अवसे स्वाभिवर्धनाय च जुहूरे जुह्विरे आहूतवन्तः मन्त्रात्मकैः स्तोत्रैरिति शेषः । हे उषः, सा तादृशी त्वं राधसा 'चित्रं राधो अमर्त्य' 'चित्रं राधो......विश्व प्रश्व' इत्यादौ कीर्तितस्वरूपेण धनेन, शुक्रेण शोचिषा दीप्तेन तेजसा चोपलक्षिता सती, सहयोगलक्षणा तृतीया, नः अस्माकं संबन्धिनः स्तोमान् स्तुतीः अभि गृणीहि अभिलक्ष्य शब्दय, प्रतिवचनं स्वीकृताः स्तोमा इति देहि ॥ जुहूरे–ह्वयतेर्लिट्, इरयो रे इति इरेचो रे आदेशः छन्दसि । महि–मह पूजायाम्, औणादिक इप्रत्ययः, ङीष्, संबुद्धौ ह्रस्वत्वम् । गृणीहि–गृणातेः लोट् । अन्ये गताः ॥

पञ्चदशीमृचमाह—

उषो यद॒द्य भा॒नुना॒ वि द्वारा॑वृ॒णवो॑ दि॒वः ।
प्र नो॑ यच्छतादवृ॒कं पृ॒थु छ॒र्दिः प्र दे॑वि॒ गोम॑ती॒रिषः ॥१५॥

उषः यत् अ॒द्य भा॒नुना॑ वि द्वारौ॑ ऋ॒णवः॑ दि॒वः प्र न॒ः य॒च्छ॒तात्
अ॒वृ॒कम् पृ॒थु छ॒र्दिः प्र दे॒वि॒ गोऽम॑तीः इ॒षः ॥

हे उषः, त्वं यत् यस्मात् अद्य इदानीं भानुना प्रकाशेन दिवः द्युलोकस्य द्वारौ व्यृणवः विश्लिष्य प्राप्नोषि, तस्मात् त्वं नः अस्मभ्यं छर्दिः दिव्यं गृहं (छर्दिः छदिरिति गृहनामसु पाठात्) प्रयच्छतात् प्रदेहि । कीदृशं छर्दिः? अवृकम् छेदकरहितं अच्छेद्यं पृथु विस्तीर्णं च । अपि च हे देवि देवनशीले, गोमतीः चिद्रश्मिसम्पन्नाः इषः प्रेरणाशक्तीः नः प्र प्रकर्षेण यच्छतात् देहि । 'द्वारौ' पूर्वापरदिगन्तौ अन्धकारेणाच्छादितौ इति बाह्योऽर्थः । अन्तर्यजने तु स्वर्लोकस्य बहिर्द्वारम्-अन्तर्द्वारमिति द्वारद्वयमपि उषसा उद्घाटितं भवतीति बोध्यम् ॥ ऋणवः—गत्यर्थात् ऋणोतेः तनादित्वादुप्रत्ययः, लङ्, छान्दसः अडभावादिः । छर्दिः—गृहनाम, उच्छृदिर् दीप्तिदेवनयोः ॥

षोडशीमृचमाह—

सं नो॑ रा॒या बृ॑ह॒ता वि॒श्वपे॑शसा मिमि॒क्ष्वा समिळा॑भि॒रा ।
सं द्यु॒म्नेन॑ विश्व॒तुरो॑षो महि॒ सं वाजै॑र्वाजिनीवति ॥१६॥

सम् न॒ः रा॒या बृ॒ह॒ता वि॒श्वऽपे॑शसा मि॒मि॒क्ष्व सम् इळा॑भिः आ सम्
द्यु॒म्नेन॑ वि॒श्वऽतु॑रा उ॒षः म॒हि सम् वाजैः वा॒जि॒नी॒ऽव॒ति ॥

हे उषः, नः अस्मान् राया धनेन वक्ष्यमाणलक्षणेन संमिमिक्ष्व सम्यक् सिञ्च, संयोजयेत्यर्थः । कीदृशेन राया? बृहता महता विश्वपेशसा विश्वानि विविधानि सर्वाणि पेशांसि यस्य तेन । तथा इळाभिः आ पश्यन्ती वाक् इळा इति प्रागुक्तम्, (गौः, अन्नं, वाक् इत्यादयः सायणीयः स्थूलोऽर्थः), आ समुच्चये, पश्यन्तीभिर्वाग्भिश्च सम् मिमिक्ष्व । किञ्च, हे महि महनीये, उषः, द्युम्नेन द्योतेन सम् मिमिक्ष्व । कीदृशेन द्युम्नेन? विश्वतुरा विश्वं तुर्वति हिनस्ति जयतीति विश्वतूः तेन विश्वजयशीलेन । तथा हे वाजिनीवति समर्धनक्रियासम्पन्ने वाजैः

समृद्धिभिः तेजोबलैश्वर्यादीनामिति शेषः, नः सम् 'मिमिक्ष्व' ॥ मिमिक्ष्व–मिह सेचने, व्यत्ययेन आत्मनेपदम् । वाजिनीवति–गतम् ॥

इति प्रथमस्य चतुर्थे पञ्चमो वर्गः

'उषो भद्रेभि'रिति चतुर्ऋचं षष्ठं सूक्तम् उषस्यं आनुष्टुभं कण्वपुत्रस्य प्रस्कण्वस्यार्षम् ॥

तत्र प्रथमामृचमाह—

उषो भद्रेभिरा गहि दिवश्चिद्रोचनादधि ।
वहन्त्वरुणप्सव उप त्वा सोमिनो गृहम् ॥१॥

उषः भद्रेभिः आ गहि दिवः चित् रोचनात् अधि वहन्तु अरुणऽप्सवः उप त्वा सोमिनः गृहम् ॥

हे उषः, भद्रेभिः कल्याणैः पथिभिः दिवः द्युलोकात् चित् पूजितार्थे, पूजितात् रोचनात् रोचमानात् दीप्यमानात् अधि उपरि वर्तमानात् स्थानात् आगहि आगच्छ। हे उषः, अरुणप्सवः अरुणवर्णा गावः चित्प्रकाशरश्मयः सोमिनः सोमयुक्तस्य शरीरिणः अन्तर्याजिनो गृहम् यज्ञगृहभूतं शरीरं त्वा त्वां उपवहन्तु प्रापयन्तु । गवामरुणवर्णस्तु प्रज्ञानप्रभातकालयोग्यतां द्योतयेत् ॥ अरुणप्सवः–प्सा भक्षणे, प्सान्तीति प्सवः (औणादिकः कुप्रत्ययः) स्तनं पिबन्तो वत्साः, अरुणाः प्सवो वत्सा यासां ताः अरुणप्सवो गावः ।

द्वितीयामृचमाह—

सुपेशसं सुखं रथं यमध्यस्था उषस्त्वम् ।
तेना सुश्रवसं जनं प्रावाद्य दुहितर्दिवः ॥२॥

सुऽपेशसम् सुऽखम् रथम् यम् अधिऽअस्थाः उषः त्वम् तेन सुऽश्रवसम् जनम् प्र अव अद्य दुहितः दिवः ॥

हे उषः, त्वम् सुपेशसम् शोभनरूपयुक्तं सुखम् सुखहेतुभूतं, अथवा सुखं यथा तथेति क्रियाविशेषणं यम् रथम् अध्यस्थाः अधितिष्ठसि, तेन रथेन साधनेन अद्य इदानीं दिवो दुहितः

हे उषः, सुश्रवसम् शोभनश्रवणसंपन्नं जनम् यजमानं प्राव प्रकर्षेण वर्धय । यजमानस्य दिव्य-श्रुतिसम्पन्नस्य शीघ्रमूर्ध्वयानसाधनभूत उषसो रथः, तथा सत्वरा दिव्यगतिरेव तस्य वर्धनं भवति ॥ प्राव–अवधातुर्वर्धनेऽपि वर्तते, प्राग्विचारितश्च प्रथमानुवाके ।

तृतीयामृचमाह—

वयश्चित्ते पतत्रिणो द्विपच्चतुष्पदर्जुनि ।

उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ॥३॥

वयः चित् ते पतत्रिणः द्विऽपत् चतुःऽपत् अर्जुनि उषः प्र आरन् ऋतून् अनु दिवः अन्तेभ्यः परि ॥

अस्या ऋचः बाह्योऽर्थः उषःकालीनप्राणिजातगतिवर्णनपरः स्पष्टः । रहस्यार्थस्तु–हे अर्जुनि शुभ्रवर्णे उषः, चित्प्रकाशोदयस्य नैर्मल्यद्योतकं संबोधनम्, ते तव ऋतून् अनु दिव्याः प्रादुर्भाववेलाः अनुलक्ष्य (बह्वीनां उषसां आगतिः अवश्या प्रागवस्था सूर्यात्मनः सत्यज्योतिषः प्रादुर्भावस्येति प्रपञ्चितं पूर्वम्), द्विपत् द्विपात् पदद्वयवान् यजमानः, अप्रकाशावस्था प्रकाशावस्था इति अवस्थाद्वयानुसारेण द्वे पदे स्थाने वर्तेते यस्य स द्विपात्, चतुष्पत् चतुष्पात् चत्वारि पदानि स्थानानि आविष्कृतानि यस्य स यजमानः भूः भुवः स्वः महः इति व्याहृतिपदवेदनीयेषु स्थानेषु पदं लब्धवान्, तथा पतत्रिणः पतत्रवन्तः उत्पतनशीलाः ऊर्ध्वगमनसमर्थाः वयः चित् प्रज्ञानवृत्तिविशेषाश्च दिवः अन्तेभ्यः द्युलोकप्रान्तेभ्यः परि उपरि प्रारन् प्रकर्षेण गच्छन्ति । एवं सर्वेऽपि द्विपात्प्रभृतयः चित्प्रभाते दिवं प्रति उद्यता भवन्ति ॥ द्विपत्–द्वौ पादौ अस्येति पादशब्दस्य अन्त्यलोपः समासान्तः, अयस्मयादित्वेन भत्वात् पादः पदिति पद्भावः । एवं चतुष्पत् । आरन्–ऋ गतौ, छन्दसि लुङ् लङर्थे । ऋतून्–ऋ गतौ अस्मात् औणादिको भावे कुप्रत्ययः ॥

चतुर्थीमृचमाह—

व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम् ।

तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषत ॥४॥

विऽउच्छन्ती हि रश्मिऽभिः विश्वम् आऽभासि रोचनम् ताम् त्वाम् उषः वसुऽयवः गीःऽभिः कण्वाः अहूषत ॥

हे उषः, व्युच्छन्ती व्युष्टा भवन्ती त्वं रश्मिभिः तेजोभिः स्वकीयैः विश्वम् सर्वं जगत् भूतजातं वा रोचनम् रोचमानं यथा भवति तथा आ भासि सर्वतः प्रकाशसे। हि यस्मादेवं तस्मात् ताम् तथाभूतां त्वाम् वसूयवः वसु सत्त्वात्मकं धनं आत्मन इच्छन्तः कण्वाः मेधाविप्रतिमानभूताः महर्षयः गीर्भिः स्तुतिलक्षणैर्वचोभिः अहूषत आह्वयन्ति ॥ अहूषत—ह्वेञो लुङि ह्वः संप्रसारणं, परपूर्वत्वे हल इति दीर्घत्वं, संज्ञापूर्वकस्य विधेरनित्यत्वाद् गुणाभावः ॥

इति प्रथमस्य चतुर्थे षष्ठो वर्गः

'उदु त्य'मिति त्रयोदशर्चं सूर्यदेवत्यं सप्तमं सूक्तं प्रस्कण्वस्यार्षम्। प्रथमादिनवम्यन्ताः गायत्र्यः शिष्टाश्चतस्रोऽनुष्टुभः। सर्वेषां देवानामादिरन्तश्च सूर्यात्मना प्रतीकेन बहिर्मुखाना-मनुग्रहाय बहिरुपास्यतया चिरन्तनैर्मन्त्रद्रष्टृभिरुपदिश्यते। स परमः पुरुषः, तत् परं ज्योतिः, तमसः परस्तान्नित्य आत्मा जगतस्तस्थुषश्चेति श्रुतीनामुद्घोषः प्रसिद्धः। यद्यपि ऊर्ध्वमूलाद्विश्व-स्मात् परस्तादेव तत्पदं भवति, तथापि परिपक्वे यजमाने देवताप्रसादलाभस्यावकाशे सति, परस्य ज्योतिषः प्रादुर्भावः सम्पद्यते। स च सूर्योदयपदवेदनीयः साक्षात्कारो वैदिके योगे आरोहणरूपो यजमानमूर्ध्वं उत्तमं पदं नयतीति रहस्यम्, इतः अधःसमुद्रात् 'अप्रकेतात् सलिलात्' तमःशब्दवाच्य-अचित्प्रकाशावस्थायाः रात्रेरन्ते ऋतज्योतिषः उदयारोहादि मन्त्र-वर्णेषु तथा वर्ण्यते यथा बहिः सूर्यस्योदयादावपि तात्पर्यं सङ्गच्छेत। अत एव वैदिकयोगनिष्ठा-रहस्यबाह्या मुह्यन्ति साधारणसूर्योदयादिवर्णनमात्रपरा मन्त्रा इति ॥

तत्र सूक्ते प्रथमामृचमाह—

उदु त्यं जातवेदसं देवं वहन्ति केतवः।
दृशे विश्वाय सूर्यम् ॥१॥

उत् ऊम् इति त्यम् जातऽवेदसम् देवम् वहन्ति केतवः दृशे विश्वाय सूर्यम् ॥

त्यम् तं प्रसिद्धं जातवेदसम् जातानि सर्वाणि वेत्तीति जातवेदाः तम्, देवम् सूर्यम् सर्वस्य प्रेरकं आदित्यं केतवः प्रज्ञापका रश्मयः सूर्याश्वस्थानीयाः चिदंशव इति यावत् उद्वहन्ति ऊर्ध्वं वहन्ति, उ पदपूरणः। किमर्थम्? विश्वाय विश्वस्मै भुवनाय दृशे द्रष्टुं, यथा विश्वं भुवनं सूर्यं पश्येत् तथा केतवस्तमुद्वहन्तीत्यर्थः॥ दृशे--दृशे विख्ये चेति तुमर्थे निपातितः। सूर्यम्--षू प्रेरणे, अस्मात् क्यप् निपातितः, रुडागमश्च॥

द्वितीयामृचमाह—

अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः।
सूराय विश्वचक्षसे॥२॥

अप त्ये तायवः यथा नक्षत्रा यन्ति अक्तुऽभिः सूराय विश्वऽचक्षसे॥

विश्वचक्षसे विश्वं चष्टे प्रकाशयतीति विश्वचक्षाः (असुन्) तस्मै सूराय सूर्याय, विभक्तिव्यत्ययः, सूर्यस्यागमने इति शेषः, नक्षत्रा नक्षत्राणि रात्रौ दृश्यमानानि ज्योतींषि अक्तुभिः रात्रिभिः सह अपयन्ति अपगच्छन्ति, त्ये तायवः यथा यथा ते तस्कराः अन्यद्रव्यापहारिणः द्रव्यस्वामिनः पुरस्तान्न तिष्ठन्ति, तथा ज्योतिषां स्वामिनः पुरः यजमानस्य अप्रकाशदशासु अन्धकारस्वामिनीषु रात्रिषु अल्पप्रकाशविधायीनि ज्योतींषि पलायितानि भवन्ति॥

तृतीयामृचमाह—

अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु।
भ्राजन्तो अग्नयो यथा॥३॥

अदृश्रम् अस्य केतवः वि रश्मयः जनान् अनु भ्राजन्तः अग्नयः यथा॥

अस्य सूर्यस्य केतवः प्रज्ञापका रश्मयः अंशवः जनान् जातान् सर्वान् अनु अनुक्रमेण तेषां परिपाकविशेषप्राप्तयोग्यतानुसारेण क्रमश इत्यर्थः व्यदृश्रम् प्रेक्षन्ते। तथा प्रेक्षणमेव प्रकाशनं भवति। तत्र दृष्टान्तः--यथा भ्राजन्तः अग्नयः दीप्यमानाः अग्नयो यथा प्रकाशयन्ति तद्वत्॥

अदृश्रम्–दृशिर् प्रेक्षणे, वर्तमाने लुङ्, इरितः च्लेरङादेशः, रुडागमः, तिङां तिङो भवन्तीति प्रथमपुरुषबहुवचनस्य उत्तमपुरुषैकवचनादेशः । 'अदृश्रन्' इति वाजसनेयिसंहितापाठः (८ अ०–४० म०) ॥

चतुर्थीमृचमाह—

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।
विश्वमा भासि रोचनम् ॥४॥
तरणिः विश्वऽदर्शतः ज्योतिःऽकृत् असि सूर्य विश्वम् आ भासि रोचनम् ॥

हे सूर्य सर्वस्य प्रेरक परमात्मन्, त्वं तरणिः तारयिता यजमानं तमसस्पारं इति शेषः (तरिता महतोऽध्वनो गन्ता इति स्थूलोऽर्थः) विश्वदर्शतः विश्वैः सर्वैर्द्रष्टव्यः, सर्वैर्यजमानैः साक्षात्कर्तव्यो हि स परमेश्वरः, ज्योतिष्कृत् ज्योतिषां कर्ता प्रकाशयिता च असि। 'आत्मा वा अरे द्रष्टव्यः', 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इत्याद्युपनिषद्वाक्यानां मूलं एतादृशेषु मन्त्रेषु स्फुटं लक्ष्यते । किं च त्वं विश्वम् सर्वं रोचनम् रोचमानं यथा भवति तथा आ भासि सर्वतः प्रकाशसे, प्रकाशयसि इति अन्तर्भावितण्यर्थो वा ॥ तॄ–प्लवनसंतरणयोः अस्मात् अनिप्रत्ययः । अन्ये गताः ॥

पञ्चमीमृचमाह—

प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।
प्रत्यङ्विश्वं स्वर्दृशे ॥५॥
प्रत्यङ् देवानाम् विशः प्रत्यङ् उत् एषि मानुषान् प्रत्यङ् विश्वम् स्वः दृशे ॥

हे सूर्य, देवानाम् विशः द्युलोकवासिनो जनान् दैवान् (मरुत इत्येके, तथा अन्यत्र श्रुतेरित्याहुः) प्रत्यङ् प्रतिगच्छन् उदेषि उदयं प्राप्नोषि, तथा मानुषान् मनुष्यान् प्रत्यङ् प्रतिगच्छन् उदेषि । तथा विश्वम् स्वः सर्वं स्वर्-आख्यं ज्योतिः, दृशे द्रष्टुं प्रत्यङ् प्रतिगच्छन्

उदेषि । इह मानुषो जनः यजमानः अमुत्र दैव्यो जनः ततश्च स्वर्लोकः तत्र सयुग्जनो वा, एवं सर्वोऽपि 'स्वाभिमुखो भगवान् प्रादुर्भवति ज्योतिषां पति'रिति यथा पश्येत् तथा त्वमुदेषीत्युक्तं भवति ॥ प्रत्यङ्–प्रतिपूर्वाद्गत्यर्थादञ्चतेः क्विन्, प्रत्ययस्य कुत्वम् ॥

इति प्रथमस्य चतुर्थे सप्तमो वर्गः

षष्ठीमृचमाह—

येना॑ पावक॒ चक्ष॑सा भुर॒ण्यन्तं॒ जनाँ॒ अनु॑ ।

त्वं वरु॑ण॒ पश्य॑सि ॥६॥

येन॑ पा॒व॒क॒ चक्ष॑सा भु॒र॒ण्यन्त॑म् जना॑न् अनु॑ त्वम् व॒रु॒ण॒ पश्य॑सि ॥

हे पावक शोधक, वरुण वरुणात्मक सूर्य, त्वम् जनान् जन्मिनः भुरण्यन्तम् धारयन्तं पोषयन्तं वा लोकं येन चक्षसा येन चक्षुषा अनु पश्यसि अनुक्रमेण वीक्षसे, तेन व्येषि इति उत्तरस्यामृचि संबन्धः । पावकेति संबोधनात् वरुणस्य पारिशुद्ध्यप्रदत्वेन प्रसिद्धेश्च वरुणात्मकः सूर्य आमन्त्रित इति व्याख्यातम् । अनिष्टनिवारकेति सायणीयम् । अवयवार्थानुसारेणैवं गृहीतं चेत्, वृञ् वरणे इति निष्पन्नत्वात् सर्वमप्यावृत्य स्थितो वरुणो विपुलः सर्वव्यापीति साधीयानर्थः ॥ भुरण्यन्तम्–भुरण धारणपोषणयोः कण्ड्वादिः, तस्माद् यक् ॥

सप्तमीमृचमाह—

वि द्यामे॑षि॒ रज॑स्पृ॒थ्वहा॒ मिमा॑नो अ॒क्तुभिः॑ ।

पश्य॒ञ्जन्मा॑नि सूर्य ॥७॥

वि द्याम् ए॒षि॒ रजः॑ पृ॒थु अहा॑ मिमा॑नः अ॒क्तुऽभिः॑ पश्य॑न् जन्मा॑नि सू॒र्य॒ ॥

हे सूर्य, त्वं पृथु विस्तीर्णं रजः अन्तरिक्षम् द्याम् दिवं च व्येषि विशेषेण गच्छसि । किं कुर्वन् ? अक्तुभिः त्वदीयैरंशुभिः अहा अहानि मिमानः अह्नां मानं कुर्वन्, तथा जन्मानि जन्मवन्ति, दिव्ये प्रकाशे लब्धजन्मनोऽन्तर्याजिनो जनान् पश्यन् प्रेक्षमाणः । अत्र 'अक्तुभिः (सह) अहानि मिमानः उत्पादयन्' इति बाह्योऽर्थः सूर्यायत्तत्वात् अहोरात्रमानस्य । क्वचित्

अक्तवोंऽशव इति प्रागुक्तमवधेयम्। सूर्यांशुभिरेव अहः संभवति। बह्वचः अन्तःप्रकाशदशाः अन्तर्याजिनो भवन्ति, इदं च तत्त्वं उषस्यविचारे प्रतिपादितम् ॥ मिमानः—माङ् माने जुहोत्यादिः, शानच्। जन्मानि—जनी प्रादुर्भावे, मनिन्, जन्मवन्ति इति अन्तर्भावितमतुबर्थः ॥

अष्टमीमृचमाह—

सप्त त्वा हरितो रथे वहन्ति देव सूर्य।
शोचिष्केशं विचक्षण ॥८॥

सप्त त्वा हरितः रथे वहन्ति देव सूर्य शोचिःऽकेशम् विऽचक्षण ॥

हे सूर्य, देव, विचक्षण विशेषेण द्रष्टः सर्वस्य, प्रकाशयितः इति सायणः। सप्त सप्तसंख्याकाः हरितः सूर्याश्वा रश्मयः, तत्त्वसप्तकावद्योतकं सप्तविधत्वं बोध्यम्, शोचिष्केशम् शोचींषि तेजांसि केशा इव यस्मिन् लक्ष्यन्ते तं त्वा त्वां रथे वहन्ति प्रापयन्ति ॥

नवमीमृचमाह—

अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः।
ताभिर्याति स्वयुक्तिभिः ॥९॥

अयुक्त सप्त शुन्ध्युवः सूरः रथस्य नप्त्यः ताभिः याति स्वयुक्तिऽभिः ॥

सूरः सर्वस्य प्रेरकः सूर्यो देवः रथस्य स्वीयस्य नप्त्यः नप्त्रीः पुत्रिकाः रथादेव संभूता इत्यर्थः सप्त सप्तसंख्याकाः शुन्ध्युवः विशुद्धाः शोधिका वा अश्वस्त्रियः अयुक्त योजितवान् रथे। स्वयुक्तिभिः स्वकीयाः सूर्यसम्बन्धिन्यः युक्तयः योजनानि यासां अश्वस्त्रियां ताभिः अश्वाभिः याति गच्छति ॥ अयुक्त—युजिर् योगे, लुङ्। शुन्ध्युवः—शुन्ध विशुद्धौ, यजिमनीत्यादिभ्यो युप्रत्ययः। शुन्ध्युवः नप्त्यः इति द्वितीयार्थे प्रथमाविभक्तिव्यत्ययः। नप्त्यः—रेफलोपः छान्दसः। न पातयतीति नप्तृशब्दनिर्वचनं चिन्त्यमेव। रेफलोपो न भवति शाखान्तरपाठे (तै. ब्रा. २.४.५) ॥

द्रष्टारमृषिं वागाविशति, यदनुग्रहेण अग्नेर्गोप्यं तत्त्वं कृत्यं च उत्तरेणार्धर्चेनाह। यः देवः अग्निः मर्त्येषु मरणधर्मसु मनुष्येषु अमृतः मरणरहितः नित्यः ऋतावा ऋतवान् सत्यवान्, अनृतपरिप्लुतेषु मनुष्येषु नश्वरेषु स्वयमनश्वरः सत्योज्ज्वलो भवतीत्यर्थः। एवं स्वरूपमुक्तम्। अथ कृत्यं ब्रूते। होता आह्वाता देवानाम्, किं च यजिष्ठः अतिशयेन यष्टा, यजमानस्य कार्यं स्वयं निर्वहत्यग्निः, अत एवोत्तमयाजी, न केवलं यजति देवान् आह्वयति च, आहूयानीतान् देवान् यजमाने व्यवस्थापयति च, देवान् इत् कृणोति इन्द्रादीन् करोत्येव॥ कथा—छन्दसि थाप्रत्ययः। भामिने—भा दीप्तौ, मन्प्रत्ययः, ततो मत्वर्थीय इनिः। ऋतावा—मत्वर्थीयो वनिप्, अन्येषामपि दृश्यत इति दीर्घत्वम्॥

द्वितीयामृचमाह—

यो अ॑ध्व॒रेषु॒ शन्त॑म ऋ॒ताव॒ा होता॒ तमू॒ नमो॑भि॒रा कृ॑णुध्वम्।
अ॒ग्निर्यद्वेर्मर्ता॑य दे॒वान्त्स चा॒ बोधा॑ति॒ मन॑सा यजाति॥२॥

यः अ॒ध्व॒रेषु॑ शम्ऽतमः ऋ॒तऽवा होता॑ तम् ऊ॒म् इति॑ नमः॑ऽभिः आ कृ॒णु॒ध्व॒म् अ॒ग्निः यत् वेः मर्ता॑य दे॒वान् सः च॒ बोधा॑ति मन॑सा य॒जा॒ति॒॥

यः योऽग्निः अध्वरेषु यागेषु दिव्याध्वयात्रात्मकेषु शन्तमः सुखकृत्तमः अध्वगमनायासवर्जं सुखकारीत्यर्थः ऋतावा सत्यवान् परमार्थदर्शी अनृतपरिहारक इत्यर्थः, होता आह्वाता देवानाम् तम् उ तमेव देवं नमोभिः नमस्करणैः अन्तर्बहिश्च सर्वैरङ्गैः प्रपदनैः प्रपत्तिभिरित्यर्थः, हे यजमानाः यूयं आकृणुध्वम् आकृतिमन्तं कुरुत, अग्नेरमृतस्य गुप्तस्य युष्मासु व्यक्तिं निष्पादयतेति यावत्। यत् यदा आकृतिनिष्पत्तौ सत्यां अग्निः मर्ताय मनुष्याय यजमानकृते देवान् इन्द्रादीन् वेः वेति प्रविशति आविष्करोति वा, तदा सः अग्निः बोधाति च जानाति च मनसा मत्या यजाति पूजयति च देवानिति शेषः॥ मर्त्ये यजमाने अमृतोऽग्निः प्रबुद्धो व्यक्तित्वमापन्नः स्वयं यजननिर्वाही भवति, होता देवानां यजमानस्य जागरितप्रज्ञायां निर्माता च सम्पद्यते। 'मनसा बोधाति यजाति' इत्युक्त्या यजमाने बहिःप्रज्ञो भूत्वा देवबोधवान् देवयाजी च भवतीत्युक्तम्। अत्र 'मनसा नमसा' इति नकारमकारयोः स्थानविपर्ययं मन्यते सायणः, अर्थस्तु नमसा हविर्भिरित्याह॥ वेः—वी गत्यादिषु, वर्तमाने लङ्, प्रथमपुरुषैकवचनस्य मध्यमपुरुषैकवचनादेशः। बोधाति, यजाति—लेटि आडागमः॥

तृतीयामृचमाह—

स हि क्रतुः स मर्यः स साधुर्मित्रो न भूदद्भुतस्य रथीः ।
तं मेधेषु प्रथमं देवयन्तीर्विश उप ब्रुवते दस्ममारीः ॥३॥

सः हि क्रतुः सः मर्यः सः साधुः मित्रः न भूत् अद्भुतस्य रथीः
तम् मेधेषु प्रथमम् देवऽयन्तीः विशः उप ब्रुवते दस्मम् आरीः ॥

सः हि स ह्यग्निः क्रतुः अध्यवसायबलः, अत एव कर्मणां कर्ता, सः मर्यः स बलाढ्यः, सः साधुः साधयिता, निष्पादयितापि स एव, मित्रः न मित्र इव, सौरविभूतिरादित्यो यथा सुहृत् उपकारी भवति तथा अद्भुतस्य रथीः अद्भुतपदवेदनीयस्य परमस्य ज्योतिषः सारथिः भूत् भवति । अद्भुतशब्दः सविस्तरं विचारितो भूमिकायां चतुर्थे खण्डे (पुट ८०, ८१) । तम् एवंभूतं अग्निं मेधेषु यज्ञेषु देवयन्तीः देवयन्त्यः देवानात्मन इच्छन्त्यः देवकामा इत्यर्थः विशः प्रजाः प्रथमम् उप ब्रुवते आदौ उपेत्य हृद्गतां मन्त्ररूपां वाचं उच्चारयन्ति । कीदृश्यो विशः? दस्मम् आरीः कर्मणां निष्पादकं तमग्निं प्रति अरणशीलाः उद्योगिनः आर्याः । एवमनवरतमुद्योगिनो भवन्ति ये मर्त्यास्ते प्रथमं अग्निमेवोपासते । तन्मुखेन देवकामास्ते सफलोद्योगा भवन्ति ॥ मर्यः—सविस्तरं विचारितः (१.६.३) । देवयन्तीः—वा छन्दसीति पूर्वसवर्णदीर्घत्वम् । आरीः—ऋ गतौ, जनिघसिभ्यामिण् इति इण्प्रत्ययः, ततो ङीष्, पूर्ववत् पूर्वसवर्णदीर्घत्वम् ॥

चतुर्थीमृचमाह—

स नो नृणां नृतमो रिशादा अग्निर्गिरोऽवसा वेतु धीतिम् ।
तना च ये मघवानः शविष्ठा वाजप्रसूता इषयन्त मन्म ॥४॥

सः नः नृणाम् नृऽतमः रिशादाः अग्निः गिरः अवसा वेतु धीतिम्
तना च ये मघऽवानः शविष्ठाः वाजऽप्रसूताः इषयन्त मन्म ॥

नृणाम् नेतॄणां बलवतां देवानां मध्ये नृतमः अतिशयेन बलवान् रिशादाः हिंसकानां अत्ता भक्षयिता सः अग्निः उक्तगुणविशिष्टः अग्निः अवसा स्वीयेन सान्निध्यात्मना साहाय्येन साधनेन नः अस्माकं गिरः स्तुतिवाचः धीतिम् धारणावतीं प्रज्ञां च वेतु आविष्करोतु प्रविशतु वा ।

ये च ये पुनरन्ये देवाः इन्द्रादयः तना वितत्या सर्वैशान्त्येनेत्यर्थः मघवानः दिव्यधनाः शविष्ठाः दीप्तबलाः सन्ति, तेऽपि वाजप्रसूताः वाजैः स्वीयसमृद्धिभिः प्रसूताः प्रेरिताः भूत्वा मन्म मननं मतिं इषयन्त एषयन्ति, मतेरेषणाबलं अनुगृह्णन्त्वित्यर्थः ॥ तना—तनु विस्तारे, पचाद्यच्, तृतीयैकवचनस्य आकारः। शविष्ठाः—शवः दीप्तं बलं, मत्वर्थीयो विनिः, तत आतिशायनिक इष्ठन्, विन्मतोर्लुगिति विनो लुक्। इषयन्त—इष इच्छायाम्, अस्माण्ण्यन्तात् छान्दसो लङ् लोडर्थे ॥

पञ्चमीमृचमाह—

एवाग्निर्गोतमेभिर्ऋतावा विप्रेभिरस्तोष्ट जातवेदाः।
स एषु द्युम्नं पीपयत्स वाजं स पुष्टिं याति जोषमा चिकित्वान् ॥५॥

एव अग्निः गोतमेभिः ऋतऽवा विप्रेभिः अस्तोष्ट जातऽवेदाः सः
एषु द्युम्नम् पीपयत् सः वाजम् सः पुष्टिम् याति जोषम् आ चिकित्वान् ॥

ऋतावा सत्यवान् जातवेदाः जातप्रज्ञः, मनुष्ये प्रबोधलाभात् अधुना जातवेदस्त्वविशेषणमुपपन्नम् अग्निः देवः विप्रेभिः विपश्चिद्भिः गोतमेभिः एतन्नामकैर्ऋषिभिः, चित्प्रकाशसम्पन्नैरिति ध्वनितं गोः किरणवाचित्वात् ज्ञानप्रकाशसङ्केतकत्वाच्च एव एवं अस्तोष्ट स्तुतः। सः स्तुतश्चासावग्निः एषु गोतमेषु द्युम्नम् द्योतमानं बलं पीपयत् आप्याययति, पोषयति, पाययतीति सायणः। तर्हि मुख्यार्थस्य बाधात् लक्षणया पोषणमेवाभिप्रेतं ग्राह्यम्। सः एषु वाजम् समृद्धिं तथा सः पुष्टिम् पुनर्वर्धयति। आ चिकित्वान् सर्वतः प्रत्यक्षदर्शी ज्ञानवान् सोऽग्निः जोषम् प्रीतिं याति प्राप्नोति ॥ गोतमेभिः—ऋष्यन्धकादिभ्यश्चेति अण्विधेः अत्रिभृग्वादिभ्यश्चेति बहुषु लुक्। अस्तोष्ट—स्तौतेः कर्मणि लुङ्, चिणभावश्छान्दसः। पीपयत्—प्यायतेः णिचि छान्दसः पीभावः, एवं सायण एवान्यत्र प्यायतेर्निष्पादयति (१५२.६, १५३.४, १८१.५, ६)। जोषम्—जुषी प्रीतिसेवनयोः, भावे घञ्॥ अरविन्दश्रीचरणैर्वेदरहस्यार्थप्रतिपादनाय सविस्तरव्याख्यमुदाहृतानां सूक्तानामिदमेकम्। यद्यपि विस्तरभिया नेह तत्सर्वमुक्तम्, तथापि तत्तात्पर्यानुसारेणेदं पञ्चर्चं व्याख्यातम् ॥

इति प्रथमस्य पञ्चमे पञ्चविंशो वर्गः

'अभि त्वे'ति पञ्चर्चं पञ्चमं सूक्तं गोतमस्यार्षं आग्नेयं गायत्रम् ॥

तत्र प्रथमामृचमाह—

अभि त्वा गोतमा गिरा जातवेदो विचर्षणे । द्युम्नैरभि प्र णोनुमः ॥१॥

अभि त्वा गोतमाः गिरा जातऽवेदः विऽचर्षणे द्युम्नैः अभि प्र नोनुमः ॥

हे जातवेदः जातानां वेदितः, विचर्षणे विशेषेण सर्वस्य द्रष्टः, अग्ने, गोतमाः एतदाख्या वयं ऋषयः त्वा त्वाम् गिरा स्तुत्या अभि आभिमुख्येन स्तुमः । न केवलं 'गिरा' वाचा स्तुमः, किं तु द्युम्नैः द्योतमानैः बलैः त्वत्प्रसादाल्लब्धैः तुभ्यमेवाधुना समर्प्यमाणैः अभि प्रणोनुमः ॥ पूर्वसूक्तस्य अन्तिमर्चि "जातवेदाः आ चिकित्वान् एषु द्युम्नं वाजं पीपयत्" इति पठितं अत्रावधेयम् । तान्येव पदानि तदर्थानि वा प्रयुक्तान्यत्र । तत्र आचिकित्वान् अत्र विचर्षणे इति । अग्निना आप्यायितं द्युम्नं अग्नये समर्प्य बहुशः स्तौति मन्त्रद्रष्टा । "वाजं पीपयत्" इति पूर्वमुक्तम् । अत्र तृतीयर्चि 'वाजसातमम्' इति विशेषणं साकूतं बोध्यम् ॥ नोनुमः—णु स्तुतौ, अस्माद् यङ्लुगन्ताल्लट् ॥

द्वितीयामृचमाह—

तमु त्वा गोतमो गिरा रायस्कामो दुवस्यति । द्युम्नैरभि प्र णोनुमः ॥२॥

तम् ऊम् इति त्वा गोतमः गिरा रायःऽकामः दुवस्यति द्युम्नैः अभि प्र नोनुमः ॥

रायस्कामः धनकामः दिव्यसंपत्काम इति रहस्यार्थः गोतमः ऋषिरयं तमु त्वा तथाभूतं पूर्वोक्तविधानुग्रहकारिणं त्वां गिरा दुवस्यति परिचरति । शिष्टं गतम् ॥ रायस्कामः—रायो धनानि कामयते, तत्पुरुषे कृति बहुलमिति लुक्, विसर्जनीयस्य सत्वम् । दुवस्यति—परिचरणार्थकः कण्ड्वादिः ॥

तृतीयामृचमाह—

तमु त्वा वाजसातममङ्गिरस्वद्धवामहे । द्युम्नैरभि प्र णोनुमः ॥३॥

तम् ऊम् इति त्वा वाजऽसातमम् अङ्गिरस्वत् हवामहे द्युम्नैः अभि प्र नोनुमः ॥

हे अग्ने, वाजसातमम् वाजानां समृद्धीनां अतिशयेन सनितारं दातारं तमु त्वा तमेव त्वां

अङ्गिरस्वत् अङ्गिरसः पूर्वे पितरः प्रसिद्धा ऋषय इव हवामहे आह्वयामः। शिष्टं गतम्॥
अङ्गिरस्वत्—तेन तुल्यं क्रिया चेदिति वतिः॥

चतुर्थीमृचमाह—

तमु त्वा वृत्रहन्तमं यो दस्यूँरवधूनुषे। द्युम्नैरभि प्र णोनुमः॥४॥
तम् ऊम् इति त्वा वृत्रहन्ऽतमम् यः दस्यून् अवऽधूनुषे द्युम्नैः अभि प्र नोनुमः॥

हे अग्ने, दस्यून् उपक्षपयितृन् राक्षसादीन् यः यस्त्वं अवधूनुषे अवचालयसि अधः पातयसि, वृत्रहन्तमम् अतिशयेन वृत्राणां तमसां पाप्मनां हन्तारं तमु त्वा तमेव त्वां नोनुम इति संबन्धः। शिष्टं गतम्॥

पञ्चमीमृचमाह—

अवोचाम रहूगणा अग्नये मधुमद्वचः। द्युम्नैरभि प्र णोनुमः॥५॥
अवोचाम रहूगणाः अग्नये मधुऽमत् वचः द्युम्नैः अभि प्र नोनुमः॥

रहूगणाः रहूगणस्य पुत्रा वयं गोतमाः अग्नये देवाय मधुमत् माधुर्ययुक्तं वचः स्तोत्रं अवोचाम अवादिष्म। शिष्टं गतम्॥

इति प्रथमस्य पञ्चमे षड्विंशो वर्गः

'हिरण्यकेश' इति द्वादशर्चं षष्ठं सूक्तम्। प्रथमतृचस्त्रैष्टुभः, द्वितीय औष्णिहः, शिष्टानां षण्णामृचां गायत्री छन्दः। अग्निर्देवता। प्रथमतृचस्य शुद्धाग्निर्मध्यमस्थानो वैद्युताग्निर्वा देवतेति पूर्वे। शुद्धाग्निरिति चेदलमस्माकं, स न केवलं भौतिकः वैद्युतो वा, तस्य सर्वदेवात्मकत्वात्, अमृतस्य तस्य मर्त्ये प्रथमं क्रतुरूपेणाविर्भावात्, आद्ये तृचे भुवि दिवि मध्यमेऽन्तरिक्षे च तस्य त्रिधा वर्णनात्॥

तत्र प्रथमामृचमाह—

हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान्।
शुचिभ्राजा उषसो नवेदा यशस्वतीरपस्युवो न सत्याः॥१॥

हि॑र॑ण्य॒ऽके॒शः रज॑सः वि॒ऽसा॒रे अहि॑ः धुनि॑ः वात॑ःऽइव ध्रजी॑मान्
शुचि॑ऽभ्राजाः उ॒षस॑ः नवे॑दाः यश॑स्वतीः अ॒प॒स्युव॑ः न स॒त्याः ॥

रजसः अन्तरिक्षस्य विसारे विस्तारे, नभोविताने, हिरण्यकेशः हिरण्यवर्णाः सुवर्णवद्रोचमानाः केशाः केशस्थानीयाः ज्वालाः यस्य सः। अग्नेर्ज्वालानां आदित्यवर्णत्ववर्णनेन तस्य तृतीयस्थानगतं दिव्यं वैभवं द्योतितम्। अथ मध्यमस्थाने स कीदृशः? अहिः मेघः तदुपलक्षितसर्पाकारविद्युद्रूपः धुनिः कम्पयिता मेघानामिति शेषः वात इव वायुरिव ध्रजीमान् शीघ्रगतियुक्तः, उत्तरार्धेन प्रथमस्थानसंबन्धिनमाह। शुचिभ्राजाः शोभनदीप्तियुक्तः उषसः उषोवेलाः नवेदाः ज्ञाता, कविर्मनीषीत्यादिषु पठितः, विचारितश्च (१.३४.१) उषसां वेदिता प्रभातसमयज्ञानवान्। कीदृशीरुषसः? यशस्वतीः ख्यातिमतीः अपस्युवः न अपः कर्म आत्मन इच्छन्तीः कर्मकारिणीरिव सत्याः सत्यधर्मानुसारिणीः 'ऋतस्य पन्थामन्वेति साधु' इत्युक्तविधया ऋतपथमप्रमादेन अनुवर्तमानाः हि उषसः। अत एव तथा ख्यातिमत्यः यथोचितकालं कर्मकारिण्य इव प्रभान्ति उषसः। ऊर्ध्वगतौ हिरण्यज्वालोऽपि मध्यस्थितौ 'वात इव ध्रजीमान्' 'धुनिरपि' प्रथमस्थाने भुवि "शुचिभ्राजाः" उषसां प्रादुर्भावसमयं जानाति "नवेदाः" अग्निः॥ अयं बाह्यपक्षानुसारेणार्थः प्रोक्तः। अथेदमस्य रहस्यं भवति। मर्त्ये क्रतुरग्निरमृतो यदा प्रबुद्धो ज्वलन्नूर्ध्वं गच्छति तदा तस्य ज्वाला दिवं शुद्धमानसचैतन्यभुवं स्पृशन्ती आदित्यवर्णा भवति, सत्यस्य ज्योतिषो विसारं स्वीकृत्य भ्राजते। प्राणलोकविभवभूयिष्ठे मध्यमस्थाने सोऽग्निरन्तर्ज्वलन्नेव ज्योतिर्बलादीनामावरकं छत्रं मेघं वर्षणाय कम्पयन् क्रियावेगवान् विद्योतते। अथ जागरितस्थानेऽत्र बहिःप्रज्ञे पुरुषे चिन्मयारुणोदयसमयानां ज्ञाता जागरूको जागर्ति। एवं त्रिधा वर्तनमग्नेः प्रकाशितमस्यामृचि। अस्य तृचस्य द्वितीय-तृतीयऋग्भ्यां अयमर्थः संगच्छते॥

स्थूलार्थोऽपि अस्माभिरेव प्रथममुक्तः, तत्र सायणव्याख्यानस्य दुर्घटत्वात्। चिन्तकानां निरीक्षणायेह सायणभाष्यपङ्क्तीरुदाहरिष्यामः। "हिरण्यकेशः...अहिः आगत्य हन्ता मेघानां धुनिः...वात इव ध्रजीमान्...एवंभूतो वैद्युतोऽग्निः रजस उदकस्य विसारे विसरणे मेघान्निस्सरणे निमित्तभूते सति शुचिभ्राजाः...सन् मेघाज्जलानि निर्गमयितुं जानाति। उषसः उषोदेवताः नवेदाः न विदन्तीति नवेदाः। मेघादुदकस्य निस्सरणं अग्निरेव जानाति उषसस्तु न जानन्तीत्यर्थः। अज्ञाने दृष्टान्तः—यशस्वतीः अन्नयुक्ताः अन्नवत्यः अपस्युवः...सत्याः अवितथा-

रम्भाः न एवंभूताः प्रजा इव । अत्रोपसामज्ञानेनाग्निः प्रशस्यते न तु ता निन्द्यन्ते, न हि निन्दा निन्द्यं निन्दितुं अपि तु स्तुत्यं स्तोतुमिति न्यायात्" ॥ प्रसङ्गवशादिदमत्र वक्तव्यं यदस्मत्पूर्वाचार्यैर्वासिष्ठपादैरभिहितम् "अयं मन्त्रो व्याख्यानस्याऽगम्यगोचरोऽभूत्, यथा कथञ्चित् अध्याहारैरपार्थैश्च वाक्यं पूरितम् (सायणीये)" इति ॥ भ्रजीमान्–भ्रज गतौ, इन् सर्वधातुभ्य इति भावे इन्प्रत्ययः । नवेदाः–गतम् । अपस्युवः–अपस्-शब्दात् सुप आत्मनः क्यच्, क्याच्छन्दसीत्युप्रत्ययः, तन्वादीनां छन्दसि बहुलमुपसंख्यानमिति उवङ् ॥

द्वितीयामृचमाह—

**आ ते सुपर्णा अमिनन्तँ एवैः कृष्णो नोनाव वृषभो यदीदम् ।**
**शिवाभिर्न स्मयमानाभिरागात्पतन्ति मिहः स्तनयन्त्यभ्रा ॥२॥**

**आ ते सुऽपर्णाः अमिनन्त एवैः कृष्णः नोनाव वृषभः यदि इदम्**
**शिवाभिः न स्मयमानाभिः आ अगात् पतन्ति मिहः स्तनयन्ति अभ्रा ॥**

हे अग्ने, ते तव सुपर्णाः शोभनपतना ज्वालारश्मयः एवैः गमनवेगप्रकारैः आमिनन्त प्रबला भवन्ति, कृष्णः कृष्णवर्णः वृषभः वर्षिता नोनाव भृशं शब्दं अकरोत् यदि इदम् यदा इदं कर्म चलति, तदा शिवाभिः क्षेमकारिणीभिः स्मयमानाभिर्न हसनवतीभिरिव विद्युद्भिः सहेत्यध्याहार्यं विशेष्यं, मूले नास्ति । आगात् आगच्छति कर्तृपदं वर्षितेत्यध्याहार्यम् । ततः मिहः आपः पतन्ति वृष्टा भवन्ति, अभ्रा अभ्राणि अद्भिः पूर्णानि, अपाम्भरका मेघाः स्तनयन्ति गर्जितं कुर्वन्ति । अयं स्थूलोऽर्थः । अत्र रहस्यार्थकथनात् प्रागिदं वक्तव्यम् । वेदे प्राचीन-आर्यभाषासु च सर्वत्र बलार्थकाः शब्दाः हिंसार्थकधातुमूलकाः ग्राह्याः । अत एव मर्यः मारयितृत्वात् बलार्थे रूढो वेदे । दस्रदस्मदक्षादयश्च कर्मनिष्पादकबलार्थे प्रयुक्ता लक्ष्यन्ते । अथ "एवैः" गमनप्रकारैरित्यस्माभिरुक्तम् । अत्रापि प्राचीन-आर्यभाषाप्रयोगाः अवधेयाः । धात्वर्थानुगमादेव "एवैः" गन्तृभिः मरुद्भिरित्यत्र सायणो व्याचष्टे । अन्यत्र "अश्वैः" इति प्रसक्तिवशादाह । अस्मत्पक्षे केवलगमनार्थ एवेह अलम् ॥

अथेदं पारमार्थिकं तात्पर्यं भवति । ऋतूज्ज्वलोऽग्निरधुना मध्यमस्थाने प्राणधामनि उच्चरति । उत्पतनवेगभङ्ग्या प्रबले भवति सति, चित्प्रकाशबलादीनां अप्सङ्केतितानां वर्षकः इन्द्रविभूतिदेवः आसन्नवृष्टिं सूचयति स्वीयनादविभवेन । अस्मिन् समये चित्प्रकाशशक्तिविशेषाः

ज्वलन्तीभिर्विद्युद्भिरिव शुभ्राभिः सुखकारिणीभिः ज्योतिर्बलादिभिः सह शरीरक्षेत्रे विन्दुशः पतितुं आरभन्ते। अनन्तरं वृष्टिरेव भवति। एवं सङ्केतरहस्ये विज्ञाते सर्वोऽपि मन्त्रः स्पष्टो भवति। इदं चावधेयम्। "एवैः" कैः? "स्मयमानाभिः" काभिः? "आगात्" कः? सूक्ष्मपक्षं स्थूलपक्षं वा अवलम्ब्य व्याख्यातुमवकाशदानाय मन्त्रवर्ण एवं व्यवस्थितो भवति ॥ अमिनन्त—मीञ् हिंसायाम्, क्रैयादिकः, व्यत्ययेनान्तादेशः। नोनाद—नौतेर्यङ्लुगन्ताव लिट्। स्मयमानाभिः—ष्मिङ् ईषद्धसने, ततः शानच्। स्तनयन्ति—स्तन शब्दे चुरादिः ॥

तृतीयामृचमाह—

यदीमृतस्य पयसा पियानो नयन्नृतस्य पथिभी रजिष्ठैः।
अर्यमा मित्रो वरुणः परिज्मा त्वचं पृञ्चन्त्युपरस्य योनौ ॥३॥

यत् ईम् ऋतस्य पयसा पियानः नयन् ऋतस्य पथिऽभिः रजिष्ठैः
अर्यमा मित्रः वरुणः परिऽज्मा त्वचम् पृञ्चन्ति उपरस्य योनौ ॥

एवं उक्तविधया मध्यमस्थाने आगमयभूमनि चित्रवर्णादिवर्षारम्भानन्तरं पुनश्च समुज्ज्वलोऽग्निः ऋतस्य ज्योतिषः सारभूतेन रसेन यजमानं सर्वात्मना आप्याययन् ऋतस्य प्रापकैः ऋजुतमैर्मार्गैरूर्ध्वं नयन् प्रवर्तते। ईदृश्यां दशायां आदित्याः मित्रादयः ऋतज्योतिर्विभवाः पूर्वोक्तज्योतिरादिवर्षोत्पत्तिस्थाने आच्छादकवत् गोपनकवचवत् स्थितं दिव्यप्रदेशं अनेनाग्निनीतेन यजमानात्मना संयोजयन्ति—इत्येतदर्थकं वैदिकयोगरहस्यं वर्णयति तृचस्यास्य तृतीयर्क् ॥ यत् ईम् यदा अयमग्निः ऋतस्य सत्यस्य पयसा सारेण अमृतरसेन पियानः यजमानस्य आप्यायनं कुर्वाणः, स्थूलपक्षे जगदाप्यायनं ऋतस्य सत्यस्य संबन्धिभिः रजिष्ठैः ऋजुतमैः पथिभिः मार्गैः नयन् प्रापयन् वर्तते, तदा अर्यमा मित्रः वरुणः एते देवाः परिज्मा परितो गन्ता, इन्द्रश्च "अतः परिज्मन्ना गहि" अत्रेन्द्र एवोक्तः ॥ तस्य त्रैलोक्येश्वरत्वात् अत्रापि स एव बोध्यः उपपत्तेः, मरुद्गण इति सायणीये, उपरस्य ऊर्ध्वस्य उत्कृष्टस्य ज्योतिर्बलादिवर्षणस्य योनौ मूलस्थाने त्वचम् गोपनकवचवत् स्थितां दिव्यप्राकारभुवं पृञ्चन्ति संपृक्तां कुर्वन्ति, शरीरेण यजमानेन संयोजयन्तीत्यर्थः। सायणीये उपरशब्दार्थः नैकविधः, विभिद्यते। तथा तन्निर्वचनं च नोपपद्यते। 'उपरान् उत्कृष्टे स्थाने वर्तमानान्' (२.४.९) इति सायण एव ऋज्वर्थमाह ॥ पियानः—स्फायी ओप्यायी वृद्धौ, छन्दसि शपो लुक्, व्यत्ययेन पीभावः। रजिष्ठैः—ऋजुशब्दात् इष्ठन्, ऋकारस्य रत्वम्। पृञ्चन्ति—पृची संपर्के रौधादिकः ॥

चतुर्थीमृचमाह—

अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
अस्मे धेहि जातवेदो महि श्रवः ॥४॥

अग्ने वाजस्य गोऽमतः ईशानः सहसः यहो इति अस्मे इति धेहि जातऽवेदः महि श्रवः ॥

हे सहसो यहो बलस्य पुत्र अग्ने, त्वं गोमतः चिद्रूपरश्मियुक्तस्य वाजस्य समृद्धिराशेः ईशानः ईश्वरः असि । तस्मात् हे जातवेदः जातानां वेदितः, अस्मे अस्मासु महि महत्, भूरि श्रवः दिव्यं श्रवणं धेहि धारय स्थापयेत्यर्थः ॥ यहो—यहुः अपत्यनामसु पठितम् । अस्मे—सप्तम्याः शे आदेशः ॥

पञ्चमीमृचमाह—

स इधानो वसुष्कविरग्निरीळेन्यो गिरा ।
रेवदस्मभ्यं पुर्वणीक दीदिहि ॥५॥

सः इधानः वसुः कविः अग्निः ईळेन्यः गिरा रेवत् अस्मभ्यम् पुरुऽअनीक दीदिहि ॥

सः अग्निः इधानः दीप्यमानः वसुः वस्तुनि वसतीति वसुः, वस्तुनः सर्वस्य वासयिता, निवासहेतुः कविः मेधावी, अतीन्द्रियार्थदर्शी गिरा वाचा, स्तुत्या, ईळेन्यः अध्येषणीयः भवति । हे पुर्वणीक, पुरूणि बहूनि अनीकानि मुखानि ज्वालात्मकानि यस्य सः, तथाभूताग्ने, अस्मभ्यं, अस्मानुद्दिश्य रेवत् दिव्यधनोपेतं यथा भवति तथा दीदिहि दीप्यस्व, ज्वलितो भव ॥ इधानः—ञि-इन्धी दीप्तौ, ताच्छीलिकश्चानश् । रेवत्—रयेर्मतौ छन्दसि संप्रसारणम्, मतुपो वत्वम् । दीदिहि—दीदेतिः दीप्तिकर्मा छान्दसः ॥

षष्ठीमृचमाह—

क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः ।
स तिग्मजम्भ रक्षसो दह प्रति ॥६॥

क्षपः राजन् उत त्मना अग्ने वस्तोः उत उषसः सः तिग्मऽजम्भ रक्षसः दह प्रति ॥

उत अपि च हे राजन्, राजनशील अग्ने, त्मना आत्मना स्वयमेव क्षपः क्षपाः रात्रीः सर्वाः वस्तोः सर्वाण्यहानि उत अपि च उषसः प्रभातवेलाश्च, अत्यन्तसंयोगे द्वितीया, सर्वासु रात्रिषु उषस्सु दिवा च सः स त्वं तिग्मजम्भ तीक्ष्णमुख, रक्षसः राक्षसान् प्रति प्रतिघट्य दह दग्धान् कुरु ॥

इति प्रथमस्य पञ्चमे सप्तविंशो वर्गः

सप्तमीमृचमाह—

अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासु धीषु वन्द्य ॥७॥

अव नः अग्ने ऊतिऽभिः गायत्रस्य प्रऽभर्मणि विश्वासु धीषु वन्द्य ॥

विश्वासु सर्वासु धीषु प्रज्ञावृत्तिषु वन्द्य स्तुत्य हे अग्ने गायत्रस्य गायत्रीच्छन्दस्कस्य मन्त्रस्य सूक्तस्य गायत्रस्य साम्नो वा प्रभर्मणि प्रभरणे सम्पादने निमित्ते नः अस्मान् ऊतिभिः त्वत्कर्तृकवर्धनैः अव वर्धय॥ अवधातुः प्रायशो वर्धनार्थः अस्मत्पक्षे, क्वचित् पालनार्थं उपपद्येत॥

अष्टमीमृचमाह—

आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् । विश्वासु पृत्सु दुष्टरम् ॥८॥

आ नः अग्ने रयिम् भर सत्राऽसहम् वरेण्यम् विश्वासु पृत्ऽसु दुस्तरम् ॥

हे अग्ने, नः अस्मभ्यं रयिम् धनं दिव्यं आ भर आहर। कीदृशं रयिम्? सत्रासहम् सत्रा सह युगपदेव अभिभवितारं विघ्नानां यज्ञविरोधिनां वा। वरेण्यम् वरणीयं श्रेष्ठम् विश्वासु पृत्सु सर्वेषु संग्रामेषु दुस्तरम् विरोधिभिस्तरीतुमशक्यम्। तादृशं ज्योतिर्बलादिकं दिव्यं धनं देहि ॥ सत्रासहम्—छन्दसि सह इति ण्विः । वरेण्यम्—वृञ एण्यः ॥

नवमीमृचमाह—

आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसे ॥९॥

आ नः अग्ने सुऽचेतुना रयिम् विश्वायुऽपोषसम् मार्डीकम् धेहि जीवसे ॥

रयिर्वसु वा दिव्यं धनं ज्योतिर्बलादिकमिति व्याख्यायतेऽस्माभिः सर्वत्र। अस्यां ऋचि विस्पष्टमुच्यते रयिस्वरूपं तद्विशेषणलक्षणेन, हे अग्ने, नः अस्माकं जीवसे जीवनाय उत्तमाय दिव्याय वेति शेषः, सुचेतुना शोभनज्ञानेन सहितं रयिम् धनं आ धेहि आस्थापय। कीदृशम्? मार्डीकम् मृडीकं सुखमयं विश्वायुपोषसम् विश्वस्य सर्वस्य आयोः पुरुषायुषस्य पोषसं पोषकं यावज्जीवं देहादिषु सर्वात्मना पुरुषं पोषयितुं पर्याप्तमित्यर्थः चिन्मयं सुखमयं बलात्मकं धनं उक्तं भवति॥ सुचेतुना–चिती संज्ञाने, औणादिक उप्रत्ययः। विश्वायुपोषसम्–विश्वायुरित्यत्र सकारलोपश्छान्दसः, विश्वायुः पुष्णातीति विश्वायुपोषाः, असुन् छन्दसि॥

दशमीमृचमाह—

प्र पूतास्तिग्मशोचिषे वाचो गोतमाग्नये। भरस्व सुम्नयुर्गिरः॥१०॥

प्र पूताः तिग्मऽशोचिषे वाचः गोतम अग्नये भरस्व सुम्नऽयुः गिरः॥

हे गोतम चिन्मयकिरणयुक्ततम, ऋषेरन्तरात्मनः संबोधनम्। सुम्नयुः सुम्नं सुखं आत्मन इच्छन् त्वं तिग्मशोचिषे तीव्रज्वालाय अग्नये पूताः पवित्राः गिरः वाचः स्तोत्रवाचः प्रभरस्व प्रकर्षेण सम्पादय॥ तिग्मशोचिषे–तिज निशाने, तिग्मानि शोचींषि यस्य तस्मै। सुम्नयुः–सुम्नशब्दात् क्यच्, क्याच्छन्दसीत्युप्रत्ययः॥

एकादशीमृचमाह—

यो नो अग्नेऽभिदासत्यन्ति दूरे पदीष्ट सः। अस्माकमिद्वृधे भव॥११॥

यः नः अग्ने अभिऽदासति अन्ति दूरे पदीष्ट सः अस्माकम् इत् वृधे भव॥

हे अग्ने, यः विरोधी अमानुषो मानुषो वा नः अस्मान् अन्ति अन्तिके समीपे दूरे विप्रकृष्टस्थाने वा वर्तमानः सन् अभिदासति अभिद्रुत्योपक्षपयति, सः शत्रुः पदीष्ट पततु नश्यतु। अस्माकम् इत् अस्माकमेव वृधे वर्धनाय भव॥ अभिदासति–दसु उपक्षये। अन्ति–अन्तिकशब्दस्य ककारलोपश्छान्दसः। वृधे–वृधु वृद्धौ, संपदादिलक्षणो भावे क्विप्॥

द्वादशीमृचमाह—

सहस्राक्षो विचर्षणिरग्नी रक्षांसि सेधति। होता गृणीत उक्थ्यः॥१२॥

सहस्रऽअक्षः विऽचर्षणिः अग्निः रक्षांसि सेधति होता गृणीते उक्थ्यः॥

सहस्राक्षः सहस्रं अक्षीणि यस्य सः सर्वतोमुखी सामान्येन दृष्टिरस्येत्यर्थः विचर्षणिः विशेषेण द्रष्टा प्रत्येकं सर्वस्य । अग्निः रक्षांसि राक्षसान् यज्ञविघातकान् सेधति प्रतिषेधति । सः उक्थ्यः उक्थैः शस्त्रैः स्तोत्रैः स्वयं स्तुत्यः अस्माभिः स्तुतः सन् होता देवानामाह्वाता भूत्वा तान् गृणीते स्तौति, यजमानकृत्यं देवानामाराधनं स्वयं निर्वहति यजमानस्यात्मसमर्पणाद्धेतोः॥ गृणीते–गॄ शब्दे, प्वादीनां ह्रस्व इति ह्रस्वत्वम् ॥

इति प्रथमस्य पञ्चम अष्टाविंशो वर्गः

'इत्थे'ति षोडशर्चं सप्तमं सूक्तं गोतमस्यार्षम् । इन्द्रो देवता पङ्क्तिश्छन्दः ॥

तत्र प्रथमामृचमाह—

इत्था हि सोम इन्मदे ब्रह्मा चकार वर्धनम् ।
शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम् ॥१॥

इत्था हि सोमे इत् मदे ब्रह्मा चकार वर्धनम् शविष्ठ वज्रिन् ओजसा पृथिव्याः निः शशाः अहिम् अर्चन् अनु स्वऽराज्यम् ॥

साम ४१०

हे शविष्ठ अत्यन्तदीप्तबलोपेत, वज्रिन् वज्रवन् इन्द्र, इत्था हि साध्वेवेदं (सत्यनामैतत्) यत् त्वया मदे मदकरे सोमे यजमानार्पितसर्वानुभूतिरसे स्वीकृते सति ब्रह्मा मन्त्रः वर्धनम् यजमानात्मनि तवाभिवर्धनं चकार करोति, लडर्थे लिट् । इत् पादपूरणे । तस्मात् त्वं ओजसा वीर्यबलेन पृथिव्याः अन्नमयात् जगतः शरीरात् जागरितस्थानात् अहिम् वृत्रं निः शशाः निर्गमितवान्, निश्शेषेण शासनं कृतवानसि निर्गमनाय । किं कुर्वन्? स्वराज्यम् स्वस्य राज्यं राजत्वं अनु अनुलक्ष्य अर्चन् पूजयन्, स्वीयस्वामित्वं प्रकटयन् ॥ शशाः–शासु अनुशिष्टौ, यङ्लुकि शपः श्लुः छन्दसि । स्वराज्यम्–राज्ञो भावः कर्म वा, पत्यन्तपुरोहितादिभ्यो यक् ॥

See Sreeanth based on Sayan.

द्वितीयामृचमाह—

स त्वामदद्वृषा मदः सोमः श्येनाभृतः सुतः ।
येना वृत्रं निरद्भ्यो जघन्थ वज्रिन्नोजसार्चन्ननु स्वराज्यम् ॥२॥

सः त्वा अमदत् वृषा मदः सोमः श्येनऽआभृतः सुतः येन वृत्रम् निः अत्ऽभ्यः जघन्थ वज्रिन् ओजसा अर्चन् अनु स्वऽराज्यम् ॥

हे इन्द्र, त्वा त्वां सः सोमः त्वया परिगृह्य पीतः सोमरसः अमदत् अमदयत्, हर्षितवान्। कीदृशः सोमः? वृषा वर्षिता स्वरसस्य मदः मदकारी श्येनाभृतः श्येनेन पक्षिणा आभृतः आहृतः आनीतः, यजमानस्य हृदयादन्तरात्मन उद्गता मन्त्रात्मिका वाक् उत्पतनप्रख्यातो वेगवान् पक्षी इति बोध्यम्। तस्मान्मन्त्रवाग्बलेन दिवः उत्तमप्रज्ञाभूमेः सकाशात् संपादितः सोम इति आर्षं रहस्यम्। गायत्रीमन्त्रं पक्षिरूपं गृहीत्वा स्वर्गलोकं गत्वा सोमलतां आनिनायेति कर्मठानां पक्षे तात्पर्यं विवेकवर्जितमिति दूरापास्तम्। अत एव मन्त्रेण इन्द्रो वर्धते "ब्रह्मा चकार वर्धनम्" इति पूर्वस्यामृचि गीतम्। पुनः कीदृशः सोमः? सुतः अभिषुतः, संस्कृतः। वज्रिन् वज्रवन्निन्द्र येन सोमेन पीतेन ओजसा वीर्यबलेन अद्भ्यः अद्भिर्लक्षितमन्तरिक्षं मध्यमस्थानं स्वस्मिन्नन्तर्हितज्योतिर्बलादिकं प्राणमयप्रज्ञाक्षेत्रं, तस्मात् वृत्रम् आवरकं असुरं निर्जघन्थ निर्गमय्य हतवानसि॥ पूर्वं पृथिव्याः, अत्र अन्तरिक्षात् इत्युक्तमवधेयम्। अन्यद्गतम्॥ अमदत्—मदी हर्षे, अन्तर्भावितण्यर्थः। जघन्थ—हन्तेर्लिट्॥

तृतीयामृचमाह—

प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते।
इन्द्र नृम्णं हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम्॥३॥

प्र इहि अभि इहि धृष्णुहि न ते वज्रः नि यंसते इन्द्र नृम्णम् हि ते शवः हनः वृत्रम् जयाः अपः अर्चन् अनु स्वऽराज्यम्॥

हे इन्द्र, प्रेहि प्रकर्षेण गच्छ शत्रूनुदिश्य, अभीहि आभिमुख्येन गच्छ, धृष्णुहि अभिभव तान् शत्रून्। ते तव वज्रः आयुधं न नियंसते न नियम्यते केनापि अनिरुद्धगतित्वात्। ते तव शवः दीप्तं बलं नृम्णम् हि पौरुषप्रचुरं हि। तस्मात् वृत्रम् आवरकं निरोधकं वा असुरं चित्प्रकाशादिविरोधिनं हनः जहि, अपः वृत्राक्रान्ताः उक्तलक्षणा अपः जयाः जय लभस्व। अन्यत् पूर्ववत्॥ यंसते—यमेः कर्मणि लेटि सिप् बहुलमिति सिप्, लेटः अडागमः। हनः—लोडर्थे लङ्। जयाः—जयतेर्लेट्याडागमः॥

चतुर्थीमृचमाह—

निरिन्द्र भूम्या अधि वृत्रं जघन्थ निर्दिवः।
सृजा मरुत्वतीरव जीवधन्या इमा अपोऽर्चन्ननु स्वराज्यम्॥४॥

निः इन्द्र भूम्याः अधि वृत्रम् जघन्थ निः दिवः सृज मरुत्वतीः अव जीवऽधन्याः इमाः अपः अर्चन् अनु स्वऽराज्यम् ॥

हे इन्द्र, भूम्याः अधि पृथिव्या उपरि तं आवृतवन्तं वृत्रम् उक्तस्वरूपं निर्जघन्थ निःशेषेण हतवानसि, तथा दिवः अन्तरिक्षात् तं निः जघन्थ। अधुना इमाः अस्माभिः प्रतीक्ष्यमाणाः प्रत्यासन्नाः अपः यथोक्तलक्षणाः अवसृज अधोगमय, वर्षय। कीदृशीरपः? मरुत्वतीः मरुद्भिर्युक्ताः, मरुतः प्राणमयान्तरिक्षधाम्न उद्भूताः प्रचण्डवेगाः, शुद्धमनोमयभुवं दिवं प्राप्य धीवृत्तिबलात्मका भूत्वा दिवस्पतेरिन्द्रस्य भ्रातरो भवन्तीति प्रागुक्तमाशयं स्मारयामः। अत एव तादृशमरुत्साहचर्यात् जीवधन्याः जीवाः प्राणवन्तः धन्याः भाग्यशालिनः याभिस्ताः। अन्यत् पूर्ववत् ॥

पञ्चमीमृचमाह—

इन्द्रो वृत्रस्य दोधतः सानुं वज्रेण हीळितः।
अभिक्रम्याव जिघ्नतेऽपः सर्माय चोदयन्नर्चन्ननु स्वराज्यम् ॥५॥

इन्द्रः वृत्रस्य दोधतः सानुम् वज्रेण हीळितः अभिऽक्रम्य अव जिघ्नते अपः सर्माय चोदयन् अर्चन् अनु स्वऽराज्यम् ॥

हीळितः अनादृतः वृत्रेण, अत एव क्रुद्धस्तस्मै इन्द्रः, अभिक्रम्य आभिमुख्येन गत्वा दोधतः कम्पयमानस्य वृत्रस्य शत्रोः सानुम् समुच्छ्रितं प्रदेशं अन्तरिक्षगतं वज्रेण अवजिघ्नते प्रहरति। किं कुर्वन्? अपः चोदयन् अपां प्रेरणं कुर्वन्। किमर्थम्? सर्माय सरणाय निर्गमनाय। अन्यत् समानम् ॥ हीळितः—हेडृ होडृ अनादरे, ईकारश्छान्दसः, हेळते क्रुध्यतिकर्मेति पठितम्। जिघ्नते—हन्तेर्लिटि व्यत्ययेनात्मनेपदं बहुवचनं च। सर्माय—सृ गतौ, अर्तिस्तुसुहु- त्यादिना भावे मन्प्रत्ययः ॥

इति प्रथमस्य पञ्चम एकोनत्रिंशो वर्गः

षष्ठीमृचमाह—

अधि सानौ नि जिघ्नते वज्रेण शतपर्वणा।
मन्दान इन्द्रो अन्धसः सखिभ्यो गातुमिच्छत्यर्चन्ननु स्वराज्यम् ॥६॥

अधि सानौ नि जिघ्नते वज्रेण शतऽपर्वणा मन्दानः इन्द्रः अन्धसः सखिऽभ्यः गातुम् इच्छति अर्चन् अनु स्वऽराज्यम् ॥

इन्द्रः शतपर्वणा बह्वर्थः शतशब्दः बहुपर्वधाराभिर्युक्तेन वज्रेण स्वायुधेन सानौ अधि सप्तम्यर्थानुवादी अधिः, वृत्रावासस्य समुच्छ्रिते अन्तरिक्षप्रदेशे तं निजिघ्नते नितरां प्रहरति। ततश्च सः अन्धसः पीतात् सोमाद्धेतोः मन्दानः मन्दमानः मोदमानः सखिभ्यः यजनाद् देवसख्यं प्राप्तुवद्भ्य ऋषिभ्यः गातुम् मार्गं ऊर्ध्वं स्वसन्निधिं गन्तुं इति शेषः इच्छति। अन्यत् समानम् ॥ "मन्दानः स्तूयमानः...अन्धसो गातुं अन्नस्य मार्गं" इति सायणः ॥ मन्दानः—मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु ॥

सप्तमीमृचमाह—

इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम्।
यद्ध त्यं मायिनं मृगं तमु त्वं माययावधीरर्चन्ननु स्वराज्यम् ॥७॥

इन्द्र तुभ्यम् इत् अद्रिऽवः अनुत्तम् वज्रिन् वीर्यम् यत् ह त्यम् मायिनम् मृगम् तम् ऊम् इति त्वम् मायया अवधीः अर्चन् अनु स्वऽराज्यम् ॥

अद्रिवः पर्वतवन् इन्द्र, गावः यत्र गूढा आसन् स पर्वत इन्द्रस्य वशं गतः वज्रबलेन, पर्वतो मेघः यत्र आपो निरुद्धाः, तद्वान् इन्द्रः। विचारितः पूर्वम् (१.१०.७) "कृणुष्व राधो अद्रिवः" इत्यत्र। वज्रिन् वज्रवन्, तुभ्यं इत् तवैव वीर्यम् सामर्थ्यं अनुत्तम् अनुन्नं अप्रेरितं शत्रुभिर्न स्पृष्टमभिभूतमिति यावत्। यत् ह यस्मात् वीर्यात् खलु मायिनम् मायाविनं वञ्चकं मृगम् पलायनपटुर्यथा दुर्ग्रहस्तथावस्थितं त्यम् तम् प्रसिद्धं वृत्रं त्वमु त्वमपि मायया कपटयुक्त्यैव अवधीः हतवानसि। अन्यत्समानम् ॥ अनुत्तम्—नुदते क्तः, निष्ठानत्वाभावः नसत्तनिषत्तेतिनिपातनात्। अवधीत्—हन्तेर्लुङि वधादेशः ॥

अष्टमीमृचमाह—

वि ते वज्रासो अस्थिरन्नवतिं नाव्या ३ अनु।
महत्त इन्द्र वीर्यं बाह्वोस्ते बलं हितमर्चन्ननु स्वराज्यम् ॥८॥

वि ते वज्रा॑सः अस्थि॒रन् न॒व॒तिम् ना॒व्याः अनु॑ म॒हत् ते॒ इ॒न्द्र॒ वी॒र्य॑म् बा॒ह्वोः ते॒ बल॑म् हि॒तम् अर्च॑न् अनु॑ स्व॒ऽरा॒ज्य॑म् ॥

हे इन्द्र, ते तव वज्रासः वज्राः एकोऽपि वज्रः बहुधा भवति प्रयोगस्थलभेदबाहुल्यात् नवतिम् नवतिसंख्याकाः नाव्याः नावा तार्याः नदीः, पूर्वं निरुद्धा अधुना विसृष्टा विपुलाः प्रवाहिणीः अनु अनुलक्ष्य वि अस्थिरन् विविधमस्थिषत। हे इन्द्र, तथाविधं ते तव वीर्यम् बलं महत् प्रभूतम्। ते तव बाह्वोः भुजयोः बलम् हितम् निहितम्। शिष्टं समानम् ॥ अस्थिरन्–तिष्ठतेर्लुङ्, समवप्रविभ्यः स्थ इत्यात्मनेपदम्, व्यत्ययेन झस्य रन्नादेशः ॥

नवमीमृचमाह—

स॒हस्रं॑ सा॒कम॑र्चत॒ परि॑ ष्टोभत विंश॒तिः।
श॒तैन॒मन्व॑नोनवु॒रिन्द्रा॑य ब्र॒ह्मोद्य॑त॒मर्च॒न्ननु॑ स्व॒राज्य॑म् ॥९॥

स॒ह॒स्र॑म् सा॒कम् अ॒र्च॒त॒ परि॑ स्तो॒भ॒त॒ विं॒श॒तिः श॒ता ए॒न॒म् अनु॑ अ॒नो॒न॒वुः॒ इन्द्रा॑य ब्रह्म॑ उत्ऽय॑तम् अर्च॑न् अनु॑ स्व॒ऽरा॒ज्य॑म् ॥

सहस्रम् बहुसंख्याकाः मनुष्याः साकम् संघीभूय युगपत् एनम् इन्द्रं अर्चत अपूजयन्। तथा विंशतिः अल्पसंख्याकसंघः, षोडशर्त्विग्यजमानतत्पत्नीसदस्यशमितार इति बाह्ये कर्मपक्षे, तेषां संख्या परिष्टोभत सर्वतोऽस्तौत्। तथा शता शतसंख्याकाः स्तोतार ऋषयः इन्द्राय इन्द्रार्थं उद्यतम् उद्गतम् स्वात्मन इति शेषः ब्रह्म मन्त्रं उच्चारयन्तः अनु अनोनवुः निरन्तरं अस्तुवन्। 'अर्चत' ऋग्भिः, 'स्तोभत' सामभिः, 'अनोनवुः' स्तुतिसामान्येन इति द्योतितमवधेयम्। अन्यत् समानम् ॥ परिष्टोभत–स्तोभतिः स्तुतिकर्मा, उपसर्गात् षकारः सस्य। अनोनवुः–णु स्तुतौ, यङ्लुगन्ताल्लङि झेरुसादेशः। उद्यतम्–यम उपरमे, कर्मणि निष्ठा ॥

दशमीमृचमाह—

इन्द्रो॑ वृ॒त्रस्य॒ तवि॑षीं॒ निर॑ह॒न्त्सह॑सा॒ सहः॑।
म॒हत्तद॑स्य॒ पौंस्यं॑ वृ॒त्रं ज॑घ॒न्वाँ अ॑सृज॒दर्च॒न्ननु॑ स्व॒राज्य॑म् ॥१०॥

इन्द्रः॑ वृ॒त्रस्य॑ तवि॑षीम् निः अ॒ह॒न् सह॑सा सहः॑ म॒ह॒त् तत् अ॒स्य॒ पौंस्य॑म् वृ॒त्रम् ज॒घ॒न्वान् अ॒सृ॒ज॒त् अर्च॑न् अनु॑ स्व॒ऽरा॒ज्य॑म् ॥

इन्द्रः वृत्रस्य तेजोबलादिशत्रोरसुरस्य तविषीम् बलं निरहन् हतवान्। केनोपायेन? सहसा स्वीयेन सहनेन अन्याभिभवसाधनेन। वृत्रस्य बलमपि सहः सहनं अभिभवसमर्थम्। अस्य इन्द्रस्य तत् पौंस्यम् पुरुषलक्षणं बलं महत् भूरि। यस्मादयं वृत्रम् असुरं जघन्वान् हतवान् भूत्वा असृजत् निरगमयत् वृत्रात् तन्निरुद्धाः अपः। अन्यत् समानम्॥ पौंस्यम्—पुंस अभिवर्धने चुरादिः, अचो यदिति यत्। जघन्वान्—हन्तेर्लिटि क्वसुः॥

इति प्रथमस्य पञ्चमे त्रिंशो वर्गः

एकादशीमृचमाह—

इमे चित्तव मन्यवे वेपेते भियसा मही।
यदिन्द्र वज्रिन्नोजसा वृत्रं मरुत्वाँ अवधीरर्चन्ननु स्वराज्यम्॥११॥

इमे इति चित् तव मन्यवे वेपेते इति भियसा मही इति यत् इन्द्र वज्रिन् ओजसा वृत्रम् मरुत्वान् अवधीः अर्चन् अनु स्वऽराज्यम्॥

मही महत्यौ इमे चित् द्यौः पृथिवी चोभे अपि हे इन्द्र, तव मन्यवे त्वदीयक्रोधात्, पञ्चम्यर्थे चतुर्थी, भियसा भयेन वेपेते कम्पेते। हे वज्रिन् वज्रवन्निन्द्र मरुत्वान् मरुद्युक्तस्त्वं ओजसा बलेन यत् यदा वृत्रम् असुरं अवधीः तदा द्यावापृथिव्यावकम्पिषातामिति पूर्वेण योजनीयम्। अन्यत्समानम्॥ वेपेते—टुवेपृ कम्पने। भियसा—ञिभी भये, औणादिकः कसिप्रत्ययः॥

द्वादशीमृचमाह—

न वेपसा न तन्यतेन्द्रं वृत्रो वि बीभयत्।
अभ्येनं वज्र आयसः सहस्रभृष्टिरायतार्चन्ननु स्वराज्यम्॥१२॥

न वेपसा न तन्यता इन्द्रम् वृत्रः वि बीभयत् अभि एनम् वज्रः आयसः सहस्रऽभृष्टिः आयत अर्चन् अनु स्वऽराज्यम्॥

वृत्रः असुरः इन्द्रम् दिवस्पतिं वेपसा कम्पनेन न विबीभयत् भीतं नाकरोत्, तथा न तन्यता गर्जितेन न 'विबीभयत्'। किं तु आयसः अयोमयः सहस्रभृष्टिः बहुधाराभिर्युक्तः वज्रः इन्द्रविसृष्टः एनम् वृत्रं अभ्यायत आभिमुख्येनागच्छत् हन्तुम्। शिष्टं समानम्॥ तन्यता—स्तन शब्दे, सलोपः, तृतीयाया डादेशः। बीभयत्—बिभेतेः ण्यन्ताल्लुङ्। आयत—अय मय गतौ, लङ्, आत्मनेपदी॥

त्रयोदशीमृचमाह—

यद्वृत्रं तव॑ चा॒शनिं॒ वज्रे॑ण स॒मयो॑धयः ।
अहि॑मिन्द्र॒ जिघां॑सतो दि॒वि ते॑ बद्बधे॒ शवो॑ऽर्च॒न्ननु॑ स्व॒राज्य॑म् ॥१३॥

यत् वृत्रम् तव॑ च॒ अ॒शनि॑म् वज्रे॑ण स॒म्ऽअयो॑धयः अहि॑म् इ॒न्द्र॒ जिघां॑सतः दि॒वि ते॒ ब॒द्ब॒धे॒ शव॑ः अर्च॑न् अनु॑ स्व॒ऽराज्य॑म् ॥

हे इन्द्र यत् यदा वृत्रम् अशनिम् च तदीयं वज्रं च, वज्रोपमं तन्मायया सृष्टमायुधं च तव त्वदीयेन वज्रेण विश्रुतेनायुधेन समयोधयः सम्यक् प्राहार्षीः, तदा अहिम् वृत्रं जिघांसतः हन्तुमिच्छतः ते तव शवः ज्वलितं बलं दिवि द्युलोके बद्बधे बद्धं स्थैर्येणावस्थितं बभूव, निष्प्रकम्पं ध्रुवमतिष्ठदित्यर्थः। शिष्टं पूर्ववत् ॥ बद्बधे—बध बन्धने, कर्मणि लिट्, व्यत्ययेन हलादिशेषाभावः ॥

चतुर्दशीमृचमाह—

अ॒भि॒ष्टने॑ ते॑ अद्रिवो॒ यत्स्था जग॑च्च रेजते ।
त्वष्टा॑ चि॒त्तव॑ म॒न्यव॒ इन्द्र॑ वेवि॒ज्यते॑ भि॒यार्च॒न्ननु॑ स्व॒राज्य॑म् ॥१४॥

अ॒भि॒ऽस्तने ते॒ अ॒द्रि॒ऽवः॒ यत् स्थाः जग॑त् च॒ रे॒ज॒ते॒ त्वष्टा॑ चि॒त् तव॑ म॒न्यवे॑ इन्द्र॑ वे॒वि॒ज्यते॑ भि॒या अर्च॑न् अनु॑ स्व॒ऽराज्य॑म् ॥

हे अद्रिवः, वज्रवन् ते तव अभिष्टने सिंहगर्जितनादे वर्तमाने, स्थाः स्थावरं जगत् च यत् चराचरमुभयमपि रेजते कम्पते। हे इन्द्र त्वष्टा चित् विश्वकर्मापि वज्रायुधस्यापि निर्माता सोऽपि तव मन्यवे कोपात् भिया भीत्या वेविज्यते अतितरां कम्पते। शिष्टं पूर्ववत् ॥ स्थाः—तिष्ठतेः क्विप्। वेविज्यते—ओविजी भयचलनयोः, अस्मात् क्रियासमभिहारे यङ्, सन्यङोरिति द्विर्भावः ॥

पञ्चदशीमृचमाह—

न॒हि नु याद॑धी॒मसीन्द्रं॒ को वी॒र्या॑ प॒रः ।
तस्मि॑न्नृ॒म्णमु॒त क्रतुं॑ दे॒वा ओजां॑सि॒ सन्द॑धु॒रर्च॒न्ननु॑ स्व॒राज्य॑म् ॥१५॥

न॒हि नु यात् अ॒धि॒ऽइ॒मसि॒ इन्द्र॑म् कः वी॒र्या॑ प॒रः तस्मि॑न् नृ॒म्णम्

उत क्रतुम् देवाः ओजांसि सम् दधुः अर्चन् अनु स्वऽराज्यम् ॥

यात् यान्तं सर्वत्र गच्छन्तं व्यापकं इन्द्रम् नहि नु अधीमसि नह्यवगच्छामः। तत्र हेतुमाह! वीर्या वीर्येण पराक्रमेण परः परस्तादतिदूरे (परस् इति सकारान्तमव्ययम्) वर्तमानं तं कः को वा जानीयात्। अथ च तस्मिन् इन्द्रे देवाः सर्वेऽपि नृम्णम् नेतृत्वबलं उत क्रतुम् क्रियादक्षमध्यवसायबलं च ओजांसि वीर्यबलानि च सन्दधुः स्थापयामासुः। शिष्टं समानम् ॥ यात्—या प्रापणे, अस्माल्लटः शतृ, द्वितीयाया लुक्। अधीमसि—इण् गतौ, इदन्तो मसिः। वीर्या—सुपां सुलुगिति तृतीयाया आकारः ॥

षोडशीमृचमाह—

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत।

तस्मिन्ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् ॥१६॥

याम् अथर्वा मनुः पिता दध्यङ् धियम् अत्नत तस्मिन् ब्रह्माणि पूर्वऽथा इन्द्रे उक्था सम् अग्मत अर्चन् अनु स्वऽराज्यम् ॥

अथर्वा एतत्संज्ञक आङ्गिरस ऋषिः येनादौ पुष्करादग्निर्निर्मथ्य सम्पादित इत्यन्यो मन्त्रवर्णो वर्णयति। अस्य रहस्यं तत्त्वं पुरस्तादन्यत्र विचार्यते। पिता सर्वासां प्रजानां पूर्वः पितृभूतः मनुः, दध्यङ् अयमाथर्वणः पूर्वः, अस्यापि तत्त्वं पुरस्ताद्विचार्यते। एते पूर्वे याम् धियम् धारणात्मिकां इन्द्राराधनविषयिकां याज्ञिकीं प्रज्ञां अत्नत अतन्वत विस्तारितवन्तः आपन्नविस्तारामकुर्वन्नित्यर्थः। तया धिया, तयेति अध्याहार्यं यत्तदोर्नित्यसंबन्धात्। तस्मिन् इन्द्रे दिवस्पतौ ब्रह्माणि अस्माकं मन्त्रात्मकस्तोत्राणि उक्था उक्थानि शस्त्ररूपस्तोत्राणि सर्वाणि पूर्वथा पूर्वमिव पूर्वेषां ऋषीणां ब्रह्माणीव अधुनापि समग्मत समगच्छन्त, इन्द्रेण सर्वाणि ब्रह्माणि उक्थानि च सङ्गच्छन्ते। अर्चन्ननु स्वराज्यम् पूर्ववत् ॥ अत्नत—तनु विस्तारे, विकरणस्य लुक्, उपधालोपश्छन्दसि। पूर्वथा—इवार्थे पूर्वशब्दात् थाल्प्रत्ययः। समग्मत—समो गम्यृच्छीत्यात्मनेपदम्, लुङ्, गमहनेत्यादिना उपधालोपः ॥

इति प्रथमस्य पञ्चम एकत्रिंशो वर्गः

प्रथमाष्टके पञ्चमोऽध्यायः समाप्तः

अथ प्रथमाष्टके षष्ठोऽध्याय आरभ्यते। प्रथमे मण्डले त्रयोदशानुवाके सप्त सूक्तानि व्याख्यातानि। इन्द्रो मदायेति नवर्चमष्टमं सूक्तम्। रहूगणपुत्रस्य गोतमस्यार्षं पङ्क्तिच्छन्दस्कम्, इन्द्रो देवता॥

तत्र प्रथमामृचमाह—

इन्द्रो॒ मदा॑य वावृधे॒ शव॑से वृत्र॒हा नृभिः॑।
तमिन्म॒हत्स्वा॒जिषू॒तेमर्भे॑ हवामहे॒ स वाजे॑षु॒ प्र नो॑ऽविषत्॥१॥

इन्द्रः॑ मदा॑य व॒वृ॒धे॒ शव॑से वृ॒त्र॒ऽहा नृ॒ऽभिः॑ तम् इत् म॒हत्ऽसु॒ आ॒जिषु॑ उ॒त ई॒म् अर्भे॑ ह॒वा॒म॒हे॒ स वाजे॑षु प्र नः॒ अ॒वि॒षत्॥

वृत्रहा आवरकस्यासुरस्य वृत्रस्य हन्ता इन्द्रः, मदाय हर्षाय शवसे ज्वलते बलाय च नृभिः बलिभिः पुरुषैः ववृधे वर्धितः। बलाढ्यैः यजमानैः अर्प्यमाणैः सोमैः गीयमानैः स्तोत्रैः इन्द्रो वर्धते, यजमाने देवतायाः प्रवेशः प्रवर्धनं च रहस्यार्थपक्षे बोद्धव्ये। तम् इत् तमेव इन्द्रं महत्सु प्रभूतेषु आजिषु सङ्ग्रामेषु हवामहे आह्वयामः। यात्रात्मको यज्ञोऽध्वर इति भूमिकायां सूक्तव्याख्यानेषु च प्रागवोचाम, स्रुवः प्रस्थाय यावद्दिवं उत्तमस्थानं ज्योतिरुद्दिश्य यज्ञप्रयाणे चलति सति, अध्वनि विघ्नकराः राक्षसा असुरा अन्ये च तद्राजानुचराः तमसस्पुत्राः प्रत्यवतिष्ठन्ते। तैः सह संग्रामे यजमानस्य साहाय्यं देवेभ्यो लब्धव्यं, नालं तत्र पुरुषकारः। इदमन्तर्यागे संग्रामरहस्यम्। उत अपि च ईम् एनं अर्भे अल्पे संग्रामेऽपि 'हवामहे', महत्यल्पे वा कार्ये इन्द्र एव शरणं, तमेवाह्वयामः। सः स चाहूतः वाजेषु आजिषु जित्वा वैरिभ्यः प्राप्तव्यासु समृद्धिषु दिव्यासु निमित्तभूतासु नः अस्मान् प्राविषत् प्रावतु प्रकर्षेण वर्धयतु॥ ववृधे—वृधेः कर्मणि लिट्, संहितायामभ्यासस्य दीर्घत्वम्। अविषत्—अवतेः लेटि अडागमः, सिप् बहुलमिति सिप्॥

द्वितीयामृचमाह—

असि॒ हि वी॑र॒ सेन्यो॒ऽसि॒ भूरि॑ पराद॒दिः।
असि॑ द॒भ्रस्य॑ चिद्वृ॒धो यज॑मानाय शिक्षसि सुन्व॒ते भूरि॑ ते॒ वसु॑॥२॥

असि॑ हि वी॒र॒ सेन्यः॑ असि॑ भूरि॑ प॒रा॒ऽद॒दिः असि॑ द॒भ्रस्य॑ चि॒त् वृ॒धः

यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥

हे वीर, विक्रान्त पराक्रमशालिन्, सेन्योऽसि त्वं सेनार्हो भवसि, एकोऽपि सैन्यभूत इत्यर्थः। हि यस्मादेवं तस्मात् यज्ञवैरिभ्योऽपहृत्य जितं भूरि प्रभूतं दिव्यं धनं परादृदिः असि परादाता तेषां पराङ्मुखं यथा तथा आदातासि। दभ्रस्य चित् अल्पस्यापि त्वामाश्रितस्य वृधः असि त्वं वर्धयिता भवसि। यजमानाय यजनं कुर्वते सुन्वते सोमाभिषवं कुर्वते भक्ताय शिक्षसि ददासि अपेक्षितं आवश्यकं च। यतः ते तव वसु धनं भूरि प्रभूतम् ॥ परादृदिः— आदृगमहनजन इति किप्रत्ययः। वृधः—वृधेरन्तर्भावितण्यर्थात् इगुपधलक्षणः कप्रत्ययः ॥

तृतीयामृचमाह—

यदुदीरत आजयो धृष्णवे धीयते धना।
युक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥३॥
यत् उत्ऽईरते आजयः धृष्णवे धीयते धना युक्ष्व मदऽच्युता हरी इति
कम् हनः कम् वसौ दधः अस्मान् इन्द्र वसौ दधः ॥

यत् यदा आजयः संग्रामाः उदीरते उद्गच्छन्ति, प्रारभन्ते, तदा धृष्णवे यो धर्षयिता तस्मै शत्रुजिते धना धनानि, धनं, वचनव्यत्ययः, धीयते निहितं भवति, जेतृवशंवदं भवति जितस्य धनमित्यर्थः। अत्र जयापजयये विधाता त्वमेवेति प्राह। हे इन्द्र, त्वं तथाविधेषु संग्रामेषु प्रवृत्तेषु मदच्युता शत्रुदर्पस्य च्यावयितारौ हरी तवाश्वौ युक्ष्व योजय, योजयसीत्यर्थः। इन्द्राश्वयोः स्वरूपं सङ्केतात्मतया स्थितं प्राग्विचारितम् (१.१६. १-२, १.६.२, १.७.२, १.२०.२)। तथा योजनात्परं कम् हनः कञ्चिदयुक्तपक्षपातिनं ध्वंसयसीत्यर्थः कम् कंचन युक्तं त्वदधीनं वसौ धने दधः स्थापयसि। त्वदायत्तौ जयपराजयौ। हे इन्द्र, अस्मान् त्वदेकशरणान् वसौ त्वदीये धने दधः स्थापय ॥ उदीरते—ईर गतौ, अदादिः। धना—सुपां सुलुगिति डादेशः। युक्ष्व—युजिर् योगे, अन्तर्भावितण्यर्थः। हनः—हन्तेर्लेटि सिपि अडागमः। दधः—दध धारणे, लेटि व्यत्ययेन परस्मैपदम् ॥

चतुर्थीमृचमाह—

क्रत्वा महाँ अनुष्वधं भीम आ वावृधे शवः।
श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसम् ॥४॥

क्रत्वा महान् अनुऽस्वधम् भीमः आ ववृधे शवः श्रिये ऋष्वः उपाकयोः नि शिप्री हरिऽवान् दधे हस्तयोः वज्रम् आयसम् ॥

क्रत्वा क्रतुना प्राज्ञेन कर्मणा महान् सर्वाधिकः भीमः भयंकरो वैरिवर्गस्य, इन्द्रः अनुस्वधम् स्वधया, विभक्त्यर्थे अव्ययीभावः, स्वधा स्वधारणसामर्थ्यं, स्वधर्मः स्वभाव इति यावत्, तेन सामर्थ्येन शवः स्वीयं ज्वलद्बलं आववृधे आवर्धयत् स्वाभिमुखं प्रवर्धितवान्। अथ ऋष्वः उत्कृष्टः महन्नामैतत्, शिप्री शिप्रे हनू नासिके वा, मुखोपलक्षणमेतत् दृढाध्यवसाय-बलद्योतके शिप्रे हनू तद्युक्तः हरिवान् अश्वोपेतः उपाकयोः समीपवर्तिनोः हस्तयोः बाह्वोः आयसम् अयोमयं वज्रम्। आयुधं श्रिये संपदे नि दधे निदधाति स्थापयति, युद्धे शत्रुजयेन संपल्लाभाय सर्वं सन्नाहं करोति ॥ क्रत्वा—छन्दसि नाभावस्य विकल्पः ॥

पञ्चमीमृचमाह—

आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि।

न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षिथ ॥५॥

आ पप्रौ पार्थिवम् रजः बद्बधे रोचना दिवि न त्वाऽवान् इन्द्र कः चन न जातः न जनिष्यते अति विश्वम् ववक्षिथ ॥

इन्द्रः स्वविभवेन पार्थिवम् पृथिव्याः संबन्धि सर्वं रजः अन्तरिक्षं च आ पप्रौ आपूरयति। दिवि द्युलोके रोचना रोचमानानि ज्योतींषि बद्बधे बबन्ध स्थापितवान्। अतः हे इन्द्र, त्वावान् त्वत्सदृशः कश्चन न न कोऽप्यस्ति न जातः न कोऽप्युत्पन्नोऽस्ति, न जनिष्यते इतः परं उत्पत्स्य-मानोऽपि नास्ति। तादृशस्त्वं विश्वम् सर्वं जगत् अति ववक्षिथ अत्यन्तं वोढुमिच्छसि, सर्व-जगन्निर्वाही त्वमित्यर्थः॥ पप्रौ—प्रा पूरणे, लिट्। बद्बधे—बध बन्धने, गतम्। त्वावान्—छन्दसि वतुप् सादृश्ये। ववक्षिथ—वह प्रापणे, अस्मादिच्छासनि इत्वस्य छन्दसि विकल्पितत्वात् अभावः॥

इति प्रथमस्य षष्ठे प्रथमो वर्गः

षष्ठीमृचमाह—

यो अर्यो मर्तभोजनं पराददाति दाशुषे।

इन्द्रो अस्मभ्यं शिक्षतु वि भजा भूरि ते वसु भक्षीय तव राधसः ॥६॥

यः अर्यः मर्तऽभोजनम् पराऽददाति दाशुषे इन्द्रः अस्मभ्यं शिक्षतु वि भज भूरि ते वसु भक्षीय तव राधसः ॥

यः अर्यः स्वामी य इन्द्रः मर्तभोजनम् मर्त्यैरुपभोज्यं, दिव्यमपि मनुष्योपभोगक्षमं धनं दाशुषे दत्तवते यजमानाय परादादाति यज्ञविरोधिभ्योऽपहृत्य तेषां पराङ्मुखं यथा भवति तथा प्रयच्छति, स इन्द्रः अस्मभ्यम् शिक्षतु ददातु अस्मदर्हं धनम्। शिष्टं प्रत्यक्षकृतम्। हे इन्द्र, विभज विभागं कुरु यद्यपि सर्वं धनं त्वदीयमेव, तथापि मानुषोपभोगक्षमो भागः दीयतां नः। ते तव वसु धनं भूरि अत्यधिकं भवति। तव राधसः दिव्यस्य धनस्य एकदेशं कमप्यंशं भक्षीय भजेय लभेयेत्यर्थः॥ दाशुषे—दाश्टृ दाने। भक्षीय—भज सेवायाम्, प्रार्थनायां लिङ्, आर्धधातुकत्वात् छन्दसि शबभावः सलोपाभावश्च ॥

सप्तमीमृचमाह—

मदेमदे हि नो ददिर्यूथा गवामृजुक्रतुः।
सं गृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आ भर ॥७॥

मदेऽमदे हि नः ददिः यूथा गवाम् ऋजुऽक्रतुः सम् गृभाय पुरु शता उभयाहस्त्या वसु शिशीहि रायः आ भर ॥

मदेऽमदे पुनः पुनः हर्षे प्रवर्तमाने सति सोमस्वीकरणाद्धेतोः, ऋजुक्रतुः ऋजुकर्मा अकुटिलक्रियासम्पन्नः स इन्द्रः नः अस्मभ्यं गवाम् यूथा गोयूथानि चित्किरणसमूहानित्यर्थः। ददिः हि तेषां दाता खलु। हे इन्द्र, पुरू पुरूणि बहूनि शता शतानि वसु वसूनि उभयाहस्त्या उभाभ्यां हस्ताभ्यां संगृभाय सम्यक् गृहाण अस्मभ्यं दातुम्। शिशीहि तीक्ष्णीकुरु "निशितबुद्धियुक्तान् कुरु" इति साधूक्तं सायणीये। गवां चिद्रश्मिरूपत्वात, वसुनश्च दिव्यसत्त्वरूपत्वात्, तस्य सर्वस्यादातुं धारयितुं च निशिता बुद्धिरुपयुक्ता आवश्यकी च। साधारणगोधनादेरादानाय निशिता बुद्धिर्नावश्यकी, लोभो दारिद्र्यं वा अलम्। रायः धनानि आभर आहर अस्मदर्थम्॥

ददिः—डुदाञ् दाने, किप्रत्ययः। यूथा—शेर्लोपश्छन्दसि। गृभाय—ग्रह उपादाने, लोट्, श्नाप्रत्ययस्य शायजादेशः छन्दसि, हृग्रहोर्भ इति भत्वम्। उभयाहस्त्या—उभयहस्तशब्दात् तृतीयाद्विवचनस्य सुपां सुलुगिति ड्यादेशः, पूर्वपदस्य दीर्घत्वम्। शिशीहि—शो तनूकरणे, विकरणस्य श्लुः॥

अष्टमीमृचमाह—

मादयस्व सुते सचा शवसे शूर राधसे।
विद्मा हि त्वा पुरूवसुमुप कामान्त्ससृज्महेऽथा नोऽविता भव ॥८॥
मादयस्व सुते सचा शवसे शूर राधसे विद्म हि त्वा पुरुऽवसुम् उप कामान् ससृज्महे अथ नः अविता भव ॥

हे शूर शौर्योपेत इन्द्र, सुते सोमे अभिषुते सति सचा सह, अस्माभिः संगतः सन् मादयस्व तर्पय, स्वयं मोदस्व हर्षय च नः। किमर्थम्? शवसे बलाय राधसे धनाय च, सोमस्वीकारेण इन्द्रस्तुष्टः स्वीयं बलं धनं च प्रकटयति। त्वा त्वाम् पुरुवसुम् बहुधनशालिनं विद्म हि जानीमः खलु वयम्। तस्मात् कामान् अस्मदीयान् कामान् उप ससृज्महे त्वया खल्वेकीकुर्मः, त्वदेकायनाः वयमस्मत्कामान् त्वदधीनान् कुर्मः। अथ ततः परं नः अस्माकं अविता भव रक्षिता भव त्वम्॥ मादयस्व—मद तृप्तियोगे, चुरादिरात्मनेपदी। ससृज्महे—सृज विसर्गे, विकरणस्य श्लुः॥

नवमीमृचमाह—

एते त इन्द्र जन्तवो विश्वं पुष्यन्ति वार्यम्।
अन्तर्हि ख्यो जनानामर्यो वेदो अदाशुषां तेषां नो वेद आ भर ॥९॥
एते ते इन्द्र जन्तवः विश्वम् पुष्यन्ति वार्यम् अन्तः हि ख्यः जनानाम् अर्यः वेदः अदाशुषाम् तेषाम् नः वेदः आ भर ॥

हे इन्द्र, ते तव एते जन्तवः इमे जन्मिनः यजमानाः विश्वम् सर्वं (उद्देश्यम्) वार्यम् वरणीयं (विधेयम्) संभजनीयं तव भोग्यं यथा भवति तथा पुष्यन्ति वर्धयन्ति। अर्यः स्वामी, ईशः सर्वेषां त्वं जनानाम् सर्वेषां जन्मिनां अन्तः अन्तरं ख्यो हि पश्यसि हि जानास्येव। अतः अदाशुषाम् अदातॄणां, यजनमकुर्वतां तेषाम् अदेव्यानां देवस्वं देवेभ्योऽददतां वेदः ज्ञानं कीदृशमिति वेत्सि। नः अस्मभ्यं वेदः ज्ञानं आभर आहर, देहि। स्थूलपक्षे वेदो धनं भवति। अस्मत्पक्षेऽपि धनार्थेऽत्र नानुपपत्तिः। किं तु, तद्धनं न लौकिकं मानुषं धनम्, यागशत्रुगतं दिव्यं धनम् तत्रापि, देवेभ्योऽर्पणायैव याच्यते, सर्वस्यापि देवस्वत्वात्, 'कामान् उपससृज्महे'

इति हि पूर्वमुक्तम्। तस्मात् न कामचोदनया शत्रुधनप्रार्थना ॥ ख्यः—ख्या प्रकथने, दर्शनार्थेऽपि प्रसिद्धः, वर्तमाने छान्दसो लुङ्, अडभावः ॥

इति प्रथमस्य षष्ठे द्वितीयो वर्गः

'उपो ष्वि'ति षडृचं नवमं सूक्तं गोतमस्यार्षं ऐन्द्रम्। पङ्क्तिश्छन्दः पञ्चानाम्, अन्त्यायाः जगती ॥

तत्र प्रथमामृचमाह—

उपो षु शृणुही गिरो मघवन्मातथा इव ।
यदा नः सूनृतावतः कर आदर्थयास इद्योजा न्विन्द्र ते हरी ॥१॥

उपोऽइति सु शृणुहि गिरः मघऽवन् मा अतथाःऽइव यदा नः सूनृताऽवतः करः आत् अर्थयासे इत् योज नु इन्द्र ते हरी इति ॥

हे मघवन् धनवन्निन्द्र, गिरः स्तुतिवाचः अस्मदीयाः उपो सु शृणुहि उपगत्य सम्यक् शृणु। अतथाः इव अन्यथाभूतः मा मा भूः, पूर्वविध एव अस्मासु प्रसन्नो वर्तस्व। अपि च नः अस्मान् सूनृतावतः शुभसत्यवाग्युक्तान् यदा करः यदा करोषि आत् अनन्तरमेव अर्थयासे इत् याचस एव अस्मदीयान्यर्पणानि स्तोत्राणि च प्रतीक्ष्य स्वीकुरुषे। शुभसत्यवागात्मको मन्त्रवर्णः देवतानुग्रहादृषौ प्रादुर्भवति, इन्द्रादीनां प्रार्थनीयश्च। तस्मात् हे इन्द्र, ते तव हरी अश्वौ नु क्षिप्रं योज रथे योजय॥ अतथाःऽइव—अत्र सायणः "तथेव आचरति तथाति, सर्वप्रातिपदिकेभ्य इति क्विप्, तथातेरप्रत्ययः, न तथाः इव अतथा इव"। करः—डुकृञ् करणे, लुङि च्लेरङादेशः। अर्थयासे—अर्थ याच्ञायां, चुरादिरात्मनेपदी, लेट्याडागमः। योज—युजिर् योगे, ण्यन्तात् लोटि णिलोपः छन्दसि ॥

द्वितीयामृचमाह—

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥२॥

अक्षन् अमीमदन्त हि अव प्रियाः अधूषत अस्तोषत स्वऽभानवः विप्राः नविष्ठया मती योज नु इन्द्र ते हरी इति ॥

हे इन्द्र, प्रियाः देवानां प्रीतिप्रदाः ऋषयः अक्षन् भुक्तवन्तः, त्वया प्रसन्नेन अनुगृहीतं दिव्यमन्नं स्वीकृतवन्त इत्यर्थः, अथ अमीमदन्त हि तृप्ताश्चाभवन् हि। तृप्ताश्च ते अवाधूषत अकम्पयन्, हर्षोद्रेकात् परिष्पन्दयुक्तात्मान आसन्। अथ च ते स्वभानवः स्वे स्वीया भानवः रश्मयः येषां ते स्वप्रकाशाः (इदं दिव्यान्नभोजनं इन्द्रदत्तं, न साधारणान्नभोजनं इति बोद्धुं इदमेकं विप्रविशेषणं अलम्) विप्राः विपश्चितः नविष्ठया नवितृतमया मती मत्या अस्तोषत अस्तुवन्। अन्यत् पूर्ववत्॥ अक्षन्—अद भक्षणे, लुङि घस्लादेशः, मन्त्रे घसेत्यादिना च्लेर्लुक्, गमहनेत्यादिनोपधालोपः। अमीमदन्त—मद तृप्तियोगे चुरादिरात्मनेपदी। अधूषत—धूञ् कम्पने, लुङ्। नविष्ठया—णु स्तुतौ, ततस्तृच्, तुरछन्दसीति इष्ठन्। मती—सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घत्वम्॥

तृतीयामृचमाह—

सुसन्दृशं त्वा वयं मघवन्वन्दिषीमहि।
प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरी ॥३॥

सुऽसन्दृशम् त्वा वयम् मघऽवन् वन्दिषीमहि प्र नूनम् पूर्णऽवन्धुरः स्तुतः याहि वशान् अनु योज नु इन्द्र ते हरी इति॥

हे मघवन् इन्द्र, सुसंदृशम् सुष्ठु सर्वस्य द्रष्टारं त्वा त्वाम् वयम् वन्दिषीमहि स्तुतवन्तो भूयास्म। स्तुतः तथाऽस्माभिः स्तुतस्त्वं पूर्णवन्धुरः संपत्पूर्णेन रथेन युक्तो भूत्वा वशान् अनु त्वां कामयमानान् ऋषीनन्यान्वा भक्ताननुलक्ष्य नूनं अवश्यम् प्र याहि प्रस्थानं कुरु। अस्मादृश-स्तुतिभिरभिवर्धितज्योतिर्बलादिसंपत्कः सन् अन्यान् त्वत्कामाननुग्रहीतुं प्रभवसीत्यर्थः। अन्यत् पूर्ववत्॥ वन्दिषीमहि—वदि अभिवादनस्तुत्योः, आशीर्लिङ्॥

चतुर्थीमृचमाह—

स घा तं वृषणं रथमधि तिष्ठाति गोविदम्।
यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥४॥

सः घ तम् वृषणम् रथम् अधि तिष्ठाति गोऽविदम् यः पात्रम् हारिऽयोजनम् पूर्णम् इन्द्र चिकेतति योज नु इन्द्र ते हरी इति॥

रथो हरी चेन्द्रस्य माधुच्छन्दसे युञ्जन्तीति सूक्ते विचारिताः । "रथो गतिविशेष" इत्यारभ्य "इन्द्राधिष्ठानभूते रथे युक्तौ भवतः । अत एव बहुषु मन्त्रवर्णेषु ब्रह्मयुजौ हरी इन्द्रस्य गीतौ" इत्यन्तैर्वाक्यैः मन्त्रवर्णोदाहरणपूर्वकं इन्द्राश्वस्वरूपं उपपादितम् । तत्सर्वमवधेयमत्र रथाश्वप्रसङ्गात् । विशेषतो द्रष्टव्यानि (१.५.४, १०.३, १६.२, २०.२) आसां ऋचां व्याख्यानानि इन्द्राश्वस्वरूपं विवृण्वन्ति ॥ स घ स खल्विन्द्रः वृषणम् वर्षितारं अभीष्टतेजोबलादेः गोविदम् गवां चिद्रश्मिसमूहानां लम्भयितारं तम् तथाविधं रथम् गतिविशेषसाधनं स्थिरासनस्येन्द्रस्य अधितिष्ठाति अधितिष्ठतु अधिरूढो भवतु । हे इन्द्र, यः यो रथः हारियोजनम् हारि कान्तं योजनं युक्ततया ऐन्द्रविभवानां संमिश्रणं यस्मिन् पात्रे तत् पूर्णम् अनूनं पात्रम् ऐन्द्रस्य ऐश्वर्यस्य भोग्यस्य निधानभूतं आधारपात्रं चिकेतति ज्ञापयति, तं रथमधितिष्ठातीति पूर्वेणान्वयः । अधिष्ठाय क्षिप्रं तवाश्वौ योजय । इन्द्ररथः ऐन्द्रस्य विभवजालस्य निधानं आवहन् द्रष्टॄन् इतरान् ज्ञापयति, रथदर्शनमात्रेण ऐन्द्रविभवनिधानपूर्णं पात्रमित आगतं भवतीति जायते ज्ञानमृषेर्द्रष्टुः । "हारियोजनम्" क्वचिदेव प्रयुक्तोऽयं शब्द ऋक्संहितायाम् । विविधानां इन्द्रस्यैश्वर्याणां संयोजने तेषां साङ्गत्यं इतरेतराविरोधेन निष्पन्नं अत एव 'हारि' तत् कमनीयं (हर्यतिः कान्तिकर्मा) । सायणीयाशयस्तु इन्द्ररथो यजमानस्य गोलाभायागच्छति, तस्मिन् रथे धानामिश्रितं सोमेन पूर्णं पात्रं वर्तते । हारियोजनमिति संज्ञा उक्तलक्षणस्य भोज्यस्येति ॥

अत्रेदं वक्तव्यम् । 'अक्षन्नमीमदन्त' इत्यत्र–इन्द्रदत्तमन्नं भुक्तवन्तो यजमानाः संतृप्तिभरेण शरीराण्यकम्पयन् 'अधूषत, अस्तोषत' किल सायणव्याख्यानुसारेण । तदनुसारेण पुनरिन्द्रो रथमारुह्य ब्राह्मणानां समाराधनाय 'हारियोजनं पात्रं' आहरति इति कर्मठव्याख्याघोरणी । स्थूलधियामपि दुर्ग्रहेयं स्थूलता ॥ घ–ऋचि तु-नु-घेति दीर्घः । चिकेतति–कित ज्ञाने, लेट्याडागमः ॥

पञ्चमीमृचमाह—

युक्तस्ते अस्तु दक्षिण उत सव्यः शतक्रतो ।
तेन जायामुप प्रियां मन्दानो याह्यन्धसो योजा न्विन्द्र ते हरी ॥५॥
युक्तः ते अस्तु दक्षिणः उत सव्यः शतक्रतो इति शतऽक्रतो तेन जायाम् उप प्रियाम् मन्दानः याहि अन्धसः योज नु इन्द्र ते हरी इति ॥

हे शतक्रतो बहुकर्मकारिन्निन्द्र, ते तव दक्षिणः दक्षिणपक्षः युक्तः अस्तु रथाश्वयोगवान् भवतु। उत अपि च सव्यः वामभागोऽपि तथा रथाश्वयुक्तो भवतु, प्रयाणाय सन्नद्धो भवेत्यर्थः। तेन रथेन अन्धसः सोमस्य पानेन मन्दानः मोदमानः सन् प्रियाम् प्रीणयित्रीं जायां उप याहि उपेत्य गच्छ। इन्द्रस्य शक्तिरिन्द्राणीति प्रसिद्धा वेदे। तथा वरुणस्य वरुणानी अग्नेरग्नायीति च। एताः स्त्रियः पृथगात्मतया निर्दिष्टाः क्वचित् (१.२२.१२), सर्वत्रेमाः स्वभर्तृकार्यनिर्वाहिण्य इति बोध्यम्। अत्र स्वशक्त्या रन्तुं युक्तो भवेतीन्द्रमाह ऋषिः। अन्यत् पूर्ववत्॥ मन्दानः— मदि स्तुतिमोदेत्यादिषु, लिटः कानच्। अन्धसः—अद भक्षणे, अदेर्नुम् धश्चेत्यसुन्॥

षष्ठीमृचमाह—

युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः।
उत्त्वा सुतासो रभसा अमन्दिषुः पूषण्वान्वज्रिन्त्समु पत्न्यामदः॥६॥
युनज्मि ते ब्रह्मणा केशिना हरी इति उप प्र याहि दधिषे गभस्त्योः
उत् त्वा सुतासः रभसाः अमन्दिषुः पूषणऽवान् वज्रिन् सम् ऊम् इति पत्न्या अमदः॥

हे इन्द्र, केशिना केशवन्तौ शिखावन्तौ ज्वलितौ, अन्यत्र स्थूलकृत्यापेक्षया एवं व्याख्यातम्—"केशिनौ केशैः मशकमक्षिकादयः तामस्यः शक्तयो विधूयन्ते" इति। अत्रापि ज्वलितैस्तामस्यश्शक्तयो विधूयन्त इति उपपद्यते। ते हरी तवाश्वौ ब्रह्मणा मन्त्रेण हार्दवागात्मना स्तोत्रेण युनज्मि योजयामि, ऋषिभिः मन्त्रवाचा रथाश्वयोगो निरुह्यत इति मन्त्रवर्णाः प्रथयन्ति। ते च प्रागुदाहृताः, तथा आर्भवसूक्ते (१.२०.२) "वचोयुजा ततक्षुर्मनसा हरी" इत्यत्र व्याख्याऽवधेया। गभस्त्योः बाह्वोः दधिषे धारयस्व, अत्र कर्मपदं नोक्तं स्थूलार्थस्यावकाशाय। अतः "अश्वबन्धकान् रश्मीन्" इति सायणः ज्योतिर्मयस्येन्द्रस्य बाहू अपि तैजसौ, गभस्तिः रश्मिवाचकोऽपि भवति वेदे भाषायामिव। उप प्र याहि उपेत्य प्रस्थानं कुरु तव प्रियां प्रति। त्वा त्वाम् सुतासः अभिषुताः सोमाः रभसाः वेगेन तीव्रा इत्यर्थः उत् अमन्दिषुः मदयुक्तमकार्षुः। हे वज्रिन् वज्रवन्निन्द्र, पूषण्वान् पूषा पुष्टिः पुष्ट्या सोमस्वीकारेण जनितया युक्तः सन् पत्न्या तव प्रियया शच्या शक्त्या सह सम् उ अमदः सम्यगेव तृप्तो भव॥ रभसाः—अर्श-आदित्वादच्। अमन्दिषुः—व्यत्ययेन परस्मैपदम्। पूषण्वान्—पूषात्र भावसाधनं, पुष पुष्टौ,

श्वन्नुक्षन्पूषन् इति निपात्यते, तद्वान् । अमदः—मदी हर्षे, लङ् प्रार्थनायां छन्दसि, श्यनि प्राप्ते शप् ॥

इति प्रथमस्य षष्ठे तृतीयो वर्गः

'अश्वावती'ति षड्ऋचं दशमं सूक्तम्, गोतमस्यार्षं ऐन्द्रं जागतम् ॥

तत्र प्रथमामृचमाह—

**अश्वा॑वति प्रथ॒मो गोषु॑ गच्छति सुप्रा॒वीरि॑न्द्र॒ मर्त्य॒स्तवो॒तिभिः॑ ।**
**तमित्पृ॑णक्षि॒ वसु॑ना॒ भवी॑यसा॒ सिन्धु॑मापो॒ यथा॒भितो॒ विचे॑तसः ॥१॥**

**अश्व॑ऽवति प्र॒थ॒मः गोषु॑ ग॒च्छ॒ति॒ सु॒प्र॒ऽअ॒वीः इ॒न्द्र॒ मर्त्यः॑ तव॑ ऊ॒तिऽभिः॑**
**तम् इत् पृ॒ण॒क्षि॒ वसु॑ना भवी॑यसा सिन्धु॑म् आपः॑ यथा॑ अ॒भितः॑ विऽचे॑तसः ॥**

हे इन्द्र, यो मर्त्यः मनुष्यः तव ऊतिभिः त्वदीयैर्वर्धनैः सुप्रावीः सुष्ठु प्रवर्धितो भवति स अश्वावति बह्वश्वयुक्ते स्थाने प्राणबलभूयिष्ठे पदे वर्तमानः सन् गोषु प्रथमो गच्छति चिद्रश्मि-संपन्नानामग्रेसरो भवतीत्यर्थः । अश्वः प्राणबलक्रियावेगभोगादिकं सङ्केतयति, गौः ज्ञान-किरणम् । यस्य शरीरे प्राणबलसमृद्धिः तस्य विशिष्टा योग्यता ज्ञानकिरणादानाय । तमित् तमेव क्रियाबलज्ञानबलसम्पन्नं पुरुषं भवीयसा बहुतरेण (बहोर्भूभावः) वसुना धनेन दिव्येन पृणक्षि पूरयसि, संपृक्तं करोषीति सायणः, तादृशे पुरुषे त्वदीयधनवृष्टिं कुरुषे । तत्र दृष्टान्तः—यथा आपः अभितः सर्वतः सिन्धुम् नदीं पूरयन्ति तद्वत् । कीदृश्य आपः? विचेतसः विशिष्ट-ज्ञानहेतुभूता इति सायणः । अत्र सङ्केतार्थो दृष्टान्ते नोपपद्यते, अयं साङ्केतिकश्चेत् अप्छब्द-प्रयोगः संमतः स्यादस्माकमयमर्थः । कथं भौतिकोदकानां ज्ञानहेतुभूतत्वमुच्यते? विस्पष्टं ज्ञाताः, प्रत्यक्षं दृश्यमाना आपः इति कस्यचिदूहः । कथं कर्मण्यर्थे शब्दरूपनिष्पत्तिरिति कष्टम् । अत्रैके नव्याः 'विचेतसः' ज्ञानशून्याः विगतचेतस्त्वात् इति व्याचक्षते । तर्हि यथा कथंचित् समर्थयितव्यमेवम्—यथा 'विचेतसः' जडा अपि सिंधुमभितः पूरयन्ति, तथा अजडानि प्रज्ञाविशेषशालीनि ऐन्द्राणि वसूनि इन्द्रः उपयुज्य तैर्मर्त्यं पृणक्ति इति । एवं 'विचेतसः' इति विशेषणस्य प्रयोजनमुन्नेयमित्यस्माकमूहमात्रम् ॥ अश्वावति—मन्त्रे सोमाश्वेति मतौ दीर्घत्वम् । सुप्रावीः—अवितॄस्तृतन्त्रिभ्य ईरिति अवतेरीकारप्रत्ययः । भवीयसा—बहु-शब्दादीयसुनि बहुशब्दस्य भूभावः, ईयसुन ईकारलोपाभावः छान्दसः ॥

द्वितीयामृचमाह—

आपो न देवीरुप यन्ति होत्रियमवः पश्यन्ति विततं यथा रजः।
प्राचैर्देवासः प्र णयन्ति देवयुं ब्रह्मप्रियं जोषयन्ते वरा इव ॥२॥

आपः न देवीः उप यन्ति होत्रियम् अवः पश्यन्ति विऽततम् यथा रजः प्राचैः देवासः प्र नयन्ति देवऽयुम् ब्रह्मऽप्रियम् जोषयन्ते वराःऽइव ॥

अस्यामृचि, विशेषत उत्तरस्यामृचि च विशेष्यमनुक्त्वा विशेषणमात्रं उक्तं तत्र तत्र। रहस्यरक्षणाय कथंचित् स्थूलार्थोपपादनाय च ऋषिभिरेवं बहुषु मन्त्रेषु सूक्तेष्वपि गीतम्। होत्रियम् होतृसंबन्धि स्थानं, चमसमिति स्थूलं, तर्हि शरीरमेव सङ्केतितम्। देवीः देव्यः दिव्याः शक्तयः उप यन्ति उपगच्छन्ति। का इव? आपो न यथा निम्नदेशं आप उन्नतप्रदेशादुपगच्छन्ति तद्वत् देव्यः शक्तयो होतुः आह्वातुरन्तर्याजिनः शरीरमुपयन्ति। यथा विततम् रजः यथा विस्तृतं अन्तरिक्षं ऊर्ध्वं निरन्तरं अधस्तात् पृथिवीं पश्यति, तथा ता देव्यः होत्रियं निरन्तरं अवः पश्यन्ति अधस्तात् अवलोकयन्ति। देवासः देवाः देवयुम् देवान् कामयमानं यजमानं प्राचैः प्रथमं, यद्वा प्रकृष्टगमनैः प्रणयन्ति प्रकर्षेण प्राप्तव्यं दिव्यं स्थानं प्रापयन्ति। कीदृशम् देवयुम्? ब्रह्मप्रियम् मन्त्रात्मकस्तोत्रप्रियं, मन्त्रप्रयुक्ते देवतास्तोत्रे नित्या हि प्रीतिर्देवकामस्य पुरुषस्य। अपि च देवास्तं वराःऽइव जोषयन्ते वराः पुरुषाः यथा कन्यकाः वरयित्वा सेवन्ते तथा देवास्तं ब्रह्मप्रियं जनं सेवन्ते॥ प्राचैः—उच्चैः नीचैरितिवदव्ययं प्रथममित्यर्थे, अन्यथा प्रपूर्वादश्वतेः घनर्थे कविधानम्। जोषयन्ते—जुषी प्रीतिसेवनयोः, स्वात्मनः प्रयोज्यत्वात् हेतुमति णिच्॥

तृतीयामृचमाह—

अधि द्वयोरदधा उक्थ्यं वचो यतस्रुचा मिथुना या सपर्यतः।
असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वते ॥३॥

अधि द्वयोः अदधाः उक्थ्यम् वचः यतऽस्रुचा मिथुना या सपर्यतः असम्ऽयत्तः व्रते ते क्षेति पुष्यति भद्रा शक्तिः यजमानाय सुन्वते ॥

हे इन्द्र, द्वयोः कयोरिति नोक्तं, हविर्धानयोरिति कर्मठाः। द्यौः पृथिवी च मिथुनं

त्रयाणां कारणभूतो दिव्योंऽशश्चेति चत्वारो भवन्ति, तेषां पृथक्करणेन एकं शरीरपात्रं चतुर्व्यूहात्मकं भवति। तेन अन्नमये जगति अन्नमयो देह इव प्राणमयादयश्च तत्तल्लोके निष्पादितव्यक्तयः सिद्धव्यापाराश्च देवेषु साक्षादधीनाः दैव्यस्वीकाराय प्रभवन्ति। तदेवाह—असुरस्य महाबलस्य त्वष्टुर्देवस्य विश्वकर्मणः संबन्धिनं, तेन निर्मितमित्यर्थः, नायं देवशत्रुरसुरः, वेदे देवोऽप्यसुर उच्यते "महद्देवानामसुरत्वमेकम्" इत्यादौ, भक्षणम् सोमपानसाधनभूतं त्यम् तं चमसमेकम् चित् एकमेव चमसं सन्तम्, चतुर्वयम् चतुर्व्यूहं, चत्वारो वयाः शाखाभूताः अवयवा यस्येति विग्रहः, अकृणुत कृतवन्तः ॥ असुवत्—षू प्रेरणे, तुदादिः। अवयन्तः—छान्दसो वृद्ध्यभावः ॥

चतुर्थीमृचमाह—

विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः।
सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ॥४॥

विष्ट्वी शमी तरणिऽत्वेन वाघतः मर्तासः सन्तः अमृतऽत्वम् आनशुः
सौधन्वनाः ऋभवः सूरऽचक्षसः संवत्सरे सम् अपृच्यन्त धीतिऽभिः ॥

वाघतः स्तोतार ऋषयः ऋभवः शमी कर्माणि, एकस्य चमसस्य चतुर्धा करणादीनि अन्यान्यपि तरणित्वेन तरणकौशलेन विष्ट्वी विष्ट्वा व्याप्य, व्याप्तिं कृत्वा मर्तासः सन्तः मनुष्याः सन्तोऽपि अमृतत्वम् देवत्वं आनशुः आनशिरे। तथा देवत्वं प्राप्य सौधन्वनाः सुधन्वजाताः सूरचक्षसः सूर्यसदृशप्रकाशाः सूर्यसदृशज्ञानचक्षुषो वा, संवत्सरे परिपाककालद्योतकोऽयं, पक्वे काले इत्यर्थः धीतिभिः धारणसमर्थप्रज्ञावृत्तयो धीतयः, सामर्थ्यात्तद्विषयभूताभिः दैव्याभिः सम्पद्भिः समपृच्यन्त संपृक्ताः संयुक्ता अभवन्, देवैः सह स्वाधिकारं प्राप्ता इति भावः ॥ विष्ट्वी—विष्लृ व्याप्तौ। शमी—शसो लुक्। अपृच्यन्त—कर्मणि लङ् ॥

पञ्चमीमृचमाह—

क्षेत्रमिव वि ममुस्तेजनेनँ एकं पात्रमृभवो जेहमानम्।
उपस्तुता उपमं नाधमाना अमर्त्येषु श्रव इच्छमानाः ॥५॥

क्षेत्रम्ऽइव वि ममुः तेजनेन एकम् पात्रम् ऋभवः जेहमानम्
उपऽस्तुताः उपऽमम् नाधमानाः अमर्त्येषु श्रवः इच्छमानाः ॥

उपस्तुताः ऋषिभिः समीपे स्तुताः ऋभवः उक्तस्वरूपाः जेहमानम् प्रयतमानं (वेह जेह बाह प्रयत्ने) चतुर्व्यूहतां प्राप्तुं शरीरलक्षणं सोमरसपात्रमेव प्रयतते। तथा यतमानं एकम् पात्रम् चमसं मानदण्डेन क्षेत्रमिव भूमिमिव तेजनेन निशातनेन चतुष्टयरूपेण कर्तुं विममुः विशेषेण मानं कृतवन्तः। किं कुर्वन्तः? उपमम् उपमानभूतं प्रशस्तं सोमं नाधमानाः याचमानाः, अपि च अमर्त्येषु देवेषु मध्ये श्रवः श्रवणं दैव्यवाच इति शेषः, इच्छमानाः इच्छन्तः। एकतः पक्वेभ्यो मनुष्येभ्यः सोममिच्छन्ति, अन्यतो देवेषु मध्ये श्रवणम्॥ ममुः—माङ् माने, व्यत्ययेन परस्मैपदम्। उपमम्—माङ् माने, आतश्चोपसर्ग इति कप्रत्ययः। इच्छमानाः—व्यत्ययेनात्मनेपदम्॥

इति प्रथमस्य सप्तमे त्रिंशो वर्गः

षष्ठीमृचमाह—

आ मनीषामन्तरिक्षस्य नृभ्यः स्रुचेव घृतं जुहवाम विद्मना।
तरणित्वा ये पितुरस्य सश्चिर ऋभवो वाजमरुहन्दिवो रजः॥६॥

आ मनीषाम् अन्तरिक्षस्य नृऽभ्यः स्रुचाऽइव घृतम् जुहवाम विद्मना।
तरणिऽत्वा ये पितुः अस्य सश्चिरे ऋभवः वाजम् अरुहन् दिवः रजः॥

अन्तरिक्षस्य मध्यमस्थानस्य भुवर्लोकस्य संबन्धिभ्यः नृभ्यः नेतृभ्य ऋभुभ्यः, इतः प्रेत्य भुवर्लोकमार्गेणैव तृतीयं स्थानं प्राप्नुवन्ति कृतात्मानो मनुष्याः, तत्र ऋभव उपकारिणो भवन्ति। तस्मान्मध्यमस्थानसंबन्धित्वमृभूणाम्, तेषां पदं तु उत्तमस्थानम्। तेभ्यः स्रुचेव घृतम् जुह्वा आज्योपेतं हविः यथा आजुहवाम प्रयच्छाम, तथा मनीषाम् स्तुतिं विद्मना वेदनेन ज्ञानेन कुर्मः। ये ऋभवः देवभूताः पूर्वेऽस्मत्पितरः अस्य सर्वस्य जगतः पितुः पालकस्य सवितुः तरणित्वा तरणित्वानि तरणकौशलानि सश्चिरे प्रापुः, सावित्रान् विभवान् लब्धवन्त इत्यर्थः। अत एव दिवः द्योतमानस्य रजः रजसः स्वर्लोकस्य वाजम् समृद्धिं प्रति अरुहन् प्राप्नुवन्॥ जुहवाम—हु दानादनयोः। विद्मना—वेत्तेः, औणादिको मनिः॥

सप्तमीमृचमाह—

ऋभुर्न इन्द्रः शवसा नवीयानृभुर्वाजेभिर्वसुभिर्वसुर्ददिः।
युष्माकं देवा अवसाहनि प्रियेऽभि तिष्ठेम पृत्सुतीरसुन्वताम्॥७॥

ऋभुः नः इन्द्रः शवसा नवीयान् ऋभुः वाजेभिः वसुऽभिः वसुः ददिः

युष्माकम् देवाः अवसा अहनि प्रिये अभि तिष्ठेम पृत्सुतीः असुन्वताम् ॥

ऋभुरिति सर्वेषामृभूणामुपलक्षणम्, शवसा ज्वलितेन बलेन नवीयान् नवतरः प्रशस्ततरः ऋभुः नः अस्माकं इन्द्रः देवराजः परम ईश्वरो भवति। अपि च, वाजेभिः समृद्धिभिः वसुभिः धनैश्च ऋभुः अस्माकं वसुः निवासयिता देवः, अत एव ददिः दाता चाभीष्टानाम् ॥ परोऽर्धर्चः प्रत्यक्षकृतः। हे देवाः ऋभवः, युष्माकम् अवसा युष्मत्कर्तृकरक्षणेन प्रिये अनुकूले प्रीतिप्रदे अहनि दिवसे संग्रामे असुन्वताम् अयजमानानां यज्ञविरोधिनां देवद्वेषिणां पृत्सुतीः सेनाः अभितिष्ठेम अभिभवेम ॥ नवीयान्—नवशब्दादातिशायनिके ईयसुन्। ददिः—डुदाञ् दाने, आदृगमहन इति किप्रत्ययः, लिड्वद्भावाद् द्विर्भावादि, आतो लोप इटि चेत्याकारलोपः ॥

अष्टमीमृचमाह—

1.161.7

निश्चर्मण ऋभवो गामपिंशत सं वत्सेनासृजता मातरं पुनः।
सौधन्वनासः स्वपस्यया नरो जिव्री युवाना पितराकृणोतन ॥८॥
निः चर्मणः ऋभवः गाम् अपिंशत सम् वत्सेन असृजत मातरम् पुनरिति
सौधन्वनासः सुऽअपस्यया नरः जिव्री इति युवाना पितरा अकृणोतन ॥

अस्यामृचि ऋभूणां अन्यत्कर्म वर्णितम्। अस्यास्तात्पर्यं कामपि कथामवलम्ब्याविष्कृतं सायणीये, तत्र नास्माकमादरः। अस्मदीयं तात्पर्यं तु (१.२०.३, पृ. २२४) तत्रोक्तम्। स एष सारांशः। "गौरियं आदिमा प्रभा अदितिर्भवति। ऋभवः एनां आवृण्वत् चर्म अपोद्धार्य संस्कृतवन्तः इत्यन्यत्र प्रोक्तम्। 'निश्चर्मणो गामरिणीत धीतिभिः' (४.३६.४) एषा गौः विश्वरूपेति चोक्तम् 'ये धेनुं विश्वजुवं विश्वरूपाम्' (४.३३.८)। विश्वस्य प्रेरयित्री विश्वरूपा च अदितिरेव माता अखण्डप्रज्ञास्वरूपिणी भवति। तस्या एव पुत्रो जीव आत्मा मनुष्यस्य। मातुर्विप्रयुक्तः प्रज्ञायाम्। तत्र आवरणं चर्म हेतुर्भवति। तच्च तमोभूतं प्रकृतिकार्यमेव लक्षणीयम्। तदपाये अखण्डप्रज्ञाया अदितेरमृतसुवो धेनोः स्वीयां वृत्तिं रूपीभवन्तीं मानुषे पुरुषे निष्पादयन्त्येत ऋभवः"। अथ ऋचोऽक्षरार्थः तात्पर्यबोधाय भवति। हे ऋभवः, यूयं चर्मणः आवरकात् तमोरूपात् गाम् 'सबर्दुघां' धेनुं निरपिंशत निःशेषेण अश्लिष्टरूपां विश्लिष्टां अकुरुतेत्यर्थः। तथा कृत्वा मातरम् तां वत्सेन पुनः समसृजत वत्सेन पुनः समगमयत ॥ अन्यदार्भवं कर्म परेणार्धर्चेनोच्यते। हे सौधन्वनासः सुधन्वजाताः ऋभवः, नरः नेतारो यजमानपुरुषाणामूर्ध्वमिति

शेषः, यूयं स्वपस्यया शोभनकर्मेच्छया जिव्री जीर्णौ वृद्धौ पितरा युवाना पुनर्यौवनोपेतौ अकृणोतन अकृद्वम् । अत्र माता पृथिवी पिता द्यौः । सृष्टौ सिद्धयोः वृद्धयोः जगत्पित्रोः द्यावापृथिव्योः मानुषे यजमाने नवतां बलवतीमापादयन्ति ऋभव इत्युक्तं भवति ॥ अपिंशत–पिश अवयवे, तुदादिः, शे मुचादीनामिति नुम् । युवाना पितरा–उभयत्र विभक्तेराकारः ॥

नवमीमृचमाह—

वाजे॑भिर्नो॒ वाज॑सातावविड्ढ्यृभु॒माँ इ॑न्द्र चि॒त्रमा द॑र्षि॒ राधः॑ ।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥९॥

वाजे॑भिः नः॒ वाज॑ऽसातौ अ॒वि॒ड्ढि॒ ऋ॒भु॒ऽमान् इ॒न्द्र॒ चि॒त्रम् आ द॒र्षि॒ राधः॑
तत् नः॒ मि॒त्रः वरु॑णः म॒म॒ह॒न्ता॒म् अदि॑तिः सिन्धुः॑ पृ॒थि॒वी उ॒त द्यौः ॥

हे इन्द्र, ऋभूणामिन्द्रेण सहैकभावं गतत्वादेवं संबोधनम् । ऋभुमान् ऋभुभिर्युक्तः त्वं वाजसातौ समृद्धिप्राप्तौ, निमित्तसप्तमी, वाजेभिः समृद्धिभिः, त्वदीयाभिः नः अस्मान् अविड्ढि व्याप्नुहि । तथा व्याप्य चित्रम् अद्भुतमुत्तमं राधः धनं आदर्षि आद्रियस्व अस्मत्कृते । तन्नो मित्र इत्यादि गतम् ॥ अविड्ढि–विष्लृ व्याप्तौ, लोटो हिः, शपो लुक्, छन्दस्यपि दृश्यते इति दृशिग्रहणात् लोट्यडागमः । दर्षि–दृङ् आदरे, लोट्, व्यत्ययेन परस्मैपदम्, विकरणस्य लुक् ॥

इति प्रथमस्य सप्तम एकत्रिंशो वर्गः

'तक्षन्नि'ति पञ्चर्चं षष्ठं सूक्तं कुत्सस्यार्षं आर्भवं, पञ्चमी त्रिष्टुप्, शिष्टाश्चतस्रो जगत्यः ॥

तत्र प्रथमामृचमाह—

तक्ष॒न्रथं॑ सु॒वृतं॑ विद्म॒नाप॑सस्तक्ष॒न्हरी॑ इन्द्र॒वाहा॒ वृष॑ण्वसू ।
तक्ष॑न्पि॒तृभ्या॑मृ॒भवो॒ युव॒द्वय॒स्तक्ष॑न्व॒त्साय॑ मा॒तरं॑ सचा॒भुव॑म् ॥१॥

तक्ष॑न् रथ॑म् सु॒ऽवृत॑म् वि॒द्म॒ना॒ऽअप॑सः तक्ष॑न् ह॒री इति॑ इ॒न्द्र॒ऽवाहा॑
वृष॑ण्वसू इति॒ वृष॑ण्ऽवसू तक्ष॑न् पि॒तृऽभ्या॑म् ऋ॒भवः॑ युव॑त् वयः॑ तक्ष॑न्
व॒त्साय॑ मा॒तर॑म् स॒चा॒ऽभुव॑म् ॥

मनुष्याणामुद्धाराय, यजमानं प्रति इन्द्रस्यागमनाय, ऋभवः इन्द्ररथाऽऽश्विनाश्वतक्षणादि कुर्वन्ति । इदमप्यार्भवं कर्म प्राक् संक्षेपेणोक्तम् (१.२० सू.) । विद्मनापसः विद्मना ज्ञानेनोत्कृष्टेन

निष्पाद्यानि अपांसि कर्माणि, आर्भवमन्त्रवर्णैरावेदितानि, येषां ते ऋभवः रथम् अश्विनोरारोहणार्थं सुवृतम् शोभनवर्तनं तक्षन् अकुर्वन्। तथा इन्द्रवाहा इन्द्रस्य वाहनभूतौ वृषण्वसू वर्षितृ वसु धनं ययोस्तौ, अभीष्टवर्षणसमर्थवनयुक्तौ, हरी अश्वौ तक्षन् अकुर्वन्। अपि च पितृभ्याम् माता-पितृभ्यां, द्यावापृथिवीभ्यां वृद्धाभ्यां युवत् यौवनोपेतं नवं वयः आयुः ऋभवः तक्षन् कृतवन्तः। तथा वत्साय मातरम् गां सचाभुवम् सहभुवं सह वर्तमानां वत्सेन संयुक्तां तक्षन् अकुर्वन्। अत्र रहस्यं सर्वं पूर्वस्यां उक्तम्॥ सुवृतम्—शोभनं वर्तत इति सुवृत्, क्विप्। वृषण्वसू—वृषण्व-स्वश्वयोरुपसंख्यानमिति वसुशब्दे उत्तरपदे वृषण्भावः। युवत्—अत्र युवन्शब्दः युवत्वमाचष्टे, तदस्मिन्नस्तीति युवत्, छान्दसो वर्णलोपः॥

द्वितीयामृचमाह—

आ नो॑ य॒ज्ञाय॑ तक्षत ऋभु॒मद्वयः॒ क्रत्वे॒ दक्षा॑य सुप्र॒जाव॑ती॒मिषम्।
यथा॒ क्षया॑म॒ सर्व॑वीरया वि॒शा तन्नः॒ शर्धा॑य धासथा॒ स्वि॑न्द्रि॒यम्॥२॥

आ नः॒ य॒ज्ञाय॑ त॒क्ष॒त॒ ऋ॒भु॒ऽमत् वयः॑ क्रत्वे॑ दक्षा॑य सु॒ऽप्र॒जाव॑तीम् इ॒षम्
यथा॑ क्षया॑म सर्व॑ऽवीरया वि॒शा तत् नः॒ शर्धा॑य धा॒स॒थ॒ सु इ॒न्द्रि॒यम्॥

हे ऋभवः, नः अस्माकं यज्ञाय यजनस्य सम्यङ्निर्वाहाय ऋभुमत् युष्मद्विभवोपेतं वयः ज्ञानं आतक्षत समन्तान्निष्पादयत। क्रत्वे क्रतवे, प्राज्ञाय कर्मणे दक्षाय युक्तायुक्तविवेचनवलाय सुप्रजावतीम् शोभनसन्तानोपेतां इषम् एषणां, प्रेरणाशक्तिं च आतक्षतेति संबन्धः। सर्ववीरया सर्वविधवीर्योपेतया विशा प्रजया युक्ताः यथा क्षयाम येन प्रकारेण सुखं निवसाम तत् तादृशं इन्द्रियम् इन्द्रलिङ्गं बलं नः शर्धाय अस्माकं बलाय सुधासथ सुष्ठु धत्त, अस्मासु धारयत॥ धासथ—धाञो लेट्यडागमः॥

तृतीयामृचमाह—

आ त॑क्षत सा॒तिम॒स्मभ्य॑मृभवः सा॒तिं रथा॑य सा॒तिमर्व॑ते नरः।
सा॒तिं नो॒ जैत्रीं॒ सं म॑हेत वि॒श्वहा॑ जा॒मिमजा॑मिं॒ पृत॑नासु स॒क्षणि॑म्॥३॥

आ त॒क्ष॒त॒ सा॒तिम् अ॒स्मभ्य॑म् ऋ॒भ॒वः॒ सा॒तिम् रथा॑य सा॒तिम् अर्व॑ते न॒रः॒
सा॒तिम् नः॒ जैत्री॑म् सम् म॒हे॒त॒ वि॒श्वहा॑ जा॒मिम् अजा॑मिम् पृत॑नासु स॒क्षणि॑म्॥

हे नरः नेतारो यज्ञस्य, ऋभवः, अस्मभ्यम् अस्मत्कृते सातिम् संभजनीयं बलं (धनमिति सायणः) आतक्षत समन्तात् कुरुत। तथा रथाय रंहणशीलाय अस्माकमूर्ध्वयानाय सातिम् आतक्षत। तथा अर्वते अश्वाय सातिम् आतक्षत। किञ्च, विश्वहा सर्वेष्वहस्सु नः अस्माकं जैत्रीम् जयशीलां सातिम् संभजनीयां शक्तिं, सर्वाधिकबलं सं महेत सर्वोऽपि सम्यक् पूजयतु। वयं च पृतनासु संग्रामेषु जामिम् सहजातं बन्धुं अजामिम् तदितरं वा शत्रुं सक्षणिम् अस्मानभिभवन्तं, युष्मदनुग्रहादभिभवेम॥ महेत–मह पूजायाम्। सक्षणिम्–सह अभिभवे, औणादिकः सनिप्रत्ययः, ढत्वं, तथा कत्वषत्वे॥

चतुर्थीमृचमाह—

ऋ॒भु॒क्षण॒मिन्द्र॒मा हु॑व ऊ॒तय॑ ऋ॒भून्वाजा॑न्म॒रुतः॒ सोम॑पीतये।
उ॒भा मि॒त्रावरु॑णा नू॒नम॒श्विना॒ ते नो॑ हिन्वन्तु सा॒तये॑ धि॒ये जि॒षे॥४॥

ऋ॒भु॒क्षण॑म् इन्द्र॑म् आ हु॒वे ऊ॒तये॑ ऋ॒भून् वाजा॑न् म॒रुतः॑ सोम॑ऽपीतये
उ॒भा मि॒त्रावरु॑णा नू॒नम् अ॒श्विना॑ ते न॒ः हि॒न्व॒न्तु सा॒तये॑ धि॒ये जि॒षे॥

ऋभुक्षणम् ऋभुषु क्षियति निवसतीति ऋभुक्षाः, तं इन्द्रम् आहुवे आह्वयामि। किमर्थम्? ऊतये उत्तराभिवृद्धये। तथा ऋभून् ऋभुर्विभ्वा वाज इति त्रयो भ्रातरः, एकैकोऽपि गणरूपः, तस्माद्भूनिति बहुवचनम्। तथा वाजान् मरुतः एतानपि सोमपीतये सोमपानाय आह्वयामि। तथा उभा उभौ द्वन्द्वरूपेणावस्थितौ मित्रावरुणा एतौ अश्विना अश्विनौ च नूनम् अवश्यं आह्वयामि। ते आहूता इन्द्रादयः नः अस्मान् हिन्वन्तु प्रेरयन्तु। किमर्थम्? सातये संभजनीयायोत्तमधनाय धिये शोभनायै बुद्धये जिषे जयार्थं च॥ हिन्वन्तु–हि गतिवृद्ध्योः, स्वादित्वात् श्नुः, अन्तर्भावितण्यर्थः। जिषे–जि जये, तुमर्थे सेप्रत्ययः॥

पञ्चमीमृचमाह—

ऋ॒भुर्भरा॑य॒ सं शि॑शातु सा॒तिं स॑म॒र्य॒जिद्वाजो॑ अ॒स्माँ अ॑विष्टु।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒ः सिन्धु॑ः पृथि॒वी उ॒त द्यौः॥५॥

ऋ॒भुः भरा॑य सम् शि॒शा॒तु सा॒तिम् स॒म॒र्य॒ऽजित् वाजः॑ अ॒स्मान् अ॒वि॒ष्टु
तत् न॒ः मि॒त्रः वरु॑णः म॒म॒ह॒न्ता॒म् अदि॑तिः सिन्धु॑ः पृ॒थि॒वी उ॒त द्यौः॥

ऋभुः प्रथम ऋभूणां अस्माकं सातिम् संभजनीयां संपदं भराय संग्रामार्थं सम् शिशातु सम्यक् तीक्ष्णीकरोतु। समर्यजित् मर्यैः मनुष्यैः सह वर्तत इति समर्यः संग्रामः तत्र शत्रूणां जेता वाजः तृतीय ऋभुगणः अस्मान् अविष्टु अवतु। तन्नो मित्र इत्यादि व्याख्यातम्॥ शिशातु—शो तनूकरणे, लोट्, द्विर्भावादिश्छान्दसः। अविष्टु—अवतेर्लोट्, इडागमः छान्दसः, तथा सिप् च॥

इति प्रथमस्य सप्तमे द्वात्रिंशो वर्गः

‘ईळे’ इति पञ्चविंशत्यृचं पञ्चमं सूक्तं आङ्गिरसस्य कुत्सस्यार्षम्। चतुर्विंशीपञ्चविंश्यौ त्रिष्टुभौ, शिष्टा जगत्यः। आद्यः पादो द्यावापृथिव्यः, द्वितीय आग्नेयः, शिष्टं सूक्तं आग्नेयम्॥

तत्र प्रथमामृचमाह—

ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये।
याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम्॥१॥

ईळे द्यावापृथिवी इति पूर्वऽचित्तये अग्निम् घर्मम् सुऽरुचम् यामन् इष्टये याभिः भरे कारम् अंशाय जिन्वथः ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम्॥

द्यावापृथिवी द्यावापृथिव्यौ, ऊर्ध्वा चित्तिः द्यौः, अधरा चित्तिः पृथिवी, इमे उभे च पूर्वचित्तये पूर्वज्ञानाय प्रथममेव तयोः चित्प्रसादलाभायेत्यर्थः ईळे अध्येषे, याचामि। अथ अग्निम् ईळे। कीदृशम्? घर्मम् दीप्तं अत एव सुरुचम् शोभनकान्तियुक्तम्। किमर्थम्? यामन् यामनि गमने, प्रकृते अश्विनोरागमने इष्टये यजनाय। दीप्तस्याग्नेः प्रभावादाश्विनमार्गः प्रकाशो भवति यज्ञयात्रायाः, तत्र ऊर्ध्वमधश्च चित्प्रसादः प्रथमा प्रतिष्ठा स्यादिति रोदस्योरीळनं आदौ प्रस्तुतम्। हे अश्विना अश्विनौ, याभिः ऊतिभिः भरे संग्रामलक्षणे यज्ञे अंशाय भागाय स्वकीयाय कारम् कर्तारं यज्ञस्य स्तोत्रस्य वा जिन्वथः प्रीणयथः ताभिः उ उ इति पादपूरणः ऊतिभिः रक्षाभिः सह अस्मान् सु आगतम् सुष्ठु आगच्छतम्॥ अत्र सायणः ‘कारशब्दः शङ्खवाची तेन ह्यभियुक्ताः संगिरन्ते, कारं शब्दकारिणं शङ्खं जिन्वथः मुखेन पूरयथः’ इति व्याचष्टे। स एव ‘कारं कर्तारं’ इति इतरत्र आह, ‘कारं कर्तारमभिमतस्य प्रयोजनस्य’ (४.१.१४) ‘कारं न स्वामिनः कर्मकारमिव’ (५.२९.८) ‘कार इत् शत्रुजयकर्तैव’ (१०.५३.११)॥ जिन्वथः—जिविः प्रीणनार्थः, अत्र प्रीणनहेतुभूतं आपूरणं लक्ष्यत इति सायणः॥

द्वितीयामृचमाह—

युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे।
याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतम् ॥२॥

युवोः दानाय सुऽभराः असश्चतः रथम् आ तस्थुः वचसम् न मन्तवे याभिः धियः अवथः कर्मन् इष्टये ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

सुभराः सुखेन बिभ्रतः देवताप्रसादमिति शेषः असश्चतः असङ्गाः स्तोतारः, निस्सङ्गतया आश्विनं तेजोबलादिकं सुखेन भर्तुं शक्नुवन्ति स्तोतारः। ते युवोः युवयोः रथमातस्थुः रथं आतिष्ठन्ति प्राप्नुवन्ति। किमर्थम्? दानाय युष्मत्कर्तृकाय प्रसादाय। तत्र दृष्टान्तः— वचसम् न मन्तवे वचोयुक्तं विपश्चितं ज्ञानाय यथा ज्ञानेच्छवः उपासते तद्वत्। अपि च इष्टये यजनाय कर्मन् कर्मणि याभिः ऊतिभिः धियः ध्यानभरिता बुद्धीः स्तुतीर्वा अवथः रक्षथः, ताभिरित्यादि पूर्ववत् ॥ वचसम्—अर्शआदित्वादच् मत्वर्थीयः। मन्तवे—मन ज्ञाने, कमिमनीत्यादिना तुप्रत्ययः ॥

तृतीयामृचमाह—

युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना।
याभिर्धेनुमस्वं१ पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतम् ॥३॥

युवम् तासाम् दिव्यस्य प्रऽशासने विशाम् क्षयथः अमृतस्य मज्मना याभिः धेनुम् अस्वम् पिन्वथः नरा ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे नरा नेतारावश्विनौ, दिव्यस्य दिवि भवस्य अमृतस्य मरणरहितस्य सर्वधारकस्य सोमस्य रसस्य मज्मना बलेन युक्तौ युवम् युवां तासाम् प्रसिद्धानां सर्वासां विशाम् प्रजानां प्रशासने प्रकृष्टे अनुशासने शिक्षणे क्षयथः ऐश्वर्यकर्माऽयं, ईशाथे, शक्तौ भवथः। अपि च याभिः ऊतिभिः अस्वम् असुवं अप्रसवां प्रसवासमर्थां धेनुम् गां पिन्वथः सिञ्चथः, अमृतरसलक्षणं क्षीरं स्वात्मनो दोग्धुमसमर्थां चिद्रश्मिलक्षणां गां तादृशप्रसवसमर्थां अश्विनौ स्वीयेन दिव्येन भैषज्येन कुरुत इत्यर्थः। सायणस्तु शंयोर्नाम ऋषेः काचन गौः प्रसवासमर्थाऽभूत्, तां प्रसव-

समर्थामकुरुतामश्विनाविति कथां ब्रूते। ताभिरिति पूर्ववत् ॥

चतुर्थीमृचमाह—

याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति।
याभिस्त्रिमन्तुरभवद्विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतम् ॥४॥

याभिः परिऽज्मा तनयस्य मज्मना द्विऽमाता तूर्षु तरणिः विऽभूषति याभिः त्रिऽमन्तुः अभवत् विऽचक्षणः ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

याभिः ऊतिभिः परिज्मा परितो गन्ता मातरिश्वा तनयस्य स्वीयसन्तानस्य अग्नेः 'वायोरग्निः' इत्यौपनिषदाः, सृष्टावपि भुवर्लोकात्परमेव भूलोकस्यावस्थानम्, यस्याग्निर्देवता। तस्य अग्नेः मज्मना बलेन द्विमाता द्वयोः द्यावापृथिव्योः माता निर्माता, क्रियादक्षत्वात् प्राणात्मकस्य मातरिश्वनः। तथाभूतः तूर्षु तरीतृषु त्वरितगमनेषु मध्ये तरणिः अतिशयेन तरीता सत्वरगामी विभूषति विभवति, व्याप्तो भवति। अपि च याभिः ऊतिभिः त्रिमन्तुः त्रयाणां मन्ता ज्ञाता, आसादितत्रिलोकज्ञानः, एतन्नामा ऋषिर्वा विचक्षणः विशिष्टज्ञानयुक्तः अभवत् भवतीति लडर्थे। ताभिरित्यादि पूर्ववत्। अत्र सायणः त्रिमन्तुः कक्षीवानृषिरित्याह। स्यान्नाम। सूक्तेऽस्मिन् ऐतिहासिकपुरुषाणां आश्विनानुग्रहपात्रभूतानां नामानि श्रूयन्ते, तत्र धात्वर्थानुगमेन रहस्यार्थप्रतिपत्तिः सिध्यतीति बोध्यम्। तावता ऋषीणां ऐतिहासिकत्वं न बाधितं भवति, यथा कुत्सादेः। इदं च प्राक् प्रस्तुतं विवृतं च॥ तूर्षु—तॄ प्लवनतरणयोः, बहुलं छन्दसीत्युत्वं, यद्वा त्वरतेः क्विप्। विभूषति—भवतेर्लेट्यडागमः, सिप् लेटि बहुलम् ॥

पञ्चमीमृचमाह—

याभी रेभं निवृतं सितमद्भ्य उद्वन्दनमैरयतं स्वर्दृशे।
याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥५॥

याभिः रेभम् निऽवृतम् सितम् अत्ऽभ्यः उत् वन्दनम् ऐरयतम् स्वः दृशे याभिः कण्वम् प्र सिसासन्तम् आवतम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे अश्विनौ, याभिः ऊतिभिः रेभम् एतत्संज्ञकं रेभतिः स्तुतिकर्मा, स्तुत्या ख्यातमृषिं निवृतम् निवारितं (अन्तर्भावितण्यर्थः) पापैर्देवविरोधिभिरिति शेषः, तथा सितम् बद्धं अज्ञानमयान्धकूपे पतितं तत्र आसुरशक्तिरज्जुभिर्बद्धं च ऋषिं अद्भ्यः उक्तलक्षणकूपाद्भ्यः सकाशात् उदैरयतम् उदगमयतं, तथा वन्दनम् एतत्संज्ञकमृषिं च उदैरयतम्। किमर्थम्? स्वः दृशे सौरस्य ज्योतिषः दर्शनाय। अपि च कण्वम् मेधाविनं एतत्संज्ञकं वा ऋषिं अन्धकारे प्रक्षिप्तं सिषासन्तम् संभक्तुमिच्छन्तं सौरप्रकाशमिति शेषः, याभिः ऊतिभिः प्रावतम् प्रकर्षेणारक्षतम्। ताभिरित्यादि समानम्॥ सितम्—षिञ् बन्धने। अन्ये गताः॥

इति प्रथमस्य सप्तमे त्रयस्त्रिंशो वर्गः

षष्ठीमृचमाह—

**याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः।**
**याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम्॥६॥**

**याभिः अन्तकम् जसमानम् आऽअरणे भुज्युम् याभिः अव्यथिऽभिः जिजिन्वथुः याभिः कर्कन्धुम् वय्यम् च जिन्वथः ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम्॥**

आरणे आ समन्तात् अरणं सोद्यमगमनं तत्र, सप्रयासोद्यम इत्यर्थः जसमानम् हिंस्यमानं शत्रुभिः पापैः अन्तकम् एतत्संज्ञकं राजर्षिं, शत्रूणामन्तकरं वा ऋषिं याभिः ऊतिभिः अवथः रक्षथः तथा भुज्युम् पालकं एतत्संज्ञकं, काक्षीवते आश्विने सूक्ते चोपन्यस्यते भुज्युः राजर्षिः, तं याभिः ऊतिभिः अव्यथिभिः व्यथारहिताभिः सुखोपायभूताभिः रक्षाभिः जिजिन्वथुः अतर्पयतम्। तथा कर्कन्धुम् अविदितमस्य स्वरूपं सकृत्प्रयोगात् वय्यम् च एतत्संज्ञकं च, अस्य स्वरूपं प्रागुक्तम् (१.५४.६), याभिः ऊतिभिः जिन्वथः प्रीणयथः। गतमन्यत्॥ जसमानम्—जसि हिंसायाम्, यकि प्राप्ते व्यत्ययेन शप्। जिजिन्वथुः—जिविः प्रीणनार्थः, लिटि रूपम्॥

सप्तमीमृचमाह—

**याभिः शुचन्तिं धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्रये।**
**याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतम्॥७॥**

**याभिः शुचन्तिम् धनऽसाम् सुऽसंसदम् तप्तम् घर्मम् ओम्याऽवन्तम्**

अत्रये याभिः पृश्निऽगुम् पुरुऽकुत्सम् आवतम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे अश्विनौ, धनसाम् दिव्यस्य धनस्य संभक्तारं शुचन्तिम् दीप्यमानमृषिं एतत्संज्ञकं सुषंसदम् शोभनावासगृहयुक्तं याभिः ऊतिभिः अकुरुतम्, तथा अत्रये एतत्संज्ञकाय ऋषये तप्तम् तपसा परिपक्वं घर्मम् दीप्तियुक्तं महावीरसङ्केतकं शरीरं ओम्यावन्तम् रक्षासुखयुक्तं याभिरूतिभिः अकुरुतम् । अपि च याभिः ऊतिभिः पृश्निगुम् पृश्नयश्चित्रवर्णाः गावः चिद्रश्मिलक्षणाः यस्य तं, एतत्संज्ञकं पुरुकुत्सम् एतं ऋषिं च आवतम् अरक्षतम् । ताभिरिति गतम् ॥ शुचन्तिम्- शुच दीप्तौ । सुषंसदम्-सीदतेः । ओम्यावन्तम्-अवतेः मनिन्, ज्वरत्वरेत्यादिना वकारस्योप-धायाश्च ऊठ्, गुणः, अर्हार्थे यप्रत्ययः ॥

अष्टमीमृचमाह—

याभिः शचीभिर्वृषणा परावृजम् प्रान्धं श्रोणं चक्षस एतवे कृथः ।
याभिर्वर्तिकां ग्रसितामुमुञ्चतं ताभिरू षु ऊतिभिरश्विना गतम् ॥८॥

याभिः शचीभिः वृषणा पराऽवृजम् प्र अन्धम् श्रोणम् चक्षसे एतवे कृथः याभिः वर्तिकाम् ग्रसिताम् अमुञ्चतम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे वृषणा वर्षितारौ अश्विनौ, याभिः शचीभिः शक्तिभिः क्रियाभिः प्रज्ञाभिर्वा परावृजम् एतत्संज्ञकं, परावृणक्ति तपसा पापं प्रध्वंसयति इति परावृक् तमृषिं 'पङ्गुं अपङ्गुं अकुरुतम्' इति सायणः, क्वेयं पुराणकथेति न ज्ञायते । अन्धम् दृष्टिरहितं 'ऋज्राश्वमृषिम्' इति सायणः, चक्षसे चक्षुषा सम्यग्दर्शनाय याभिरूतिभिः प्रकृथः प्रकर्षेण कुरुथः । श्रोणम् एतत्संज्ञकं 'विगुणजानुकमेव सन्त'मिति सायणः, एतवे गन्तुं प्रकृथः प्रकर्षेण कृतवन्तौ, वर्तिकाम् चटक-सदृशस्य पक्षिणः स्त्रियमिति सायणः, ग्रसिताम् वृकेण ग्रस्तां इति सायणः याभिः ऊतिभिः अमुञ्चतम् निर्मुक्तामकुरुतम् । ताभिरिति गतम् । अत्रेदं चिन्त्यम् । अस्यामृचि उत्तरासु च अश्विनोरनुग्रहप्रभावो वर्ण्यते, पादहीनस्य गमनसामर्थ्यं अन्धस्य प्रकाशदानमित्यादि तत्र निदर्शनम् । एतेषां वादानां ऐतिहासिकत्वेऽपि अन्तरर्थस्य न क्षतिः, स्तोत्रात्मकत्वात्तेषाम्, अन्यथा च अन्धादीनां सत्यप्रकाशनिर्मूढत्वादि विवक्षितम् । अत्र वर्तिकाकथासारस्तु विचेयः ॥

काचन चटकपक्षिस्त्री वृकेण ग्रस्ताऽभूत्, तां निर्मुक्तामकुरुतामश्विनौ इति भूतार्थं मन्यमान इव कथयति कथाम्। यास्कस्तु वृकेण विवृतज्योतिष्केण सूर्येण ग्रस्तामुषसं निर्मुक्तामकुरुतामिति कथां लाक्षणिकीं मन्यते। नव्यास्तु रात्र्या ग्रस्ता उषा वर्तिकेति विभावयन्ति, एवं बहवो वादा ऊहमात्राधाराः विप्रतिपद्यन्ते। सायणं विना सर्वेऽपि कथाया गौणत्वमाश्रित्यैव प्रवर्तन्ते। अस्माकमपि गौणत्वाश्रयणेनैव सङ्केतार्थः प्रवर्तते॥ तर्हि ब्रूमः—वर्तिका न चटकपक्षिस्त्री, अन्येयं भीरुत्वेन ख्याता "श्येनावपातचकिता वनवर्तिकेव" इत्येवमादिप्रयोगे अतिभीरुत्वमस्याः द्योतितम्। बलहीनतामवद्योतयति स्त्रीत्वम्। अन्तः ऊर्ध्वगमनायोद्यतो जीवन् योगी पक्षिणोपमीयते। असति दूरोत्पतनसामर्थ्ये, ऊर्ध्वं जिगमिषोर्योगिनः असुरेभ्यः भयं नित्यसिद्धम्। एवं वर्तिकास्थानीयं भीरुं योगिनमृषिं वृकेण छेदकेनासुरेण ग्रस्तं अश्विनौ निर्मुक्तमकुरुताम्॥ एतवे—एतेः तुमर्थे तवेन्प्रत्ययः। कृथः—करोतेः, विकरणस्य लुक्॥

नवमीमृचमाह—

याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम्।
याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥९॥
याभिः सिन्धुम् मधुऽमन्तम् असश्चतम् वसिष्ठम् याभिः अजरौ अजिन्वतम् याभिः कुत्सम् श्रुतर्यम् नर्यम् आवतम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम्॥

हे अश्विनौ, सिन्धुम् स्यन्दनशीलां तेजोबलादिवाहिनीं मधुमन्तम् रसभरितां याभिः ऊतिभिः असश्चतम् अगमयतं (सश्चतिर्गतिकर्मा, अन्तर्भावितण्यर्थः)। हे अजरौ जरारहितौ वसिष्ठम् ऋषिं याभिः ऊतिभिः अजिन्वतम् अप्रीणयतं, याभिः कुत्सं श्रुतर्यं नर्यं एतान् ऋषीन् आवतम् अरक्षतम् ताभिरिति गतम्॥

दशमीमृचमाह—

याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजावजिन्वतम्।
याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतम्॥१०॥
याभिः विश्पलाम् धनऽसाम् अथर्व्यम् सहस्रऽमीळ्हे आजौ अजिन्वतम्

याभिः वशम् अश्व्यम् प्रेणिम् आवतम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे अश्विनौ, याभिः ऊतिभिः धनसाम् दिव्यं धनं संभजमानां अथर्व्यम् थर्वतिर्गतिकर्मा, गमनरहितां (लिङ्गव्यत्ययः) स्थिरां दृढस्थितिकामित्यर्थः विश्पलाम् विशां पालयित्रीं ऋषिकां (अगस्त्यपुरोहितस्य खेलस्य संबन्धिनी पत्नी वेति इतिहासः) सहस्रमीळ्हे सहस्रदिव्यधनवृष्टि-युक्ते (मीळ्हं धननाम स्थूले, वर्षणमपि स्यात्) आजौ असुरैः सह युद्धे अजिन्वतम् अप्रीणयतम्। याभिः वशम् (वष्टेः) एतत्संज्ञकमृषिं अश्व्यम् अश्वाख्यस्यर्षेः प्राणसमृद्धस्य पुत्रं प्रेणिम् प्रेरयितारं यजनस्य स्तुतेर्वा ऋषिं आवतम् अरक्षतम्। ताभिरिति गतम् ॥ प्रेणिम्—प्रेण् गतिप्रेरण-श्लेषणेषु, औणादिक इन्प्रत्ययः ॥

इति प्रथमस्य सप्तमे चतुस्त्रिंशो वर्गः

एकादशीमृचमाह—

याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत्।
कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥ ११ ॥

याभिः सुदानू इति सुऽदानू औशिजाय वणिजे दीर्घऽश्रवसे मधु कोशः अक्षरत् कक्षीवन्तम् स्तोतारम् याभिः आवतम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे सुदानू शोभनदानौ अश्विनौ, औशिजाय उशिक्पुत्राय, अस्य स्वरूपं प्रागुक्तम् (१.१८.१) वणिजे वाणिज्यं कुर्वते फलप्रतिफलबुद्धिचोदनया यत् क्रियते तत्र वाणिज्यगन्धो वर्तत एव, तदिह विवक्षितं बोध्यम्, तथाभूताय दीर्घश्रवसे सुदूरदिव्यश्रवणशालिने ऋषये याभिः युष्म-दीयाभिरूतिभिः हेतुभूताभिः कोशः दिव्यधनसमृद्धिनिधानभूतः मधु मधुरं मदकरं रसभरितं अक्षरत् अवर्षत्। दीर्घतमसः पत्न्या उशिजः पुत्रो दीर्घश्रवाः अनावृष्टेर्वाणिज्यवृत्तिमवलम्बे इति कथामुदाहरन्ति, स एव कक्षीवानित्येके। अपि च स्तोतारम् कक्षीवन्तम् एतमृषिं (१.१८.१) याभिः आवतम् अरक्षतम्। ताभिरिति गतम् ॥

द्वादशीमृचमाह—

याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे।
याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतम् ॥ १२ ॥

याभिः रसाम् क्षोदसा उद्नः पिपिन्वथुः अनश्वम् याभिः रथम् आवतम् जिषे याभिः त्रिऽशोकः उस्रियाः उत्ऽआजत ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे अश्विनौ, याभिः ऊतिभिः रसाम् ऊर्ध्वं दिव्यभूमिगां रसमयीं नदीं क्षोदसा संपिषता कूलानीति शेषः, उद्नः उदकेन, तृतीयायाः द्वितीयाबहुवचनविपर्ययः, पिपिन्वथुः पूरितवन्तौ युवाम् । रथम् रंहणशीलं आत्मीयं गतिवेगं अनश्वम् अश्विनौ सन्तावपि अश्वं विनैव जिषे जेतुं याभिः ऊतिभिः आवतम् अरक्षतम्, युष्मदीयवेगः अश्वनिरपेक्षं प्रवर्तत इति भावः । याभिः ऊतिभिः त्रिशोकः त्रिषु स्थानेषु अन्तर्बहिश्च, शोकः दीप्तिर्यस्यासौ (शुच दीप्तौ, अस्मात् शोकः) उस्रियाः गाः चिद्रश्मिलक्षणाः उदाजत उदगमयत्, अन्धकारे जडे तमसि या गावः निलीनास्ता इत्यर्थः । ताभिरिति गतम् ॥ क्षोदसा–क्षुदिर् संपेषणे, औणादिकोऽसुन्प्रत्ययः । जिषे–तुमर्थे क्सेप्रत्ययः ॥

त्रयोदशीमृचमाह–

याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम् ।
याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१३॥

याभिः सूर्यम् परिऽयाथः पराऽवति मन्धातारम् क्षैत्रऽपत्येषु आवतम् याभिः विप्रम् प्र भरत्ऽवाजम् आवतम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे अश्विनौ, परावति त्रैलोक्यात् परस्तात् दूरस्थाने सूर्यम् ऋतज्योतिःस्वरूपं याभिः ऊतिभिः परियाथः परितो गच्छथः । तथा मन्धातारम् मेधाविनामेदं, मनसो धातारं, एतमृषिं क्षैत्रपत्येषु क्षेत्राणां त्रिलोकवर्तिनां पतिः क्षेत्रपतिः तत्संबन्धिषु कर्मसु आवतम् अरक्षतम् । याभिः ऊतिभिः विप्रम् विपश्चितं भरद्वाजम् समृद्धिभरितं एतमृषिं प्रावतम् प्रकर्षेणारक्षतम् । ताभिरिति गतम् ॥ क्षैत्रपत्येषु–ब्राह्मणादेराकृतिगणत्वात् कर्मण्यर्थे ष्यञ् ॥

चतुर्दशीमृचमाह–

याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् ।
याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१४॥

याभिः मृहाम् अतिथिऽग्वम् कशःऽजुवम् दिवःऽदासम् शम्बरऽहत्ये आवतम् याभिः पूःऽभिद्ये त्रसदस्युम् आवतम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे अश्विनौ, महाम् महान्तं अतिथिग्वम् अतिथिभिर्गन्तव्यं कशोजुवम् कश इत्युदकनाम, कशांसि उदकानि ज्योतिर्बलादिभरितानि जवते गच्छतीति कशोजूः तं एवंभूतं दिवोदासम् दिव्यकिङ्करं, एतं राजर्षिं शम्बरहत्ये शंबरस्यासुरस्य हनने याभिः ऊतिभिः आवतम् अरक्षतम् । याभिः ऊतिभिः पूर्भिद्ये पुराणि आसुराणि भिद्यन्तेऽस्मिन्निति पूर्भिद्यः सङ्ग्रामः तस्मिन् त्रसदस्युम् दस्यूनां त्रासकरं ऋषिं पुरुकुत्सपुत्रमित्याहुः आवतम् अरक्षतम् । ताभिरिति गतम् ॥

पञ्चदशीमृचमाह—

याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः ।
याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१५॥

याभिः वम्रम् विऽपिपानम् उपऽस्तुतम् कलिम् याभिः वित्तऽजानिम् दुवस्यथः याभिः विऽअश्वम् उत पृथिम् आवतम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

याभिः ऊतिभिः वम्रम् ऋषिं विखनसः पुत्रमिति प्राहुः, विपिपानम् विशेषेण रसं पिबन्तं अरक्षतम् । तथा उपस्तुतम् समीपस्थैः स्तुतं एतमृषिं, वित्तजानिम् वित्ता लब्धा जाया येन तं कलिम् कलयन्तं प्रेरयन्तं यजनायान्यानिति शेषः, एतमृषिं याभिः ऊतिभिः दुवस्यथः परिचरथः रक्षथ इत्यर्थः । याभिः ऊतिभिः व्यश्वम् विगताश्वं ऋषिं उत अपि च पृथिम् पृथुलं, एतमृषिं आवतम् अरक्षतम् । ताभिरिति गतम् ॥ वित्तजानिम्—समासान्तो निङादेशः ॥

इति प्रथमस्य सप्तमे पञ्चत्रिंशो वर्गः

षोडशीमृचमाह—

याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः ।
याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतम् ॥१६॥

याभिः नरा शयवे याभिः अत्रये याभिः पुरा मनवे गातुम् ईषथुः याभिः

See Bhan

शारीः आजतम् स्यूमऽरश्मये ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे नरा नेतारौ अश्विनौ, पुरा पूर्वं याभिः ऊतिभिः शयवे शेते दैन्यभूमौ शयुः, तस्मै ऋषये गातुम् शोभनं पन्थानम् ईषथुः वाञ्छितवन्तौ युवाम्। तथा याभिः अत्रये ऋषये मनवे मन्त्रे ऋषये च याभिः ईषथुर्गातुम्। याभिः ऊतिभिः स्यूमरश्मये स्यूतः संबद्धो रश्मिर्ज्ञानकिरणो यस्य तस्मै ऋषये शारीः शरैर्वेणुविशेषैर्निष्पादिता इषूः आजतम् असुरान् प्रति प्रैरयतम्। ताभिरिति गतम् ॥ ईषथुः—इष इच्छायाम्, लिट्। शारीः—शरशब्दाद्विकारार्थे अञ्प्रत्ययः। स्यूमरश्मये—षिवु तन्तुसन्ताने, सिवेरौणादिको मन्प्रत्ययः ॥

सप्तदशीमृचमाह—

याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना।
याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतम् ॥१७॥

याभिः पठर्वा जठरस्य मज्मना अग्निः न अदीदेत् चितः इद्धः अज्मन् आ याभिः शर्यातम् अवथः महाऽधने ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

पठर्वा अविदितमस्य स्वरूपं, एष ऋषिः जठरस्य उदरोपलक्षितस्य शरीरस्य मज्मना बलेन, अन्तःशरीरबलेनेत्यर्थः। चितः काष्ठैरभिचितः इद्धः प्रदीपितः अग्निर्न अग्निरिव अज्मन् अज्मनि संग्रामे अदीदेत् अदीप्यत, तपोबलेन तेजोमयमभूच्छरीरमृषेः, तेन श्रमेण विना असुरान् युद्धे पराजितानकरोत्। एवं हे अश्विनौ, याभिः ऊतिभिः हेतुभूताभिः ऋषिः आ समन्तात् दीदेत्। अपि च शर्यातम् एतं मानवं महाधने महति संग्रामे याभिः अवथः रक्षथः। ताभिरिति पूर्ववत् ॥ अदीदेत्—दीदेतिः छान्दसो दीप्तिकर्मा ॥

अष्टादशीमृचमाह—

याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः।
याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥१८॥

याभिः अङ्गिरः मनसा निऽरण्यथः अग्रम् गच्छथः विऽवरे गोऽअर्णसः

याभिः मनुम् शूरम् इषा सम्ऽआवतम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे अङ्गिरः ऋषेरात्मन एवामन्त्रणमिति सायणः, अश्विनोरेव संबोधनमित्येके, वचनव्यत्ययः साधारणश्छान्दसः। हे अश्विनौ, युवां मनसा मनसैव करणभूतेन निरण्यथः नितरां रमयथः स्तोतॄन्। तथा गोअर्णसः चिद्रश्मिलक्षणानां गवां अर्णसः ज्योतिर्वलादिलक्षणानामपां च लाभे अङ्गिरोमुख्यैर्ऋषिभिः सहायैरिन्द्रेण प्राप्ये प्रसक्ते सति, विवरे वलाद्यसुरनिलयगुहाबिले याभिः ऊतिभिः सह अग्रम् पुरः गच्छथः। अपि च याभिः शूरम् पराक्रमशालिनं मनुम् ऋषिं इषा प्रेरणाशक्त्या समावतम् सम्यगरक्षतम्। ताभिरिति गतम्॥ निरण्यथः—वर्णव्यापत्त्या निरमयथ इत्यस्य रूपम्॥

एकोनविंशीमृचमाह—

याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम्।
याभिः सुदास ऊहथुः सुदेव्यं१ ताभिरू षु ऊतिभिरश्विना गतम् ॥१९॥

याभिः पत्नीः विऽमदाय निऽऊहथुः आ घ वा याभिः अरुणीः अशिक्षतम् याभिः सुऽदासे ऊहथुः सुऽदेव्यम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे अश्विनौ, याभिः ऊतिभिः विमदाय ऋषये पत्नीः जायां, वचनव्यत्ययः, न्यूहथुः वा नितरां वा प्रापितवन्तौ युवां, घ पदपूरणः, तथा याभिः ऊतिभिः अरुणीः अरुणवर्णा आरोचमाना गाः चिन्मरीचीः आ अशिक्षतम् आभिमुख्येन अदत्तम् तथा याभिः ऊतिभिः सुदासे राजर्षये सुदेव्यम् प्रशस्तं धनं इति सायणः सुतरां देवार्हं धनं ऊहथुः प्रापितवन्तौ युवाम्। ताभिरिति गतम्॥ सुदेव्यम्—दिगादित्वाद्यत्॥

विंशीमृचमाह—

याभिः शन्ताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम्।
ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतम् ॥२०॥

याभिः शन्ताती इति शम्ऽताती भवथः ददाशुषे भुज्युम् याभिः अवथः

याभिः अध्रिऽगुम् ओम्याऽवतीम् सुऽभराम् ऋतऽस्तुभम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे अश्विनौ, ददाशुषे दत्तवते यजमानाय याभिः ऊतिभिः शन्ताती शं सुखं तनुतः, सुखस्य कर्तारौ भवथः, याभिः ऊतिभिः भुज्युम् प्रसिद्धमेतं अवथः रक्षथः। याभिः अध्रिगुम् एतं प्रागुक्तलक्षणं अवथः। याभिः ऊतिभिः ऋतस्तुभम् ऋतं सत्यं स्तोभत्युच्चारयति ऋतस्तुप्, एतमृषिं ओम्यावतीम् ओम्या रक्षासुखं तद्युक्तां सुभराम् सुखेन भरणीयां संपदं प्रापयथः, ताभिरिति गतम् ॥ ददाशुषे–दाशृ दाने, लिटः क्वसुः ॥

इति प्रथमस्य सप्तमे षट्त्रिंशो वर्गः

एकविंशीमृचमाह—

याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम्।
मधु प्रियं भरथो यत्सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतम् ॥२१॥

याभिः कृशानुम् असने दुवस्यथः जवे याभिः यूनः अर्वन्तम् आवतम् मधु प्रियम् भरथः यत् सरट्ऽभ्यः ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

याभिः ऊतिभिः कृशानुम् सोमपालं अग्निं असने इषुक्षेपणे दुवस्यथः परिचरथः, रक्षथः, सोमं देवेभ्यो दीयमानं देवद्वेषिलोकालभ्यं इषुप्रयोगेण पालयन्तमग्निं दुवस्यथः इत्यर्थः, इष्वसनं लाक्षणिकमेव, असुराणां दूरादेव क्षेपणमभिप्रेतम्। याभिः ऊतिभिः यूनः तरुणस्य, पुरुकुत्सस्येत्याहुः, अर्वन्तम् अश्वं प्राणोपलक्षणं, जवे वेगे प्रवृत्तं आवतम् अरक्षतम्। यत् मधु क्षौद्रं प्रियम् सर्वेषां भोग्यं भवति, तत् मधुरं मधु सरड्भ्यः मधुमक्षिकाभ्यः भरथः संपादयथः। मधुमक्षिकास्थानीयेभ्यः यजमानेभ्यो देवभक्तेभ्यः सर्वेषामुपभोगक्षमं रसं सोमं संपादयथ इति लाक्षणिकोऽर्थः। ताभिरिति गतम् ॥ असने–असु क्षेपणे, करणे ल्युट्। सरड्भ्यः–सृ गतौ, सर्तेरटिः ॥

द्वाविंशीमृचमाह—

याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः।
याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतम् ॥२२॥

याभिः नरम् गोषुऽयुधम् नृऽसह्ये क्षेत्रस्य साता तनयस्य जिन्वथः याभिः

रथान् अवथः याभिः अर्वतः ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

याभिः ऊतिभिः गोषुयुधम् चिद्रश्मिलक्षणासु गोषु जेतव्यासु विषये युध्यत इति गोषुयुत् तं नरम् नेतारं यजमानं नृषाह्ये नृभिः सोढव्ये युद्धे जिन्वथः प्रीणयथः, तथा क्षेत्रस्य उपभोगक्षमस्य वासगृहादेः तनयस्य सन्ततेः, विस्तारस्य साता संभजने जिन्वथः। अत्र चित्प्रवृत्तेराधारभूतं सर्वं भूम्यादिकं क्षेत्रं बोध्यम्। याभिः रथान् गमनसाधनभूतान् अवथः रक्षथः याभिः अर्वतः तदीयानश्वान् अवथः, ताभिरिति गतम् ॥

त्रयोविंशीमृचमाह—

याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम्।
याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतम् ॥२३॥

याभिः कुत्सम् आर्जुनेयम् शतक्रतू इति शतऽक्रतू प्र तुर्वीतिम् प्र च दभीतिम् आवतम् याभिः ध्वसन्तिम् पुरुऽसन्तिम् आवतम् ताभिः ऊम् इति सु ऊतिऽभिः अश्विना आ गतम् ॥

हे शतक्रतू बहुकर्माणौ अश्विनौ, आर्जुनेयम् अर्जुनो धवलः शुद्धसत्त्वमनःप्रधान इन्द्र उच्यते तस्य पुत्र इव संबन्धी कुत्सः उभयोः श्रीकृष्णपाण्डवार्जुनयोरिव सख्यं प्रागुपन्यस्तम्। तं कुत्सम् याभिः ऊतिभिः प्रावतम् प्रकर्षेणारक्षतम्। तथा तुर्वीतिम् तुर्वति हिनस्ति शत्रूनिति तुर्वीतिः तं दभीतिम् च दभ्नोतेः, शत्रूणां दमयितारं च याभिः प्रावतम् प्रकर्षेणारक्षतम्। ध्वसन्तिम् गतिमन्तं (ध्वंसु गतौ च) एतं पुरुषन्तिम् पुरु बहु सनोति ददातीति पुरुषन्तिर्बहुदाता तं आवतम् अरक्षतम्। ताभिरिति गतम् ॥

चतुर्विंशीमृचमाह—

अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम्।
अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ॥२४॥

अप्नस्वतीम् अश्विना वाचम् अस्मे इति कृतम् नः दस्रा वृषणा मनीषाम् अद्यूत्ये अवसे नि ह्वये वाम् वृधे च नः भवतम् वाजऽसातौ ॥

हे अश्विना, अश्विनौ, अस्मे अस्माकं वाचम् अप्नस्वतीम् अप्नः कर्मनाम, कर्मयुक्तां, वीर्यवतीमित्यर्थः कृतम् कुरुतम्। तथा नः अस्माकं मनीषाम् बुद्धिं "अप्नस्वतीं कृतम्"। हे दस्रा दस्रौ शत्रूणामुपक्षपयितारौ, वृषणा वर्षितारावभीष्टानां, अद्यूत्ये द्यूतरहिते साधुवृत्ते कर्मणि अवसे रक्षणाय वाम् युवां नि ह्वये नितरामाह्वयामि। वाजसातौ वाजस्य समृद्धेः सातौ लाभे निमित्ते नः अस्माकं वृधे च वर्धनाय च भवतम्। अत्र "अद्यूत्ये द्योतनरहिते प्रकाशनरहिते रात्रेः पश्चिमे यामे" इति सायणः॥

पञ्चविंशीमृचमाह—

द्युभि॑र॒क्तुभि॒ः परि॑ पातम॒स्मानरि॑ष्टेभिरश्विना॒ सौभ॑गेभिः।
तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒ः सिन्धु॑ः पृथि॒वी उ॒त द्यौः॥२५॥

द्युऽभिः अ॒क्तुऽभिः परि॑ पा॒त॒म् अ॒स्मान् अरि॑ष्टेभिः अ॒श्वि॒ना॒ सौभ॑गेभिः
तत् नः मि॒त्रः वरु॑णः म॒म॒ह॒न्ता॒म् अदि॑तिः सिन्धु॑ः पृ॒थि॒वी उ॒त द्यौः॥

हे अश्विना अश्विनौ, द्युभिः दिवसैः अक्तुभिः रात्रिभिश्च सर्वदा अस्मान् परिपातम् परितो रक्षतम्। तथा अरिष्टेभिः अहिंसितैः अक्षपितैः सौभगेभिः सुभगत्वैः सौभाग्यैः अस्मान् रक्षतम्। यदस्माभिः प्रार्थितं तत् मित्रादयः षट् देवताः ममहन्ताम् पूजयन्तु॥

इति प्रथमस्य सप्तमे सप्तत्रिंशो वर्गः

प्रथमाष्टके सप्तमोऽध्यायः समाप्तः

अथाष्टमोऽध्याय आरभ्यते। प्रथमे मण्डले षोडशेऽनुवाके सप्त सूक्तानि गतानि। इदमिति विंशत्यृचं अष्टमं सूक्तम्। कुत्स ऋषिस्त्रिष्टुप् छन्द उषो देवता द्वितीयार्धर्चस्य रात्रिरपि॥

तत्र प्रथमामृचमाह—

इ॒दं श्रेष्ठं॒ ज्योति॑षां॒ ज्योति॒राग॑ाच्चि॒त्रः प्र॑के॒तो अ॑जनिष्ट॒ विभ्वा॑।
यथा॒ प्रसू॑ता सवि॒तुः स॒वायँ॑ ए॒वा रात्र्यु॒षसे॒ योनि॑मारैक्॥१॥

इ॒द॒म् श्रेष्ठ॑म् ज्योति॑षाम् ज्योति॑ः आ अ॒गा॒त् चि॒त्रः प्र॒ऽके॒तः अ॒ज॒नि॒ष्ट॒ विऽभ्वा यथा प्रऽसू॑ता स॒वि॒तुः स॒वाय॑ ए॒व रात्री॑ उ॒षसे॑ योनि॑म् अ॒रै॒क्॥

ज्योतिषाम् द्योतमानानां सर्वेषां ज्योतिषां मध्ये इदम् प्रत्यक्षभूतं उषआख्यं ज्योतिः

चित्रप्रभातोदयज्योतिः श्रेष्ठं प्रशस्यतमं आगात् आगता प्रसन्ना भवति। तदागमने चित्रः नानावर्णः प्रकेतः तदीयः प्रकृष्टज्ञानरश्मिः विभ्वा विभुत्वेन (भावार्थकः) व्यापनेन, व्याप्तिगुणविशिष्टः अजनिष्ट प्रादुर्भूतः। यथा येन प्रकारेण प्रसूता स्वयं उत्पन्ना रात्रिगर्भात् सवितुः सवाय सूर्यस्य जन्मने प्रभवत्युषाः एव एवं, तथा रात्री रात्रिरपि उषसे उषसो जन्मने योनिम् आत्मनो गर्भं आरैक् आरेचितवती, रात्रिः स्वगर्भस्थामुषसं बहिरागमयत्। एवमेवोषोगर्भात् सूर्योद्भवः। सङ्केतार्थानुसारेण अहःसूर्यरात्र्युषसां स्वरूपाणि प्रागुपन्यस्तानि (१.१३.७)॥ आरैक्–रिचिर् विरेचने, लङि बहुलं छन्दसीति विकरणस्य लुक्॥

द्वितीयामृचमाह—

> रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः।
> समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने॥२॥

रुशत्ऽवत्सा रुशती श्वेत्या आ अगात् अरैक् ऊम् इति कृष्णा सदनानि अस्याः समानबन्धू इति समानऽबन्धू अमृते इति अनूची इति द्यावा वर्णम् चरतः आमिनाने इत्याऽमिनाने॥

रुशद्वत्सा रुशद्दीप्तः वत्सः ऋतज्योतिरात्मकः सूर्यः यस्याः सा श्वेत्या श्वेतवर्णा, उषसो नामेदं, रुशती दीप्ता सती आगात् आगतवती। अत्रेदमवधेयम्–साधारणी मानुषी लौकिकी प्रज्ञा निशा भवति यत्र सत्यप्रकाशो न वर्तते, अपि तु तस्यामेव रात्र्यामन्तर्वर्तमानः सूर्यः सत्यज्योतिः तद्गर्भान्निर्गतो भवति। अथ स्पष्टो भवेदुषस्यसूक्तरहस्यार्थः। उषस्यागतायां कृष्णा रात्रिः, उ इति पदपूरणः, अस्याः उषसः सदनानि वासस्थानानि आरैक् आरेचितवती, समन्तान्निर्मुक्तवती। रात्रावन्तर्हिताः सर्वाश्च भूमयः भूरादिलोकभूमिकाः उषसः प्रकाशलाभाय रात्रिपदवेदनीयायाः साधारणप्रज्ञावस्थायाः निर्मुक्ताः विस्पष्टा अभवन्नित्यर्थः। अपि च एते रात्र्युषसौ समानबन्धू समानः बन्धुः सूर्यः ययोस्ते, सूर्येण हि संबद्धा रात्रिः तथोषाश्च, अमृते नाशरहिते अनूची अन्वञ्चन्त्यौ रात्रिमनुसृत्य उषा इति क्रमेण गच्छन्त्यौ वर्णम् स्वकीयं रूपं आमिनाने हिंसन्त्यौ श्वेतेन उषोवर्णेन कृष्णो नैशवर्णो हिंसितो भवत्येव, तथा रात्र्या उषोरूपं च ग्रस्तं भवति। एवंभूते उभे अपि द्यावा द्योतमानेन नभसा चिदाकाशेन पथा चरतः पर्यायेण गच्छतः॥ श्वेत्या–श्विता वर्णे, अस्मात् ण्यन्तादचो यदिति यत्। अनूची–अनुपूर्वादञ्चतेः क्विन्। आमिनाने–मीञ् हिंसायाम्, क्रैयादिकः, शानच्॥

तृतीयामृचमाह—

समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे ।
न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥ ३ ॥

समानः अध्वा स्वस्रोः अनन्तः तम् अन्याऽअन्या चरतः देवशिष्टे इति देवऽशिष्टे न मेथेते इति न तस्थतुः सुमेके इति सुऽमेके नक्तोषसा सऽमनसा विरूपे इति विऽरूपे ॥

स्वस्रोः साहचर्योपलक्षणमिदं, भगिन्योः अध्वा पूर्वोक्तः सञ्चारमार्गः समानः तुल्यः, एक एव अनन्तः अनवधिक आकाशश्चिन्मयः । तम् मार्गं देवशिष्टे देवेन सवित्रा अनुशिष्टे शिक्षिते सत्यौ अन्याऽअन्या एकैका चरतः क्रमेण गच्छतः । अपि च सुमेके सुदीप्ते, रात्रावपि दीप्तेरन्तर्हितत्वादुपपद्यतेऽयमर्थः । सायणस्तु बहुधा ब्रूते । "अत्र शोभनप्रजनने इति, सुमेकः सुदीप्त इति (४.६.३) सुमेके शोभनकर्माणौ शोभनमेहने वा परिचरणकुशले इत्यर्थः" इति । शोभनकर्माणौ एते नक्तोषासा रात्रिरुषाश्च विरूपे विरुद्धरूपे तमःप्रकाशरूपत्वात्, एवंभूते अपि समनसा समानमनस्के, ऐकमत्यसंपन्ने न मेथेते परस्परं न हिंस्तः, अत एव अमृते नित्ये सत्यौ न तस्थतुः चरत एव ॥ अन्याऽअन्या—कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः । मेथेते—मेथृ हिंसने । सुमेके—मिह सेचने, भावे घञ्, व्यत्ययेन ह्रस्व कः ॥

चतुर्थीमृचमाह—

भास्वती नेत्री सूनृतानामचेति चित्रा वि दुरो न आवः ।
प्रार्प्या जगद्व्यु नो रायो अख्यदुषा अजीगर्भुवनानि विश्वा ॥ ४ ॥

भास्वती नेत्री सूनृतानाम् अचेति चित्रा वि दुरः नः आवरित्यावः प्रऽअर्प्य जगत् वि ऊम् इति नः रायः अख्यत् उषाः अजीगः भुवनानि विश्वा ॥

भास्वती प्रकाशनयुक्ता सूनृतानाम् शोभनसत्यानां वाचां नेत्री प्रापयित्री, चोदयित्रीत्यर्थः उषाः अचेति अज्ञायि, ज्ञाता भवति । सा चित्रा चित्रवर्णा नः अस्माकं दुरः द्वाराणि पिहितद्वाराणां लोककक्ष्याभूमिकानां इत्यर्थः, व्यावः व्यवृणोत्, चित्प्रभाते सूनृतवाचां स्फुरणं, भूरादिलोककक्ष्याद्वारोद्घाटनं च भवतः, उ पादपूरणः । अपि च जगत् सर्वं भुवनं प्रार्प्य प्रकाशं

गमयित्वा नः अस्माकं रायः धनाय, दिव्यायोपभोगाय, विभक्तिव्यत्ययः, व्यख्यत् विशेषेण प्रकाशितवती। एवंभूता उषाः विश्वा भुवनानि सर्वाणि भुवनानि अजीगः स्वमुखान्निर्गमयति, तमसि लीनानि स्वभासा प्रकाशतां गमयति ॥ आवः–वृञ् वरणे, लुङ्, मन्त्रे घसेति च्लेर्लुक्। प्राप्य–ऋ गतौ, णौ अर्तिह्रीत्यादिना पुक्। अख्यत्–ख्या प्रकथने, लुङ्। अजीगः–गॄ निगरणे, लङि तिपि छन्दसि विकरणस्य श्लुः, अभ्यासस्येत्वादिश्छान्दसः ॥

पञ्चमीमृचमाह—

जिह्मश्ये३ चरितवे मघोन्याभोगय इष्टये राय उ त्वम् ।
दभ्रं पश्यद्भ्य उर्विया विचक्ष उषा अजीगर्भुवनानि विश्वा ॥५॥

जिह्मऽश्ये चरितवे मघोनी आऽभोगये इष्टये राये ऊम् इति त्वम् दभ्रम् पश्यत्ऽभ्यः उर्विया विऽचक्षे उषाः अजीगः भुवनानि विश्वा ॥

मघोनी धनवती, विचित्रसंपन्ना उषाः जिह्मश्ये जिह्मं वक्रं शयानाय ऋजुवर्तनरहितं अलसं जनं चरितवे सन्मार्गचरणाय व्युच्छन्ती भवति। एष चित्रप्रभातप्रभावः। त्वम् अयमेकशब्दपर्यायः, एकं प्रति आ भोगये आभोग्याय देवदत्तस्य धनस्योपभोगाय, तथा अपरं प्रति इष्टये यजनाय तथा अन्यं प्रति राये धनाय व्युच्छन्ती भवति। उशब्दः समुच्चये, उ अपि च दभ्रम् अल्पं पश्यद्भ्यः अचिन्मयान्धकारावृतेभ्यः अल्पदृष्टिभ्यः उर्विया विचक्षे विशालदर्शनाय उर्वी विस्तीर्णा उषाः विश्वा भुवनानि अजीगः सर्वाणि भुवनानि स्वमुखान्निर्गमयति ॥ जिह्मश्ये–जिह्मं शेते इति जिह्मशीः तस्मै। आभोगये–आभोगशब्दाच्चतुर्थ्येकवचने यकारोपजनः। उर्विया–उर्वीशब्दादुत्तरस्य सोः डियाजादेशः। विचक्षे–विपूर्वात् चक्षिङ्धातोः संपदादिलक्षणो भावे क्विप् ॥

इति प्रथमस्याष्टमे प्रथमो वर्गः

षष्ठीमृचमाह—

क्षत्राय त्वं श्रवसे त्वं महीया इष्टये त्वमर्थमिव त्वमित्यै ।
विसदृशा जीविताभिप्रचक्ष उषा अजीगर्भुवनानि विश्वा ॥६॥

क्षत्राय त्वम् श्रवसे त्वम् महीयै इष्टये त्वम् अर्थम्ऽइव त्वम् इत्यै विऽसदृशा जीविता अभिऽप्रचक्षे उषाः अजीगः भुवनानि विश्वा ॥

क्षत्राय वीरबलाय त्वम् एकं प्रति व्युच्छन्ती उषा इति शेषः। तथा श्रवसे श्रवणाय दिव्यावेशगर्भिताय त्वम् एकं प्रति, तथा महीयै इष्टये महत्यै इष्टये, महते यजनाय त्वम् एकं प्रति, अर्थमिव अपेक्षितमर्थं प्रति इत्यै गमनाय त्वम् एकं प्रति व्युच्छन्ती, तथा विसदृशा विभिन्नानि नानाविधानि जीविता जीवितानि, जीवानां तत्तत्स्वभावानुरूपाः भिन्नभिन्नप्रवृत्तीः अभिप्रचक्षे आभिमुख्येन प्रकाशयितुं व्युच्छन्ती उषाः अजीगः भुवनानि विश्वा पूर्ववत्॥ महीयै—मह्यै, महेरिन् सर्वधातुभ्य इतीन्प्रत्ययः, ततो ङीष्, छान्दस ईकारोपजनः। अभिप्रचक्षे—चक्षेः तुमर्थे सेन्प्रत्ययः॥

सप्तमीमृचमाह—

एषा दिवो दुहिता प्रत्यदर्शि व्युच्छन्ती युवतिः शुक्रवासाः।
विश्वस्येशाना पार्थिवस्य वस्व उषो अद्येह सुभगे व्युच्छ॥७॥

एषा दिवः दुहिता प्रति अदर्शि विऽउच्छन्ती युवतिः शुक्रऽवासाः
विश्वस्य ईशाना पार्थिवस्य वस्वः उषः अद्य इह सुऽभगे वि उच्छ॥

दिवः स्वर्लोकस्य दुहिता तदुद्भवात् दुहितृस्थानीया उषाः एषा व्युच्छन्ती सर्वं प्रकाशयन्ती तमोवर्जनेन, प्रत्यदर्शि प्रत्यक्षं दृष्टा भवति। कीदृशी? युवतिः नित्ययौवना शुक्रवासाः ज्योतिर्वसना, निर्मलदीप्तिरित्यर्थः, तथा विश्वस्य सर्वस्य पार्थिवस्य पृथिवीसंबन्धिनः वस्वः वसुनः धनस्य भोग्यस्य सर्वस्य ईशाना ईश्वरी। एवंभूते सुभगे शोभनभाग्योपेते, हे उषः, इह अत्र मयि अद्य इदानीं व्युच्छ अचित्तमो वर्जयित्वा प्रकाशस्व॥

अष्टमीमृचमाह—

परायतीनामन्वेति पाथ आयतीनां प्रथमा शश्वतीनाम्।
व्युच्छन्ती जीवमुदीरयन्त्युषा मृतं कं चन बोधयन्ती॥८॥

पराऽयतीनाम् अनु एति पाथः आऽयतीनाम् प्रथमा शश्वतीनाम्
विऽउच्छन्ती जीवम् उत्ऽईरयन्ती उषाः मृतम् कम् चन बोधयन्ती॥

ऋतज्योतिषः सूर्यस्य प्रादुर्भावात् प्राक् बहुधा चित्रप्रभातं भवति अन्तर्याजिनः। अत एव बह्वीनामुषसां प्रादुर्भावः कीर्त्यते वेदे। परायतीनाम् परागच्छन्तीनां अतीतानां उषसां पाथः

मार्गं अन्वेति अनुसरति इदानीमुषाः । तथा आयतीनाम् आगच्छन्तीनां, इतःपरं आगमिष्यन्तीनां शश्वतीनाम् नित्यानां क्षयरहितानां बह्वीनां प्रथमा आद्या अद्यतनी उषाः व्युच्छन्ती तमोवर्जनेन भासमाना जीवम् जीवन्तमात्मानं उदीरयन्ती ऊर्ध्वं दिवं प्रति प्रेरयन्ती मृतम् मरणधर्मग्रस्तं, अमर्त्यजीवप्रकाशरहितं कञ्चन कमपि धन्यं पुरुषं बोधयन्ती प्राप्तचित्प्रबोधं कुर्वती प्रवर्तते ॥ परायतीनाम्—इण् गतौ, लटः शतृ, इणो यण्, उगितश्चेति ङीप् ॥

नवमीमृचमाह—

उषो यद्ग्निं समिधे चकर्थ वि यदावश्चक्षसा सूर्यस्य ।
यन्मानुषान्यक्ष्यमाणाँ अजीगस्तद् देवेषु चकृषे भद्रमप्नः ॥९॥

उषः यत् अग्निम् सम्ऽइधे चकर्थ वि यत् आवः चक्षसा सूर्यस्य यत् मानुषान् यक्ष्यमाणान् अजीगरिति तत् देवेषु चकृषे भद्रम् अप्नः ॥

हे उषः, अग्निम् यजमाने जागरितं कविक्रतुं समिधे सम्यग्ज्वलनाय यत् चकर्थ यत् कर्म कृतवती, चित्प्रभाते अग्निरन्तः प्रज्वलितो भवति । अपि च सूर्यस्य ऋतज्योतिषः चक्षसा दर्शनेन, प्रकाशेन यत् व्यावः यत् व्यावृणोः, अचिद्रूपान्धकारस्यापनोदनेन यत् विश्वं प्रकाशं व्यावृतवती । अपि च यक्ष्यमाणान् यजनाय प्रवृत्तान् मानुषान् मनोर्जातान् मानवान् अजीगः पूर्वं तमोग्रस्तान् चित्प्रकाशेनोद्गीर्णानिवाकरोः तत् अप्नः उक्तं तत्त्रिविधमपि कर्म देवेषु देवानामर्थे, तेषु मध्ये भद्रम् कल्याणं चकृषे कृतवती । त्रीण्यपि औषस्यानि कर्माणि मानुष्यहितान्येव सन्त्यपि देवहितान्येव फलितानि भवन्ति । तद्भद्रं येन मनुष्यो देवप्रियमाचरति ॥ आवः—वृञ् वरणे, लुङ्, च्लेर्लुक् ॥

दशमीमृचमाह—

कियात्या यत्समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् ।
अनु पूर्वाः कृपते वावशाना प्रदीध्याना जोषमन्याभिरेति ॥१०॥

कियति आ यत् समया भवाति याः विऽऊषुः याः च नूनम् विऽउच्छान् अनु पूर्वाः कृपते वावशाना प्रऽदीध्याना जोषम् अन्याभिः एति ॥

उषाः समया अव्ययं, सन्निहिता भवाति भवति इति यत् यदेतत् कियति तत् किंप्रमाणे काले प्रवृत्तं समाप्तं चेति आ प्रश्नार्थकः । वस्तुतः उषस आनन्त्यात् चित्प्रभातस्य कालातीत-

त्वात्, कालत इयत्तावच्छेदो नास्तीति भावः। अत एवाह। याः उषसः व्यूषुः व्युष्टाः पुरा नूनम् च अवश्यं इतः परं याः व्युच्छान् याः व्युष्टा भविष्यन्ति, तत्र पूर्वाः अतीताः व्युष्टाः उषसः वावशानाः कामयमानाः अद्यतनी उषाः अनुकृपते अनुकल्पते समर्था भवति। अतीतायाः उषसोऽनुसारेण प्रकाशाय प्रभवतीत्यर्थः। तथा प्रदीध्याना प्रदीप्यमानोषाः अन्याभिः उषोभिः जोषम् सह एति संगच्छते। बहुषु चित्रप्रभातेषु पूर्वापरविरोधं विना प्रभातानां सर्वत्र परस्पर-सद्योगमूलकः संवादो वर्तते इति विवक्षा॥ कियति–किं प्रमाणमस्येति कियान्, तस्मिन्। भवाति–लेट्याडागमः। व्यूषुः–विपूर्वो वसतिर्व्युच्छने वर्तते। व्युच्छान्–उच्छी विवासे, लेट्या-डागमः। कृपते–कृपू सामर्थ्ये, व्यत्ययेन शः। प्रदीध्याना–दीधीङ् दीप्तिदेवनयोः, लटः शानच्, अदादित्वाच्छपो लुक्॥

इति प्रथमस्याष्टमे द्वितीयो वर्गः

एकादशीमृचमाह—

ईयुष्टे ये पूर्वतरामपश्यन्व्युच्छन्तीमुषसं मर्त्यासः।
अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्यान्॥११॥

ईयुः ते ये पूर्वऽतराम् अपश्यन् विऽउच्छन्तीम् उषसम् मर्त्यासः अस्माभिः ऊम् इति नु प्रतिऽचक्ष्या अभूत् ओ इति ते यन्ति ये अपरीषु पश्यान्॥

ये मर्त्यासः ये मनुष्याः पूर्वतराम् उषसम् अत्यन्तप्राचीनं चित्रप्रभातं व्युच्छन्तीम् व्युष्टं भवत् अपश्यन् दृष्टवन्तः ते पुण्यपुरुषाः ईयुः गन्तव्यं स्थानं ऋतज्योतिः गताः, नात्र मृता इति विवक्षा, अविशेषान्मर्त्यानां मृतेः। ऋतप्राप्तिरेवोद्दिष्टा, तथा द्वादश्यामुषस ऋतज्योतिर्जन्मादि वर्ण्यते। अस्माभिः अधुनातनैः उ अपि नु इदानीं प्रतिचक्ष्या प्रत्यक्षं द्रष्टव्या अभूत् अजायत। तथा अपरीषु भाविनीषु उषस्सु ये पश्यान् पश्यन्ति, ते तेऽपि ओ आ उ इति निपातद्वये उ इत्यवधारणे आ यन्ति आगच्छन्त्येव ऋतस्थानम्, चित्रप्रभातमहिम्नोऽव्यभिचारित्वात् कालत्रयेऽपि उषसः प्रभावादृतज्योतिः प्राप्यत इत्यर्थः॥ ईयुः–एतेः लिट्॥

द्वादशीमृचमाह—

यावयद्द्वेषा ऋतपा ऋतेजाः सुम्नावरी सूनृता ईरयन्ती।
सुमङ्गलीर्बिभ्रती देववीतिमिहाद्योषः श्रेष्ठतमा व्युच्छ॥१२॥

यवयत्ऽद्वेषाः ऋतऽपाः ऋतेऽजाः सुम्नऽवरी सूनृताः ईरयन्ती सुऽमङ्गलीः

बिभ्रंती देवऽवींतिम् इह अद्य उषः श्रेष्ठऽतमा वि उच्छ ॥

यावयद्द्वेषाः यावयन्ति पृथक् कृतानि द्वेषांसि द्वेष्टॄणि रक्षःप्रभृतीनि यया सा ऋतपाः ऋतस्य ज्योतिषः पालयित्री ऋतेजाः ऋते प्राप्तव्ये निमित्तभूते जायते, प्रादुर्भूता सुम्नावरी सुम्नं सुखं तद्वती सूनृताः ईरयन्ती शोभनसत्याः वाचः प्रेरयन्ती 'चोदयित्री सूनृतानाम्'। सुमङ्गलीः सौमङ्गल्योपेता, अत्यन्तसौभाग्यं विवक्षितम्। देववीतिम् देवानां वीतिं आगतिं प्रादुर्भूतिमित्यर्थः, तां बिभ्रती वहन्ती हे उषः, श्रेष्ठतमा अतिप्रशस्या त्वं इह अत्र मयि अद्य इदानीं व्युच्छ व्युष्टा भव ॥ यावयद्द्वेषाः–यु मिश्रणे अमिश्रणे च, ण्यन्ताल्लटः शतृ। ऋतपाः–पा रक्षणे, विच्। सुम्नावरी–मत्वर्थीयो वनिप्, नस्य रेफः, दीर्घश्च छन्दसि। सुमङ्गलीः–गौरादिषु पाठात् ङीष् ॥

त्रयोदशीमृचमाह—

शश्वत्पुरोषा व्युवास देव्यथो अद्येदं व्यावो मघोनी।
अथो व्युच्छादुत्तराँ अनु द्यूनजरामृता चरति स्वधाभिः ॥१३॥

शश्वत् पुरा उषाः वि उवास देवी अथो इति अद्य इदम् वि आवः मघोनी अथो इति वि उच्छात् उत्ऽतरान् अनु द्यून् अजरा अमृता चरति स्वधाभिः ॥

देवी दिव्या द्योतमाना वा उषाः पुरा चिरन्तनात्कालात् शश्वत् नित्यं अव्यभिचरितं यथा भवति तथा व्युवास व्युष्टाऽभवत्। अथो अनन्तरं अद्य इदानीं मघोनी विचित्रधनोपेता इदम् विश्वं व्यावः विवासितं प्राप्तप्रकाशमकरोत्। अथो अनन्तरं उत्तरान् ऊर्ध्वतरान् ऊर्ध्वगतान् द्यून् दिवसान् अनु अनुलक्ष्य व्युच्छात् व्युच्छति। ऋषिदृष्टेः पूर्वं अप्रकाशानां ऊर्ध्वलोककक्ष्यागतानां इतः परं उषसः प्रसादात् प्रकाशतां गमिष्यतां जगतां दिवसाननुलक्ष्य उषा व्युच्छतीति रहस्यम्। सैषा अजरा जरारहिता अमृता मृतिरहिता स्वधाभिः स्वधारणसामर्थ्यप्रभाभिः सह चरति चरन्ती वर्तते, स्वधाभिः 'आत्मीयैस्तेजोभि'रिति सायणीये। साध्विदं, प्रायशः स्वधाशब्दः अन्नपर्यायः सायणव्याख्यायाम् ॥

चतुर्दशीमृचमाह—

व्य१ञ्जिभिर्दिव आतास्वद्यौदप कृष्णां निर्णिजं देव्यावः।
प्रबोधयन्त्यरुणेभिरश्वैरोषा याति सुयुजा रथेन ॥१४॥

वि अञ्जिऽभिः दिवः आतासु अद्यौत् अप कृष्णाम् निःऽनिजम् देवी आवरित्यावः प्रऽबोधयन्ती अरुणेभिः अश्वैः आ उषाः याति सुऽयुजा रथेन ॥

दिवः द्युलोकस्य आतासु आततासु विस्तीर्णासु दिक्षु उषाः अञ्जिभिः व्यञ्जकैः, ऋतप्रकाशाभिव्यञ्जकैः तेजोभिः व्यद्यौत् विद्योतते । देवी सोषाः कृष्णाम् तमसा कृतं कृष्णवर्णं निर्णिजम् रूपं अपावः अपावृणोत् स्वचित्प्रकाशेन अचिन्मयतमोरूपं तिरस्कृतवतीत्यर्थः । अपि च अरुणेभिः अरुणवर्णैः, क्रियाद्योतको लोहितवर्णः, अश्वैः प्राणबलोपलक्षणैः सुयुजा सम्यग्युक्तेन रथेन रंहणशीलेन गमनेन आ याति आगच्छति उषाः । किं कुर्वती ? प्रबोधयन्ती चिद्बोधं प्रकर्षेण पक्वानामापादयन्ती ॥ अद्यौत्—द्युत दीप्तौ, लुङ् ॥

पञ्चदशीमृचमाह—

आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना ।
ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वैत् ॥१५॥

आऽवहन्ती पोष्या वार्याणि चित्रम् केतुम् कृणुते चेकिताना ईयुषीणाम् उपऽमा शश्वतीनाम् विऽभातीनाम् प्रथमा उषाः वि अश्वैत् ॥

पोष्या पोषणसमर्थानि वार्याणि वरणीयानि दिव्यानि वैभवानि आवहन्ती आनयन्ती चेकिताना ऋतज्योतिः प्रति यजमानं प्रज्ञापयन्ती उषाः चित्रम् अद्भुतं केतुम् चिद्रश्मिं कृणुते करोति यजमानाय । सैषा ईयुषीणाम् पूर्वनिष्पन्नानां शश्वतीनाम् चिरन्तनीनां बह्वीनामुषसां उपमा उपमानभूता विभातीनाम् विशेषेण भासमानानां भाविनीनामुषसां प्रथमा आद्या व्यश्वैत् स्वतेजसा प्रवृद्धा भवति ॥ पोष्या—पुष पुष्टौ, पोषः, भावे घञ्, भवे छन्दसि यत्, शेर्लोपः । अश्वैत्—टु ओश्वि गतिवृद्ध्योः, लङि विकरणस्य लुक्, गुणे कृते व्यत्ययेनैत्वम् ॥

इति प्रथमस्याष्टमे तृतीयो वर्गः

षोडशीमृचमाह—

उदीर्ध्वं जीवो असुर्न आगादप प्रागात्तम आ ज्योतिरेति ।
आरैक्पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयुः ॥१६॥

उत् ईर्ध्वम् जीवः असुः नः आ अगात् अप प्र अगात् तमः आ ज्योतिः एति अरैक् पन्थाम् यातवे सूर्याय अगन्म यत्र प्रऽतिरन्ते आयुः ॥

पक्वपुरुषान् अन्तर्याजिनः संबोधयति। उदीर्ध्वम् उद्गच्छत ऊर्ध्वगमनं प्रति। नः अस्माकं असुः प्रेरयिता जीवः अन्तरवस्थितः जीवात्मा आगात् प्रबुद्धो बहिरागतवान् ऊर्ध्वं स्वयं गन्तुं, शरीरादिकं दिव्यं तेजो गमयितुम्। तमः अचिन्मयं तमः अप प्रागात् अपगतम्। ज्योतिः ऋतस्वरूपं आ एति प्रादुर्भूयागच्छति। अत्र सायणोक्तिरवधेया "परमात्मरूपतया स च जीवस्तदेव ज्योतिरागच्छति" इति। सूर्याय यातवे सूर्यस्य ऋतज्योतिषः गमनाय पन्थाम् मार्गं अरैक् विविक्तीकरोति पूर्वोक्तो जीव आत्मा। यस्य प्रबोधाद्बहिरागमने ऋतस्य पन्थाः विविक्तः अनृतात्पृथक् कृतो भवति। तत्र अगन्म गच्छामः, यत्र आयुः प्रतिरन्ते प्रवर्धन्ते, ऊर्ध्वासु ऋतभूमिषु वसतो दिव्यस्य मानवस्य आयुषः प्रवर्धनं, प्रसिद्धं, नैव क्षतिस्तत्र॥

सप्तदशीमृचमाह—

स्यूम॑ना वा॒च उदि॑यर्ति॒ वह्नि॒ः स्तवा॑नो रे॒भ उ॒षसो॑ विभा॒तीः।
अ॒द्या तदु॑च्छ गृण॒ते म॑घोन्य॒स्मे आयु॒र्नि दि॑दीहि प्र॒जाव॑त्॥१७॥

स्यूम॑ना वा॒चः उत् इ॒यर्ति॒ वह्नि॒ः स्तवा॑नः रे॒भः उ॒षसः॑ वि॒ऽभा॒तीः अ॒द्य तत् उ॒च्छ गृ॒ण॒ते म॒घो॒नि॒ अ॒स्मे इति॑ आयुः॑ नि दि॒दी॒हि॒ प्र॒जाऽव॑त्॥

वह्निः वोढा स्तोत्राणां रेभः स्तोता विभातीः विशेषेण भासमानाः उषसः चिन्मयीः स्तवानः स्तुवन् वाचः मन्त्रात्मिकायाः गिरः स्यूमना अनुस्यूतानि पूर्वोत्तरसंबन्धरूपबन्धनयुक्तानि उक्थानि उदियर्ति उच्चारयति, ऋतं प्रति उद्गमयति। तत् तस्मात् हे मघोनि मघवत्युषः गृणते स्तुवते मादृशाय मह्यं वा अद्य इदानीं तदुच्छ तत् प्रसिद्धं ज्योतिः विवासय विवृणुहि प्रकाशयेति यावत्। अस्मे अस्मभ्यं आयुः जीवनं प्रजावत् सन्तानयुक्तं, अक्षयजीवनमित्यर्थः नि दिदीहि नितरां प्रकाशय॥ स्यूमना—षिवु तन्तुसन्ताने, अन्यद्गतम्, शेलोपः। स्तवानः—ष्टुञ् स्तुतौ, शानचि अदादित्वात् शपो लुक्। गृणते—गॄ शब्दे क्रैयादिकः॥

अष्टादशीमृचमाह—

या गोम॑तीरु॒षसः॒ सर्व॑वीरा व्यु॒च्छन्ति॑ दा॒शुषे॒ मर्त्या॑य।
वा॒योरि॑व सू॒नृता॑नामुद॒र्के ता अ॑श्व॒दा अ॑श्नवत्सोम॒सुत्वा॑॥१८॥

याः गोऽम॑तीः उ॒षसः॑ सर्व॑ऽवीराः वि॒ऽउ॒च्छन्ति॑ दा॒शुषे॑ मर्त्या॑य वा॒योःऽइ॑व सू॒नृता॑नाम् उ॒त्ऽअ॒र्के ताः अ॒श्व॒ऽदाः अ॒श्न॒व॒त् सो॒म॒ऽसुत्वा॑॥

गोमतीः चिद्रश्मियुक्ताः सर्ववीराः सर्ववीर्योपेताः याः उषसः दाशुषे दत्तवते मर्त्याय यजमानाय व्युच्छन्ति व्युष्टाः भवन्ति तमोवर्जनेन प्रकाशन्ते, वायोरिव वायुवद्वेगेन प्रवर्तमानानां सूनृतानाम् शुभसत्यानां वाचां स्तुतीनां उदर्के भाविनि ऊर्ध्वं अर्चनीये समापने अश्वदाः अश्वानां प्राणबलोपलक्षणानां दात्री ताः उषसः याः पूर्वोक्ताः सोमसुत्वा सोमानामभिषोता यजमानः अश्नवत् प्राप्नोतु । प्रथमं गावः पश्चादश्वाः, प्रथमं ज्ञानं पश्चात्क्रियासामर्थ्याय प्राणबलमित्यवधेयम् ॥ अश्नवत्–अशू व्याप्तौ, लेट्यडागमः, व्यत्ययेन परस्मैपदम् । सोमसुत्वा–षुञ् अभिषवे, क्वनिप्, ह्रस्वस्य पितीति तुक् ॥

एकोनविंशीमृचमाह—

माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भाहि ।
प्रशस्तिकृद् ब्रह्मणे नो व्यु१च्छा नो जने जनय विश्ववारे ॥१९॥

माता देवानाम् अदितेः अनीकम् यज्ञस्य केतुः बृहती वि भाहि
प्रशस्तिऽकृत् ब्रह्मणे नः वि उच्छ आ नः जने जनय विश्वऽवारे ॥

हे उषः, त्वं देवानां माता उषसः चित्प्रभातस्य प्रादुर्भावात्परमेव देवानां ऋतविभवभूतानां प्रादुर्भावो यजमाने ऋषौ । अदितेः अनीकम् अखण्डचिद्रूपिणी सर्वदेवमाता अदितिः तस्याः मुखं भवत्युषाः, उषसा द्वारैव अदितेर्दर्शनं भवति । यज्ञस्य केतुः यजनस्य केतयित्री, यजनमार्गस्य ज्ञापयित्री, बृहती बृहच्छब्दवाच्य-ऋतसंबन्धिनी महती सती विभाहि प्रकाशस्व । अपि च प्रशस्तिकृत् अस्मद्विषये प्रशंसनं कुर्वती, तृप्ता सती नः अस्मदीयाय ब्रह्मणे मन्त्राय व्युच्छ व्युष्टा भव । विश्ववारे विश्वैर्वरणीये उषः, नः अस्मान् जने दैव्यजनमध्ये आजनय प्रादुर्भावय ॥

विंशीमृचमाह—

यच्चित्रमप्न उषसो वहन्तीजानाय शशमानाय भद्रम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥२०॥

यत् चित्रम् अप्नः उषसः वहन्ति ईजानाय शशमानाय भद्रम् तत्
नः मित्रः वरुणः ममहन्ताम् अदितिः सिन्धुः पृथिवी उत द्यौः ॥

चित्रम् अद्भुतं यत् अप्नः यत् कर्म, क्रियासामर्थ्यं उषसः वहन्ति आनयन्ति, तत् ईजानाय इष्टवते यजमानाय शशमानाय संभजमानाय भद्रम् ऋतप्राप्तिरूपं कल्याणं भवति । यदेवमस्माभिः

सूक्तेन प्रार्थितं तन्मित्रादयः षट् देवताः ममहन्तां मानितं कुर्वन्तु ॥ ईजानाय—यजतेः छन्दसि लिट्, लिटः कानच्, वचिस्वपीत्यादिना संप्रसारणम् । शशमानाय—शश प्लुतगतौ, ताच्छीलिकश्चानश् ॥

इति प्रथमस्याष्टमे चतुर्थो वर्गः

'इमा रुद्राये'त्येकादशर्चं नवमं सूक्तम्, कुत्सस्यार्षं दशम्येकादश्यौ त्रिष्टुभौ शिष्टा जगत्यो नव । रुद्रो देवता ॥

तत्र प्रथमामृचमाह—

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः ।
यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥१॥

इमाः रुद्राय तवसे कपर्दिने क्षयत्ऽवीराय प्र भरामहे मतीः यथा शम् असत् द्विऽपदे चतुःऽपदे विश्वम् पुष्टम् ग्रामे अस्मिन् अनातुरम् ॥

रुद्राय मध्यमस्थानाय मरुतां पित्रे देवाय, अस्य स्वरूपं प्राग्विचारितम् (पु. ४१७-४२०, ४३ सू.)। इमाः मतीः प्रकृताः मननीयाः स्तुतीः प्रभरामहे प्रकर्षेण निष्पादयामः । कीदृशाय? तवसे बलेन प्रवृद्धाय कपर्दिने जटिलाय, कपर्दश्चूडा तद्वते, प्रचण्डकर्मणो मरुद्गणस्य पितुरुग्ररूपत्वद्योतनायेदं विशेषणम् । क्षयद्वीराय क्षयन्तो नश्यन्तो वीराः शत्रवो यस्मिन् तस्मै । यथा येन प्रकारेण द्विपदे इह परत्र च स्थानयुक्ताय मनुष्याय चतुष्पदे भूरादिव्याहृतिचतुष्टयस्थानयुक्ताय यजमानाय च शम् शमसुखं असत् भवेत् तथा स्तुतीः कुर्मः । बाह्यार्थस्तु "द्विपदे मनुष्याय, चतुष्पदे गवाश्वादये" इति । अपि च अस्मिन् ग्रामे अस्मदीये संघे विश्वम् समस्तं भूतजातं पुष्टम् पोषयुक्तं अनातुरम् रोगरहितं भवतु ॥ असत्—लेट्यडागमः ॥

द्वितीयामृचमाह—

मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।
यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥२॥

मृळ नः रुद्र उत नः मयः कृधि क्षयत्ऽवीराय नमसा विधेम ते यत् शम् च योः च मनुः आऽयेजे पिता तत् अश्याम तव रुद्र प्रऽनीतिषु ॥

हे रुद्र, नः अस्मान् मृळ सुखय, उत अपि च नः अस्माकं मयः आत्यन्तिकं सुखं

आनन्दशब्दवाच्यं कृधि कुरु। क्षयद्वीराय विनश्यच्छत्रुवीराय ते तुभ्यं नमसा सर्वार्पणलक्षणेन नमस्कारेण विधेम परिचर्यां कुर्याम। अपि च पिता मनुः मनुष्याणां अस्माकमाद्यः उत्पादकः शम् च इष्टप्राप्तिरूपं शमं च योः अनिष्टस्य यावनं पृथक्करणं निवारणं च इति यत् यस्मै द्रव्याय आयेजे समन्तात् यजनं कृतवान्। तत् द्रव्यं, हे रुद्र, तव प्रणीतिषु प्रकर्षेण नयनेषु सत्सु वयम् अश्याम प्राप्नुयाम ॥

तृतीयामृचमाह—

अ॒श्याम॑ ते सुम॒तिं दे॑वय॒ज्यया॑ क्ष॒यद्वी॑रस्य॒ तव॑ रुद्र मीढ्वः।
सु॒म्ना॒यन्नि॒द्विशो॑ अ॒स्माक॒मा च॒रारि॑ष्टवीरा जुहवाम ते ह॒विः ॥३॥

अ॒श्याम॑ ते॒ सु॒ऽम॒तिम् दे॒व॒ऽय॒ज्यया॑ क्ष॒यत्ऽवी॑रस्य तव॑ रु॒द्र मी॒ढ्वः सु॒म्न॒ऽयन् इ॒त् विशः॑ अ॒स्माक॑म् आ च॒र अरि॑ष्टऽवीराः जु॒ह॒वा॒म॒ ते॒ ह॒विः ॥

हे मीढ्वः, सेक्तः, अभीष्टानां वर्षक, रुद्र, क्षयद्वीरस्य विनश्यत्प्रतिपक्षवीरस्य तव त्वदीयां सुमतिम् शोभनां अनुग्रहात्मिकां बुद्धिं ते तव संबन्धिनो वयं देवयज्यया देवयजनेन साधनेन अश्याम व्याप्नुयाम। त्वं च अस्माकम् विशः प्रजाः अभिलक्ष्य सुम्नायन्नित् सुखमिच्छन्नेव आचर अनुतिष्ठ। ततो वयमपि अरिष्टवीराः अरिष्टाः अहिंसिताः वीराः येषां ते, तथाभूताः सन्तः ते तुभ्यं हविः जुहवाम हवनं कुर्याम, अर्पयामार्पणीयम् ॥ देवयज्यया—छन्दसि यजेर्निष्टक्यैत्यादौ यप्रत्ययो निपातितः, स्त्रीलिङ्गता च। मीढ्वः—मिह सेचने। सुम्नायन्—सुम्नं परेषामिच्छति, छन्दसि परेच्छायामपि क्यच् ॥

चतुर्थीमृचमाह—

त्वे॒षं व॒यं रु॒द्रं य॑ज्ञ॒साधं॑ व॒ङ्कुं क॒विमव॑से॒ नि ह्व॑यामहे।
आ॒रे अ॒स्मद्दैव्यं॒ हेळो॑ अस्यतु सु॒म॒तिमिद्व॒यम॒स्या वृ॑णीमहे ॥४॥

त्वे॒षम् व॒यम् रु॒द्रम् य॒ज्ञ॒ऽसा॒धम् व॒ङ्कुम् क॒विम् अव॑से नि ह्व॒या॒म॒हे॒ आ॒रे अ॒स्मत् दैव्य॑म् हेळः॑ अ॒स्य॒तु॒ सु॒ऽम॒तिम् इ॒त् व॒यम् अ॒स्य आ वृ॒णी॒म॒हे॒ ॥

त्वेषम् दीप्तं यज्ञसाधम् यजनस्य साधयितारं वङ्कुम् कुटिलगतिकं, कुटिले राक्षसादौ मर्दयितव्ये कुटिलगमनमुपायो भवति। कविम् द्रष्टारं युक्तायुक्तकर्मणां, ईदृशं रुद्रम् महादेवं अवसे रक्षणाय वयम् निह्वयामहे नितरामाह्वयामः। सः दैव्यम् देवानां संबन्धिनं हेळः क्रोधं

अनादरं वा अस्मत् अस्मत्तः आरे दूरे अस्यतु क्षिपतु। अस्य रुद्रस्य सुमतिमित् अनुग्रहात्मिकां शोभनां बुद्धिमेव वयम् आ वृणीमहे आभिमुख्येन संभजामहे॥ यज्ञसाधम्-यज्ञं साधयतीति यज्ञसात्, तम्। वङ्कुम्-वकि कौटिल्ये, उणादिः उप्रत्ययः। वृणीमहे-वृङ् संभक्तौ, क्रैयादिकः॥

पञ्चमीमृचमाह—

दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा नि ह्वयामहे।
हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म छर्दिरस्मभ्यं यंसत्॥५॥

दिवः वराहम् अरुषम् कपर्दिनम् त्वेषम् रूपम् नमसा नि ह्वयामहे हस्ते बिभ्रत् भेषजा वार्याणि शर्म वर्म छर्दिः अस्मभ्यम् यंसत्॥

वराहम् वरं श्रेष्ठं अहः दिनं यस्य सः उत्कृष्टप्रकाशोपेतः तं अरुषम् आरोचमानं कपर्दिनम् जटिलं त्वेषम् दीप्तं रूपम् पूर्वोक्तविशेषणविशिष्टरूपयुक्तं रुद्रं नमसा नमस्कारेण दिवः दिवः सकाशात् निह्वयामहे नितरामाह्वयामः। सः हस्ते स्वकीये हस्ते वार्याणि वरणीयानि लोकोत्तराणि भेषजा भैषज्यानि बिभ्रत् धारयमाणः अस्मभ्यम् प्रपन्नेभ्यः शर्म सुखं आरोग्यात्मकं वर्म कवचं अनिष्टनिवारकं छर्दिः गृहं वासयोग्यं यंसत् यच्छतु॥ भेषजा-भिषज चिकित्सायां, कण्ड्वादिः, पचाद्यच्, शेर्लोपः। यंसत्-यम उपरमे, लेट्यडागमः, सिप् बहुलमिति सिप्॥

इति प्रथमस्याष्टमे पञ्चमो वर्गः

षष्ठीमृचमाह—

इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम्।
रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय तनयाय मृळ॥६॥

इदम् पित्रे मरुताम् उच्यते वचः स्वादोः स्वादीयः रुद्राय वर्धनम् रास्व च नः अमृत मर्तऽभोजनम् त्मने तोकाय तनयाय मृळ॥

मरुताम् गणभूतानां मध्यमस्थानानां देवानां पित्रे पालकाय जनकाय रुद्राय महते देवाय स्वादोः स्वादीयः रसवतोऽपि रसवत्तरं हर्षजनकं वर्धनम् स्तुत्यस्य पोषकं, स्तुत्या वर्धते हि देवता स्तोतरि यजमाने, एवंभूतं इदम् स्तोत्रात्मकं वचः वचनं उच्यते उच्चार्यते। हे अमृत मरणरहित रुद्रदेव, मर्तभोजनम् मर्तानां मनुष्याणां भोजनं यावत् भोगयोग्यं दिव्यममृतमन्नं भवति तावत् नः अस्मभ्यं रास्व देहि, अमृतेति संबोधनस्य प्रयोजनमवधेयं मर्तभोजनप्रार्थनायाम्, नेदं

शाल्यादिधान्यनिष्पादितमन्नम्। च अपि च त्मने आत्मने मह्यं तोकाय पुत्राय तनयाय तत्सन्तानाय च मृळ सुखं प्रयच्छ॥ रास्व—रा दाने, व्यत्ययेनात्मनेपदम्॥

सप्तमीमृचमाह—

मा नो॑ म॒हान्त॑मु॒त मा नो॑ अर्भ॒कं मा न॒ उक्ष॑न्तमु॒त मा न॑ उक्षि॒तम्।
मा नो॑ वधीः पि॒तरं॒ मोत मा॒तरं॒ मा नः॑ प्रि॒यास्त॒न्वो॑ रुद्र रीरिषः॥७॥

मा नः म॒हान्त॑म् उ॒त मा नः अ॒र्भ॒कम् मा नः उक्ष॑न्तम् उ॒त मा नः उ॒क्षि॒तम्
मा नः व॒धीः पि॒तर॑म् मा उ॒त मा॒तर॑म् मा नः प्रि॒याः त॒न्व॑ः रु॒द्र रि॒रि॒षः॥

मध्यमस्थानाद्रक्षःप्रभृतिभ्यः पीडा भवति मर्त्यानाम्। तत्र प्रभुर्देवो रुद्रः उग्रेण कर्मणा पीडानिवृत्तिं करोति। तादृशे उग्रकर्मणि मर्त्यानामल्पबलानां दुःखवेदना जायते, तदिदं अत्र मा हिंसीरिति प्रार्थनातात्पर्यम्। हे रुद्र, नः अस्माकं मध्ये महान्तम् वृद्धं मा वधीः मा हिंसीः। उत अपि च नः अस्माकं अर्भकम् बालं मा मा हिंसीः। तथा नः अस्माकं मध्ये उक्षन्तम् सेक्तारं युवानं मा मा हिंसीः। उत अपि च नः अस्माकं मध्ये उक्षितम् सिक्तं, स्त्रीषु निषिक्तमपत्यं मा मा हिंसीः। नः अस्माकं पितरम् जनकं मा मा हिंसीः। उत अपि च मातरम् मा मा हिंसीः। नः अस्माकं प्रियाः तन्वः स्नेहविषयभूताः तनूषु भवाः प्रजाः मा रीरिषः मा हिंसीः॥ वधीः—हन्तेर्लुङि वधादेशः। रीरिषः—रिष हिंसायां, ण्यन्ताल्लुङ्॥

अष्टमीमृचमाह—

मा न॑स्तो॒के तन॑ये॒ मा न॑ आ॒यौ मा नो॒ गोषु॒ मा नो॒ अश्वे॑षु रीरिषः।
वी॒रान्मा नो॑ रुद्र भामि॒तो व॑धीर्ह॒विष्म॑न्तः॒ सद॒मित्त्वा॑ हवामहे॥८॥

मा नः तो॒के तन॑ये मा नः आ॒यौ मा नः गोषु॑ मा नः अश्वे॑षु रि॒रि॒षः
वी॒रान् मा नः रु॒द्र भा॒मि॒तः व॒धीः ह॒विष्म॑न्तः सद॑म् इत् त्वा ह॒वा॒म॒हे॥

हे रुद्र, नः अस्माकं तोके तनये तोकादिविषये मा रीरिषः मा हिंसीः। तोकः पुत्रः, तनयस्तत्पुत्रः, नः आयौ आयुः मनुष्यः तद्विषये मा रीरिषः, नः गोषु विषये मा रीरिषः, नः अश्वेषु विषये मा रीरिषः। तथा हे रुद्र, नः वीरान् अस्मदीयान् विक्रान्तान् भामितः क्रुद्धः सन् मा वधीः। वयं च सदमित् सर्वदैव हविष्मन्तः हविर्भिर्युक्ताः सन्तः त्वा त्वां हवामहे आह्वयामः॥ भामितः—भाम क्रोधे, अधिकरणे कर्तरि क्तः॥

नवमीमृचमाह—

उप॑ ते॒ स्तोमा॑न्पशु॒पा इ॒वाक॑रं॒ रास्वा॑ पितर्मरुतां सु॒म्नम॒स्मे ।
भ॒द्रा हि ते॑ सुम॒तिर्मृ॑ळ॒यत्त॒माथा॑ व॒यमव॒ इत्ते॑ वृणीमहे ॥९॥

उप॑ ते॒ स्तोमा॑न् प॒शु॒पाःऽइ॑व आ अ॒क॒र॒म् रास्व॑ पि॒तः म॒रु॒ता॒म् सु॒म्नम् अ॒स्मे इति॑ भ॒द्रा हि ते॒ सु॒ऽम॒तिः मृ॒ळ॒यत्ऽत॑मा अथ॑ व॒यम् अवः॑ इत् ते॒ वृ॒णी॒म॒हे॒ ॥

हे रुद्र, ते तुभ्यं स्तोमान् स्तोत्ररूपान् उपाकरम् समर्पयामि । तत्र दृष्टान्तः—पशुपाः इव यथा गोपः स्वस्मै गोस्वामिना प्रातः समर्पितान् पशून् सायं प्रत्यर्पयति, तद्वत् । दैवबलाद्दैवानुग्रहाच्च सर्वथा दैवादेवागताः इमे स्तोमाः दैवायैव प्रत्यर्पिता भवन्ति । हे मरुताम् पितः, रुद्र, अस्मे अस्मभ्यं सुम्नम् सुखं रास्व देहि । ते त्वदीया सुमतिः शोभना बुद्धिः मृळयत्तमा अतिशयेन सुखयितृतमा । हि यस्मादेवं तस्मात् भद्रा कल्याणी, भजनीया वा । अथ अनन्तरं वयम् ते अवः इत् त्वदीयं रक्षणमेव वृणीमहे संभजामहे ॥ अकरम्—वर्तमाने लङ्, छान्दसम् ॥

दशमीमृचमाह—

आ॒रे ते॑ गो॒घ्नमु॒त पू॑रुष॒घ्नं क्षय॑द्वीर सु॒म्नम॒स्मे ते॑ अस्तु ।
मृ॒ळा च॑ नो॒ अधि॑ च ब्रूहि दे॒वाधा॑ च नः॒ शर्म॑ यच्छ द्वि॒बर्हा॑ः ॥१०॥

आ॒रे ते॒ गो॒ऽघ्नम् उ॒त पु॒रु॒ष॒ऽघ्नम् क्षय॑त्ऽवीर सु॒म्नम् अ॒स्मे इति॑ ते॒ अ॒स्तु मृ॒ळ च॒ नः॒ अधि॑ च॒ ब्रू॒हि॒ दे॒व॒ अध॑ च॒ नः॒ शर्म॑ य॒च्छ॒ द्वि॒ऽबर्हा॑ः ॥

हे क्षयद्वीर, विनश्यच्छत्रुवीरजन, ते त्वदीयं गोघ्नम् गोहननं उत पुरुषघ्नम् पुरुषहननं, हननसाधनं वा तदुभयं आरे अस्मत्तो दूरे भवतु । अपक्वस्य पुरुषस्य शीघ्रपरिपाकविधाने रुद्रेण कशाभिघातादयः प्रागुक्ताः (पृ० ४१९), रुद्रस्य उग्रकर्मणा धनभूतानां ज्ञानरश्मिभूतानां वा गवां, तद्वतां पुरुषाणां च क्षयः पीडा वा भवत्येव । तन्मास्तु इति प्रार्थ्यते । अस्मे अस्मभ्यं ते सुम्नम् त्वदीयं सुखं अस्तु भवतु । च अपि च हे देव, रुद्र, नः अस्मान् मृळ मृडय, सुखय । अपि च नः अस्मान् अधिब्रूहि च अधिवचनं पक्षपातेन वचनं ब्रूयाः । अध च अथापि द्विबर्हाः द्वयोः स्थानयोः इह मानुषे उत्तरत्र दैव्ये च स्थाने अस्मदर्थं वर्धितः सन् नः अस्मभ्यं शर्म शरणसुखं यच्छ देहि ॥ गोघ्नम्—हन हिंसागत्योः, घञर्थे भावे करणे वा कविधानम् । द्विबर्हाः—द्वयोः स्थानयोः बर्हते प्रवर्धते इति द्विबर्हाः, असुन् ॥

एकादशीमृचमाह—

अवोचाम नमो अस्मा अवस्यवः शृणोतु नो हवं रुद्रो मरुत्वान्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥११॥

अवोचाम नमः अस्मै अवस्यवः शृणोतु नः हवम् रुद्रः मरुत्वान् तत् नः मित्रः वरुणः ममहन्ताम् अदितिः सिन्धुः पृथिवी उत द्यौः ॥

अस्मै रुद्राय अवस्यवः रक्षणमिच्छन्तः वयं नमः नमस्कारोपलक्षणं सूक्तरूपं स्तोत्रं अवोचाम अवादिष्म। मरुत्वान् मरुद्भिर्युक्तः सः रुद्रः नः अस्मदीयं हवम् आह्वानं शृणोतु आकर्ण्याङ्गीकरोतु। यदस्माभिरुक्तं तत्सर्वं मित्रादयः षड्देवताः पूजयन्तु ॥ अवस्यवः—अव रक्षणे, भावे असुन्, सुप आत्मनः क्यच्, क्याच्छन्दसि उप्रत्ययः ॥

इति प्रथमस्याष्टमे षष्ठो वर्गः

'चित्रमि'ति षडृचं सूक्तं कुत्सस्यार्षं त्रैष्टुभं सूर्यदेवताकम् ॥

तत्र प्रथमामृचमाह—

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥१॥

चित्रम् देवानाम् उत् अगात् अनीकम् चक्षुः मित्रस्य वरुणस्य अग्नेः आ अप्राः द्यावापृथिवी इति अन्तरिक्षम् सूर्यः आत्मा जगतः तस्थुषः च ॥

यद्यपि सूक्तमिदं बाह्यसूर्यपरं आपाततो लक्ष्यते, तथापि ऋतज्योतिरात्मनः परमात्मनो दर्शने ऋषेर्वागियं प्रवर्तत इत्यसंशयम्। "यत्र नरो युगानि वितन्वते" इति द्वितीयस्यामुक्तिः स्थूलपक्षे न घटते। कथं बहुयुगयागवितननं उपपद्यते मुहूर्तमात्रे उषसि? बाह्यसूर्येऽपि यथोपपत्तिः स्यात् तथा ऋचामत्र व्यवस्थितिः। सर्वेश्वरप्रतिनिधिर्हि सूर्यः स्थूले जगति, अत एव स ऋतस्य परमस्य ज्योतिषः सङ्केतः ॥ देवानाम् ज्योतिर्मयदेहानां परमात्मनोऽशभूतानां चित्रम् अद्भुतं अनीकम् मुखं सर्वतेजःपुञ्जं वा उदगात् उदितमभूत्। कीदृशम्? मित्रस्य वरुणस्य अग्नेः एतेषां देवानां चक्षुः चक्षणं, दर्शनं प्रकाशनमित्यर्थः। तादृशं चित्रं ज्योतिः उदितं सत् द्यावापृथिवी दिवं च पृथिवीं च, अन्तरे ऊर्ध्वां चितिं अधरां चितिं च, आप्राः समन्तादपूरयत् स्वतेजसा। तथा अन्तरिक्षम् मध्यमस्थानं च "आप्राः" तच्चित्रं सूर्यः। सूर्यः

सर्वस्य प्रेरकः सर्वेश्वरः जगतः जङ्गमस्य तस्थुषः च स्थावरस्य च आत्मा स्वरूपम्, परमात्मन एव चराचरात्मकविश्वरूपत्वात् ॥ आप्राः—प्रा पूरणे, लङि पुरुषव्यत्ययः । जगतः—गमेर्द्वे चेति क्विप्, द्विर्वचनम् । तस्थुषः—तिष्ठतेर्लिटः क्वसुः ॥

द्वितीयामृचमाह—

सूर्यो॑ दे॒वीमु॒षसं॒ रोच॑माना॒ं मर्यो॒ न योषा॑म॒भ्ये॑ति प॒श्चात् ।
यत्रा॒ नरो॑ देव॒यन्तो॑ यु॒गानि॑ वितन्व॒ते प्रति॑ भ॒द्राय॑ भ॒द्रम् ॥ २ ॥

सूर्यः॑ दे॒वीम् उ॒षस॑म् रोच॑मानाम् मर्यः॑ न योषा॑म् अ॒भि ए॒ति प॒श्चात्
यत्र॑ नरः॑ दे॒व॒ऽयन्तः॑ यु॒गानि॑ वि॒ऽत॒न्व॒ते प्रति॑ भ॒द्राय॑ भ॒द्रम् ॥

सूर्यः उत्तमज्योतिरात्मा देवः देवीम् दिव्यां रोचमानाम् दीप्यमानां उषसम्, पश्चात् अभ्येति उषसः प्रादुर्भावात्परं तामभिलक्ष्य गच्छति । तत्र दृष्टान्तः—मर्यो न योषाम् यथा मनुष्यः शोभनाङ्गीं स्त्रियमनुगच्छति तद्वत् । उषसः चिन्मयत्वात् चित्प्रभातात्परं ऋतज्योतिर्दर्शनमवश्यम्भावीति विवक्षा । यत्र यस्मिन् चित्प्रभाते सति देवयन्तः देवं परं ज्योतिरिच्छन्तः, देवकामाः नरः नेतारो यजमानाः युगानि युगं कालवाचि, कालाध्वनोरत्यन्तसंयोगे द्वितीया, बहूनि नियतानि कालमानानि भद्राय निःश्रेयसाय भद्रम् प्रति कल्याणतमं ऋतं बृहत् उद्दिश्य वितन्वते विस्तारयन्ति यजनम्, यज्ञस्य तन्तुरूपवर्णनाद्वेदेषु ॥

तृतीयामृचमाह—

भ॒द्रा अश्वा॑ ह॒रितः॒ सूर्य॑स्य चि॒त्रा एत॑ग्वा अनु॒माद्या॑सः ।
न॒म॒स्यन्तो॑ दि॒व आ पृ॒ष्ठम॑स्थुः॒ परि॒ द्यावा॑पृथि॒वी य॑न्ति स॒द्यः ॥ ३ ॥

भ॒द्राः अश्वाः॑ ह॒रितः॑ सूर्य॑स्य चि॒त्राः एत॑ऽग्वाः अ॒नु॒ऽमाद्या॑सः न॒म॒स्यन्तः॑
दि॒वः आ पृ॒ष्ठम् अ॒स्थु॒ः परि॑ द्यावा॑पृथि॒वी इति॑ य॒न्ति॒ स॒द्यः ॥

यद्यप्यश्वाः प्राणबलोपलक्षणाः क्रियापरा एव भवन्ति, तथापि सूर्यस्य अश्वाः रश्मयः चिन्मयाः सन्तः क्रियादक्षाः क्रियानिष्पादका इति ज्ञेयम् । अत एव सूर्यतुरगविशेषणानि अत्र तद्गुणक्रियाबोधकानि भवन्ति । भद्राः कल्याणाः अश्वाः व्यापनशीलाः तुरगाः हरितः कान्तिमन्तः (हर्यतेः कान्तिकर्मणः) चित्राः नानावर्णाः, अनन्तगुणोपलक्षणम्, एवंभूताः सूर्यस्य सर्वप्रेरकस्योत्तमज्योतिषः एतग्वाः एतं एतव्यं प्रति ग्वाः गन्तारः अनुमाद्यासः अनुक्रमेण

मादनीयाः स्तुत्याः नमस्यन्तः स्वामिनं स्वाश्रयभूतं सूर्यं पूजयन्तः दिवः द्युलोकस्य पृष्ठम् उपरिप्रदेशं आ अस्थुः आस्थिताः। आस्थाय च द्यावापृथिवी द्यावापृथिव्यौ सद्यः तदानीमेव परियन्ति परितो गच्छन्ति व्याप्नुवन्ति। सूर्याश्वानां द्युलोकादुपरि दर्शनमात्रेण तेषां सर्वव्यापिगुणः प्रकाशो भवति॥ यद्ययं बाह्यः सूर्यः, अश्वाः प्रथमं पूर्वस्यां दिशि दृश्येरन्, न तु 'दिवः पृष्ठे'॥ अनुमाद्यासः–मदि स्तुतौ, अस्माण्ण्यन्ताद्चो यत्॥

चतुर्थीमृचमाह—

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै॥४॥

तत् सूर्यस्य देवऽत्वम् तत् महिऽत्वम् मध्या कर्तोः विऽततम् सम् जभार
यदा इत् अयुक्त हरितः सधऽस्थात् आत् रात्री वासः तनुते सिमस्मै॥

सूर्यस्य सर्वप्रेरकस्य सवितुः तत् देवत्वम् तदीश्वरत्वं, स्वातन्त्र्यद्योतकमिदं तन्महित्वम् तन्महत्त्वं यत् कर्तोः मध्या कर्मणः मध्ये विततम् स्वकीयं विस्तृतं किरणजालं सञ्जभार उपसंहरति। यथा चित्रभातानि बहूनि भवन्ति ऋतज्योतिर्दर्शनात्पूर्वं तथा ऋतज्योतिरपि बहुशः प्रादुर्भूय यजमानं परिपक्वमन्तेऽनुगृह्णातीति वैदिकयोगरहस्यम्। अत एव स सूर्यः स्वतन्त्रः स्वस्य योगिनो वा कर्मणः परिसमाप्तेः पूर्वं, कर्तव्यस्य मध्ये स्वीयं चिद्रश्मिसमूहं उपसंहृत्य पुनश्च योगिनोऽन्तर्याजिनः परिपाकाय कञ्चन कालं अनुपालयति। यदेत् यस्मिन्नेव काले हरितः कान्तिमतो रश्मीनश्वान् सधस्थात् तेषां सहस्थानात् रंहणशीलाद्रथात् आदाय अयुक्त स्वस्मिन्नेव संयुक्तानकरोत्, आत् अनन्तरमेव रात्री सत्यसूर्यप्रकाशाभावरूपा साधारणी लौकिकी मानुषप्रज्ञा सिमस्मै सर्वस्मिन् जगति, सप्तम्यर्थे चतुर्थी, वासः आच्छादयितृतमः सत्यावरणमन्धकारं तनुते विस्तारयति॥ मध्या–मध्यशब्दात् सप्तम्येकवचनस्य डादेशः। कर्तोः–करोतेरौणादिकस्तोसुन्प्रत्ययः। अन्ये गताः॥

पञ्चमीमृचमाह—

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति॥५॥

तत् मित्रस्य वरुणस्य अभिऽचक्षे सूर्यः रूपम् कृणुते द्योः उपऽस्थे

अनन्तम् अन्यत् रुशत् अस्य पाजः कृष्णम् अन्यत् हरितः सं भरन्ति ॥

तत् तदानीं ऋतप्रादुर्भावे मित्रस्य प्रीतिसौहार्दप्रधानस्य आदित्यस्य ऋतवैभवशालिनः तथा वरुणस्य सर्वपाशविमोचनस्य विभोरादित्यस्य ऋतमूर्तेश्च अभिचक्षे आभिमुख्येन द्योरुपस्थे स्वर्लोकस्योपस्थाने समीप इत्यर्थः, सूर्यः सर्वस्य प्रेरको भगवान् सविता रूपम् कृणुते स्वरूपप्रकाशकं तेजः करोति । अपि च अस्य सूर्यस्य हरितः कान्ताश्विन्मयाश्वाः अनन्तम् अवसानरहितं रुशत् दीप्यमानं पाजः बलं अन्यत् तमसोऽन्यत् तमोनिवारकं श्वेतवर्णं अहोलक्षणं सत्यप्रकाशमित्यर्थः, संभरन्ति निष्पादयन्ति, तथा अन्यत् श्वेतवर्णादितरत् कृष्णम् कृष्णवर्णं सत्याप्रकाशरूपं नैशं तमश्च संभरन्ति, प्रकाशाप्रकाशदशयोरुभयोः निर्वाहः सूर्यस्य हरितां सिद्धः ॥ अभिचक्षे–संपदादिलक्षणो भावे क्विप् ॥

षष्ठीमृचमाह—

अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात् ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥६॥

अद्य देवाः उत्ऽइता सूर्यस्य निः अंहसः पिपृत निः अवद्यात् तत् नः मित्रः वरुणः ममहन्ताम् अदितिः सिन्धुः पृथिवी उत द्यौः ॥

हे देवाः द्योतमाना ऋतरश्मयः, अद्य इदानीं सूर्यस्य उदिता उदितौ, उदये, ऋतप्रादुर्भावे सति अस्मान् अवद्यात् निन्द्यात् कर्मणः निः पिपृत निष्कृष्य रक्षत, तथा अंहसः पापात् निः पिपृत निष्कृष्य पालयत । यदिदमस्माभिरुक्तं सूक्ते तन्मित्रादयः षड्देवताः पूजयन्तु ॥ पिपृत–पॄ पालनपूरणयोः ॥

इति प्रथमस्याष्टमे सप्तमो वर्गः
प्रथमे मण्डले षोडशोऽनुवाकः समाप्तः

सप्तदशेऽनुवाके पञ्च सूक्तानि, तत्र 'नासत्याभ्यामि'ति पञ्चविंशत्यृचं प्रथमं सूक्तं, दीर्घतमसः पुत्रः कक्षीवानृषिः, त्रिष्टुप् छन्दः, अश्विनौ देवते ॥

तत्र प्रथमामृचमाह—

नासत्याभ्यां बर्हिरिव प्र वृञ्जे स्तोमाँ इयर्म्यभ्रियेव वातः ।

यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन ॥१॥

नासत्याभ्याम् बर्हिःऽइव प्र वृञ्जे स्तोमान् इयर्मि अभ्रियाऽइव वातः

यौ अर्भगाय विऽमदाय जायाम् सेनाऽजुवा निऽऊहतुः रथेन ॥

नासत्याभ्याम् अश्विभ्यां स्तोमान् स्तुतीः इयर्मि प्रेरयामि, संपादयामि । तत्र दृष्टान्तः— बर्हिरिव प्रवृञ्जे यथा अग्निकार्ये कश्चित् दर्भं प्रकर्षेण वृङ्क्ते, अन्यूनातिरिक्तं छिनत्ति, संपादयति तद्वत् । यथा च अभ्रियाऽइव वातः वायुः अभ्रेष्ववस्थिताः अपः वर्षणार्थं प्रेरयति तथाऽहं अश्विभ्यां स्तोमानियर्मि । कीदृशावश्विनौ? यौ अश्विनौ अर्भगाय अर्भकाय (छान्दसो गकारः) बालाय विमदाय ऋषये एतन्नाम्ने, विशिष्टमोदाय जायाम् भार्यां सेनाजुवा सेनायाः प्रेरकेण रथेन न्यूहतुः प्रापयामासतुः । अस्मिन् सूक्ते यानि अश्विनोः कर्माणि कथ्यन्ते तानि प्रायशः कौत्से सूक्ते (सू. ११२) च कथितानि । यदुक्तं तत्र रहस्यार्थस्य न क्षतिरैतिहासिकत्वाभ्युपगमे इति तदिहोत्तरत्रापि अवधातव्यम् । तस्मात् कथाः तदन्तरर्था वा नेहोपन्यस्यन्ते । विस्तरभयात्पदार्थमात्रदानेन, प्राग्बहुषु स्थलेषु कृतस्य विवरणस्य बलात् यथासंभवं धात्वर्थानुगमेन च रहस्यमुन्नेयं धीमद्भिः ॥ नासत्याभ्याम्—माधुच्छन्दसे सूक्ते पदार्थो विचारितः । प्रवृञ्जे—प्रवृङ्क्ते, तलोपः । इयर्मि—ऋ गतौ । सेनाजुवा—जु इति सौत्रो धातुः गत्यर्थः, अस्मादन्तर्भावितण्यर्थात् क्विप् । न्यूहतुः—वह प्रापणे ॥

द्वितीयामृचमाह—

वीळुपत्मभिराशुहेमभिर्वा देवानां वा जूतिभिः शाशदाना ।
तद्रासभो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय ॥२॥

वीळुपत्मऽभिः आशुहेमऽभिः वा देवानाम् वा जूतिऽभिः शाशदाना तत् रासभः नासत्या सहस्रम् आजा यमस्य प्रऽधने जिगाय ॥

वीळुपत्मभिः बलवद्भिरुत्पतनैः आशुहेमभिः शीघ्रगतिकैः वा समुच्चये एवंभूतैरश्वैः हे नासत्या देवानाम् जूतिभिर्वा इन्द्रादीनां प्रेरणाभिश्च शाशदाना शाशद्यमानयोः अत्यर्थं प्रेर्यमाणयोः युवयोः रासभः वाहनभूतः, सहनेन प्रख्यातः, शीघ्रगमनश्च, यमस्य सर्वस्य नियन्तुः विवस्वत्पुत्रस्य, त्रैलोक्यनियामकस्य प्रधने जेतव्यप्रकृष्टधनयुक्ते आजा आजौ संग्रामे तत् सहस्रम् अधिकं धनं जिगाय जित्वा अलभत ॥ अत्र अश्विवाहनस्य पराक्रमो वर्णितः । युद्धं तु ब्रह्माण्डे पिण्डाण्डे च असुरैः सह वर्तत एव । तत्र सर्वदेवाश्वप्रेरितयोरश्विनोः असुरविजये युद्धे स्वस्थतापादनादिकर्मणि वर्तमानेऽपि, तयोर्वाहनस्य सहिष्णुताप्रथितस्य शीघ्रगमनस्य प्रभावेण तत्र तत्र शत्रुषु गमनात् प्राप्तव्यस्य दिव्यधनस्य लाभः ॥ शाशदाना—शद्लृ शातने, अत्र गत्यर्थः,

अस्माद्यङन्ताल्लटः शानच्, श्यन्भावश्छन्दसि, तथा यलोपः षष्ठ्याः पूर्वसवर्णदीर्घश्च ॥

तृतीयामृचमाह—

तुग्रो॑ ह भु॒ज्युम॑श्विनोदमे॒घे र॒यिं न कश्चि॑न्ममृ॒वाँ अवा॑हाः ।
तमू॑हथुर्नौ॒भिरा॑त्म॒न्वती॑भिरन्तरिक्ष॒प्रुद्भि॒रपो॑दकाभिः ॥३॥

तुग्रः॑ ह॒ भु॒ज्युम् अ॒श्वि॒ना॒ उ॒द॒ऽमे॒घे र॒यिम् न कः॑ चि॒त् म॒मृ॒ऽवान् अव॑ अ॒हाः॒
तम् ऊ॒ह॒थुः॒ नौ॒भिः॑ आ॒त्म॒न्ऽव॒ती॑भिः अ॒न्त॒रि॒क्ष॒प्रुत्ऽभिः॑ अप॑ऽउद॒काभिः॥

प्रसिद्धामाख्यायिकामुदाहरन्ति पूर्वे । परं तु नौभिरित्यस्य त्रीणि विशेषणानि चरमपादे पठितानि सर्वाऽपि कथा गौणी, लाक्षणिकीति द्योतयेयुः । तथा उत्तरत्र त्रीण्यहानि तिस्रो रात्रयश्च गूढमर्थं व्यञ्जयन्ति ॥ ह प्रसिद्धौ, तुग्रः शत्रुभिः हिंसितोऽपि बलाढ्यः (तोजयतिः हिंसाबलादानादिषु) अन्नमयप्रधानः पुरुषः भुज्युम् भोगसमर्थं प्राणमयप्रधानं स्वीयं पुत्रभूतं पुरुषं उदमेघे उदकैर्मिह्यते सिच्यत इत्युदमेघः समुद्रः तस्मिन् अवाहाः पर्यत्याक्षीत्, तत्र दृष्टान्तः—ममृवान् म्रियमाणः कश्चित् लोभी रयिम् न धनमिव । यथा स धनं अनिच्छन्नेव जहाति तथा उक्तलक्षणं भुज्युं तुग्रः उक्तलक्षणः प्राणबलभूयिष्ठानां अपां राशौ क्षिप्तवान् । हे अश्विना, तम् तादृशं भुज्युं नौभिः तरणसाधनभूताभिः युवां ऊहथुः गन्तव्यं तीरं प्रापितवन्तौ । आश्विनकर्मसु भैषज्यं बलप्रदत्वं स्वास्थ्यविधानं शरीरादेर्दृढत्वसंपादनं, सर्वथा सुखप्रदानं च गणनीयानि । तथाविधा मन्त्रवर्णाः प्रागुदाहृताः (पृ. ११५) । कीदृशीभिर्नौभिः ? आत्मन्वतीभिः अश्विनोरात्मा स्वरूपं प्रकृतिर्वा तद्युक्ताभिः, तस्मान्नेमा भौतिक्यो जडा नावः, आश्विनवैभवमेव तरणसाधननौभूतं समपद्यत । अपि च अन्तरिक्षप्रुद्भिः अन्तरिक्षे मध्यमस्थाने प्राणानां महत्यायतने गन्त्रीभिः, तस्मान्नेमाः भौमसमुद्रगामिन्यो नावः । अपोदकाभिः इमाः आश्विन्यो नावः अप्सु प्लवन्ते, न तत्र निमज्जन्ति, अत एव अपगतोदकाभिरित्यर्थकं विशेषणम् ॥ ममृवान्—मृङ् प्राणत्यागे, लिटः क्वसुः । अहाः—ओहाक् त्यागे, पुरुषव्यत्ययः, सर्वमन्यत् छान्दसम् । आत्मन्वतीभिः—आत्मनो मतुप्, मादुपधाया इति वत्वं, अनो नुडिति नुट् । अन्तरिक्षप्रुद्भिः—प्रुङ् गतौ, क्विप् ॥

चतुर्थीमृचमाह—

ति॒स्रः क्ष॒पस्त्रिरहा॑ति॒व्रज॑द्भि॒र्नास॑त्या भु॒ज्युमू॑हथुः पत॒ङ्गैः ।
स॒मु॒द्रस्य॒ धन्व॑न्ना॒र्द्रस्य॑ पा॒रे त्रि॒भी रथैः॑ श॒तप॑द्भि॒ः षळ॑श्वैः ॥४॥

तिस्रः क्षपः त्रिः अहा अतिव्रजत्ऽभिः नासत्या भुज्युम् ऊहथुः पतङ्गैः
समुद्रस्य धन्वन् आर्द्रस्य पारे त्रिऽभिः रथैः शतपत्ऽभिः षट्ऽअश्वैः ॥

हे नासत्या, नासत्यौ, भुज्युम् पूर्वोक्तलक्षणं प्राणमयाम्बुनिधौ प्रक्षिप्तं तिस्रः क्षपः तिस्रो रात्रीः, त्रैलोक्यसंबन्धिमनःप्राणशरीरापेक्षया त्रिवृत्त्कताप्रकाशदशावद्योतकः रात्रिशब्दः, तथा त्रिः अहा त्रीण्यहानि, पूर्वोक्तवत् प्रकाशावस्थाद्योतनाय, एवं प्रकाशाप्रकाशदशे पर्यायेण वर्तेते वैदिके योगे। एवमहोरात्रत्रयं अतिव्रजद्भिः अतीत्य गच्छद्भिः पतङ्गैः पतद्भिः पक्षिभिरिव शीघ्रं गच्छद्भिः रथैरिति ग्राह्यं अश्वश्रवणात् ऊहथुः ऊढवन्तौ युवाम्। क्व? समुद्रस्य धन्वन् निरुदके प्रदेशे केवलप्राणमयाम्बुधावपि अन्नमयांशस्य वर्तनात्, तत्रैव रथगमनं युक्तम्, आर्द्रस्य पारे उदकेनार्द्रीभूतस्य समुद्रस्य तीरे त्रिभिः रथैः त्रिसंख्याभिप्राय उक्तः। कीदृशैः? शतपद्भिः शतसंख्याकैश्चक्रलक्षणैः पादैर्युक्तैः, अपि च षडश्वैः षड्भिरश्वैर्युक्तैः। एकैकस्य रथस्य द्वावश्वौ, अश्वद्वयं च प्राणबलभूयस्त्वेऽपि ज्ञानक्रियात्मकशक्तिद्वयसंकेतकं बोध्यम्॥ शतपद्भ्यः—शतं पादा येषां ते, पादशब्दस्यान्त्यलोपः समासान्तः, पादः पदिति पद्भावः॥

पञ्चमीमृचमाह—

अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे।
यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम्॥५॥

अनारम्भणे तत् अवीरयेथाम् अनास्थाने अग्रभणे समुद्रे यत् अश्विनौ
ऊहथुः भुज्युम् अस्तम् शतऽअरित्राम् नावम् आतस्थिऽवांसम्॥

हे अश्विनौ, अनारम्भणे आलम्बनरहिते, अत एव अनास्थाने आस्थातुं शक्येन भूप्रदेशेन रहिते अग्रभणे अग्रहणे हस्तेन ग्राह्यमालम्बनार्थं शाखादिकं यत्र नास्ति तस्मिन्, एवंभूते समुद्रे उक्तपूर्वे तत् तत्कर्म अवीरयेथाम् विक्रान्तं कृतवन्तौ युवाम्। किं तत्कर्म? भुज्युम् समुद्रे क्षिप्तं शतारित्राम् बह्वरित्रोपेतां, यैः पार्श्वतो बद्धैः काष्ठैः जलालोडने सति नौः शीघ्रं गच्छति तान्यरित्राणि, तादृशीं नावम् आतस्थिवांसम् आस्थितवन्तं कृत्वा अस्तम् गृहं, गन्तव्यं स्वस्थानं ऊहथुः प्रापितवन्तौ युवाम् इति यत् तत् कर्मेति संबन्धः॥ अवीरयेथाम्—वीर विक्रान्तौ, चुरादिरात्मनेपदी॥

इति प्रथमस्याष्टमेऽष्टमो वर्गः

षष्ठीमृचमाह—

यम॑श्विना द॒दथुः॑ श्वे॒तमश्व॑म॒घाश्वा॑य॒ शश्व॒दित्स्व॒स्ति ।
तद्वां॑ दा॒त्रं महि॑ की॒र्तेन्यं॑ भूत्पै॒द्वो वा॒जी सद॒मिद्धव्यो॑ अ॒र्यः ॥६॥

यम् अ॒श्विना॒ द॒दथुः॑ श्वे॒तम् अश्व॑म् अ॒घऽअ॑श्वाय शश्व॑त् इत् स्व॒स्ति
तत् वा॒म् दा॒त्रम् महि॑ की॒र्तेन्य॑म् भू॒त् पै॒द्वः वा॒जी सद॑म् इत् ह॒व्यः॑ अ॒र्यः ॥

हे अश्विना अश्विनौ, अघाश्वाय अहन्तव्याश्वाय ऋषये पेदुनाम्ने इत्याहुः। तर्हि पद्यते शरणं देवानिति पेदुः। यम् श्वेतम् अश्वम् यं शुद्धं सत्त्वसमृद्धं प्राणबलोपलक्षणमश्वं ददथुः युवां दत्त-वन्तौ सोऽश्वः शश्वदित् सर्वदैव तस्मै अघाश्वाय पेदवे स्वस्ति मङ्गलं जयलक्षणं करोति। वाम् युवयोः तत् दात्रम् तद्दानं महि महत् कीर्तेन्यम् कीर्तनीयं भूत् अभूत्। तस्मात् पैद्वः पेदोः संबन्धी वाजी अश्वः अर्यः प्रेरयिता युद्धे शत्रूणां वा सदमित् सदैव हव्यः आह्वातव्यः॥ दात्रम्—ददातेरौणादिकस्त्रप्रत्ययः भावे। पैद्वः—पेदोः संबन्धी, अण्, वर्णलोपश्छान्दसः॥

सप्तमीमृचमाह—

यु॒वं न॑रा स्तुव॒ते प॑ज्रि॒याय॑ क॒क्षीव॑ते अरद॒तं पुर॑न्धिम् ।
का॒रो॒त॒राच्छ॒फाद॑श्व॑स्य॒ वृष्णः॑ श॒तं कु॒म्भाँ अ॑सिञ्च॒तं सुरा॑याः ॥७॥

यु॒वम् न॒रा॒ स्तु॒व॒ते प॒ज्रि॒याय॑ क॒क्षीव॑ते अ॒र॒द॒तम् पुर॑म्ऽधिम् का॒रो॒तरात्
श॒फात् अश्व॑स्य वृष्णः॑ श॒तम् कु॒म्भान् अ॒सि॒ञ्च॒तम् सुरा॑याः ॥

हे नरा नेतारावश्विनौ, युवम् युवां पज्रियाय पुष्टिबलाद्यर्थे पज्रशब्दः, तदुद्भवाय, पज्राः अङ्गिरस इत्याम्नातत्वात् तद्वंशजाय स्तुवते स्तोत्रं कुर्वते कक्षीवते रहस्यज्ञानोपेताय (१.१८.१), एतन्नाम्ने ऋषये पुरन्धिम् प्रभूतां धियं अरदतम् व्यलिखतं, यथा धीः सर्वार्थगोचरा भवति तथा कृतवन्तौ। कारोतरः चर्मवेष्टितो भाजनविशेषः, यस्मिन् सुरां स्रावयन्ति, तद्वदश्विनोरश्वशफं वर्णयति। कारोतरात् भाजनभूतात् वृष्णः वर्षितुः अश्वस्य शफात् खुरात् सुरायाः मादकद्रव्यस्य शतम् कुम्भान् असंख्यातान् सुराघटान् असिञ्चतम् अक्षारयतम्। तादृशो मदप्रदायको महिमा, यदश्वखुरान्निस्सरति मादकं द्रव्यम्, सर्वथा संमदसुखदायिनावश्विनौ॥ पज्रियाय—पज्रशब्दात् शैषिको घच्। पुरन्धिम्—पृषोदरादित्वात् पुरन्धिभावः॥

अष्टमीमृचमाह—

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥८॥

हिमेन अग्निम् घ्रंसम् अवारयेथाम् पितुऽमतीम् ऊर्जम् अस्मै अधत्तम्
ऋबीसे अत्रिम् अश्विना अवऽनीतम् उत् निन्यथुः सर्वऽगणम् स्वस्ति ॥

वैदिके योगे चलति बह्वयः शक्तयः आसुर्यो राक्षस्योऽन्याश्च अन्तर्याजिनमृषिं प्रबाधन्ते । तथा बाधितानामेकोऽत्रिः-विश्रुत ऋषिः, स चाश्विनानुग्रहपात्रमभवदित्यस्यां प्रस्तुतम् । हे अश्विना अश्विनौ, हिमेन लक्षणया शैत्यापादनेन अत्रेः घ्रंसम् अग्निम् दीप्यमानं तापं, नायं बाह्यस्तापः अवारयेथाम् निवारितवन्तौ, तापोपशमनं कृतवन्तौ । अपि च अस्मै अत्रये पितुमतीम् ऊर्जम् रसभरितं बलप्रदं वस्तु अधत्तम् प्रायच्छतम् । अपि च, ऋबीसे प्रकाशरहिते स्थाने, गृहे, अवनीतम् अधोगत्या आसुरैर्बलैः प्रापितं अत्रिम् ऋषिं सर्वगणम् सर्वैर्गणैरुपेतं, गणोऽत्राश्रितानां समूहः, बहिरन्तरिन्द्रियाणां वा, स्वस्ति अविनाशो यथा भवति तथा उन्निन्यथुः उत्थाप्य यथास्थानं प्रापितवन्तौ ॥ ऋबीसे—पृषोदरादित्वादिष्टरूपसिद्धिः । अत्रिम्—अद भक्षणे, अदेस्त्रिनिश्चेति चशब्दात् त्रिप् ॥

नवमीमृचमाह—

परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारम् ।
क्षरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥९॥

परा अवतम् नासत्या अनुदेथाम् उच्चाऽबुध्नम् चक्रथुः जिह्मऽबारम् क्षरन्
आपः न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥

हे नासत्या नासत्यावश्विनौ, युवां अवतम् अधस्तात् ततं विस्तृतं, कूपनामैतत्, कूपं परा अनुदेथाम् परस्तात् ऊर्ध्वं प्रेरितवन्तौ, तथा अधः स्थितं अन्नमयदेहलक्षणं प्राणमयोदकयुक्तं कूपमुद्धृत्य तं उच्चाबुध्नम् उच्चैर्बुध्नो मूलं यस्य तं जिह्मबारम् जिह्मं वक्रं बारं द्वारं यस्य तं तथाभूतं च चक्रथुः कृतवन्तौ । ऊर्ध्वमूलत्वादेव शिरः सहस्रारं प्रधानं भवति देहस्य । वक्रं भवति द्वारं, येन तिर्यक्प्रसारो भवति स्यन्दमानानां अपां प्राणामृतमयीनाम्, अथ तृष्यते क्रियाज्ञानबलाद्यर्थं पिपासतः, विभक्तिव्यत्ययः, गोतमस्य ऋषेः पायनाय पानार्थं आपो न न शब्दश्चार्थे

इति सायणः, मा भूत्, आप इव क्षरन् प्रवाहरूपेण निरगमन् 'सहस्रं रायः' यदर्थं गोतम ऋषिः पिपासितः, तदाह सहस्राय राये प्रभूताय धनाय, नेदं लौकिकं, न तदर्थं तृषितो गोतमः। गूढार्थमेव मन्त्रवर्णः प्रतिपादयति, अन्यथा उन्मत्तलपितं स्यात्॥ अनुदेयाम्—णुद प्रेरणे, तौदादिकः। जिह्मवारम्—द्वारशब्दस्य वारादेशः, पृषोदरादिः। पायनाय—हेतुमण्णिच्, भावे ल्युट्॥

दशमीमृचमाह—

जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात्।
प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनाम्॥१०॥

जुजुरुषः नासत्या उत वव्रिम् प्र अमुञ्चतम् द्रापिम्ऽइव च्यवानात् प्र अतिरतम् जहितस्य आयुः दस्रा आत् इत् पतिम् अकृणुतम् कनीनाम्॥

च्यवनमधिकृत्य महाभारतादिपुराणकथायाः मूलमस्यामृचि द्रष्टव्यम्। हे नासत्या नासत्यौ, जुजुरुषः जीर्णात् च्यवानात् च्यवनाख्यात् ऋषेः वव्रिम् आवृत्य स्थितां जरां प्रामुञ्चतम् प्रकर्षेणामोचयतम्। तत्र दृष्टान्तः—द्रापिमिव कवचमिव, कवचं यथा देहात्पृथक् कर्तुं शक्यते तथा च्यवनदेहात् जरा पृथक् कृता। उत अपि च हे दस्रा, दस्रौ कर्मकुशलौ, जहितस्य परित्यक्तस्य जरयेति शेषः, आयुः जीवनं प्रातिरतम् प्रावर्धयतम्, प्रपूर्वस्तिरतिर्वर्धनार्थः। आदित् अनन्तरमेव तमृषिं कनीनाम् पतिम् कन्यानां अनभिव्यक्तभावानां अत एवान्तर्हितानां दिव्यांशानां उपभोग्यतायै आविष्कारं प्रतीक्षमाणानामित्यर्थः, एवंलक्षणानां 'कन्यानां' पालकं भर्तारं अकृणुतम् अकुरुतम्॥ जुजुरुषः—जॄष् वयोहानौ, लिटः क्वसुः, बहुलं छन्दसीत्युत्वं, द्विर्भावः, संप्रसारणं, षत्वम्। जहितस्य—ओहाक् त्यागे, कर्मणि निष्ठा, अन्यत् छान्दसम्॥

इति प्रथमस्याष्टमे नवमो वर्गः

एकादशीमृचमाह—

तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम्।
यद्विद्वांसा निधिमिवापगूळ्हमुद्दर्शतादूपथुर्वन्दनाय॥११॥

तत् वाम् नरा शंस्यम् राध्यं च अभिष्टिऽमत् नासत्या वरूथम् यत् विद्वांसा निधिम्ऽइव अपऽगूळ्हम् उत् दर्शतात् ऊपथुः वन्दनाय॥

अत्र वन्दनः पूर्वं प्रस्तुत एव। हे नरा नरौ नेतारौ, हे नासत्या, अश्विनौ, अभिष्टिमत्

अन्वेषणयुक्तं, आभिमुख्येन प्राप्तव्यं, तथा वरूथम् वरणीयं, कामयितव्यं वाम् युवयोः तत् तत्कर्म शंस्यम् शंसनीयं राध्यम् च आराधनीयं च। तत्कर्म विवृणोति। विद्वांसा जानन्तौ युवां निधिमिव निक्षिप्तं धनमिव अपगूळ्हम् योगविघातकैरासुरैर्बलैर्निगूढं वन्दनाय स्तुवन्तं, एतदाख्यमृषिं दर्शतात् द्रष्टव्यात्, दर्शनं गतात् गूढस्थानात् उदूपथुः उदाहार्ष्टम्। यत् यदेतत् उद्वपनकर्म तदिति संबन्धः॥ अभिष्टिमत्—अभिपूर्वात् इष गतावित्यस्मात् भावे क्तिन्, शकन्ध्वादित्वात्पररूपं, ततो मतुप्। वरूथम्—जॄवृभ्यामूथन्। दर्शतात्—दृशेरतच्। ऊपथुः—वपतेर्लिट्॥

द्वादशीमृचमाह—

**तद्वां नरा सनये दंसं उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्।**
**दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच॥१२॥**

तत् वाम् नरा सनये दंसः उग्रम् आविः कृणोमि तन्यतुः न वृष्टिम्
दध्यङ् ह यत् मधु आथर्वणः वाम् अश्वस्य शीर्ष्णा प्र यत् ईम् उवाच॥

आथर्वणस्य दधीचो वृत्तान्तस्य गूढार्थं संक्षेपेण ऋचोऽस्याः पदार्थदानात्परं ब्रूमः। हे नरा नरौ, अश्विनौ, वाम् युवयोः तत् उग्रम् तदुद्गूर्णं दंसः कर्म सनये संभजनाय आविः कृणोमि प्रकटीकरोमि। तत्र दृष्टान्तः—तन्यतुर्न यथा मेघगर्जितशब्दः वृष्टिम् वर्षणं प्रकटयति, तद्वत्। किं तत्कर्म? यत् आथर्वणः अथर्वणः पुत्रः दध्यङ् एतन्नामा अश्वस्य शीर्ष्णा युष्मदनुग्रहेण प्रतिहितेनाश्वशिरसा ईम् मधु इमां मधुविद्यां यद्ध यदा खलु वाम् युवाभ्यां प्रोवाच प्रोक्तवान्, तदा युवयोः वीर्यवत् कर्म प्रकटितमेव॥ सनये—वन षण संभक्तौ। तन्यतुः—तनु विस्तारे, यतुच्॥

अत्र मधुविद्याप्रस्तावो भवति। अथर्वणः पुत्रो दध्यङ्। अश्विभ्यां स मधुविद्यां प्रोवाच। तत्र मधुप्रापणस्य अश्वशिरः साधनमभवत्, न तु दधीच ऋषेर्मुखम्। तच्च दध्यङ्शिर उद्धृत्य अश्वशिरोऽश्विभ्यामेव दधीचे दत्तम्। अश्विभ्यां मध्वादानात्परं पुनर्दधीचः शिरः प्रतिहितं, अश्वशिरस्तु इन्द्रेण छिन्नं व्यपगतमिति मन्त्रान्तरेभ्योऽवगम्यते॥

अत्रेदं विचारणीयम्। बहुभिः पुराणान्वाख्यानैरुपबृंहित एतादृशो मन्त्रवर्णः। नैष स्थूलो वृत्तान्तः कथितः। अत्र तत्त्वावगतिस्तु सङ्केतविवरणायत्ता। अथर्वा अङ्गिरसामग्रगण्यो भवति। अत एवाग्निविभवभूतो देवत्वं प्राप्त ऋषिः। स यजनैः साधनैर्दिव्यचिद्रश्मिप्रापकान् मार्गान् सर्वेभ्यः पूर्वं कृतवानिति मन्त्रवर्णः “यज्ञैरथर्वा प्रथमं पथस्तते” (१.८३.५)। स देवभूत

आधिकारिकः सन् मानुषे जन्मनि लब्धस्थितिपदः आग्नेयीः संपद आविष्करोति। पृथिवी-स्थानोऽग्निरमर्त्यो यदा मर्त्ये सुप्तोत्थितो भवति तदा मानुषे हृदये दैवप्रेप्साज्वाला (महती तीव्रोत्काङ्क्षा) प्रादुर्भवति। तद्व्यापारस्य कोऽपि भागहरः सार्थकनामा दृढमवस्थितः स्थिरो निश्चेष्टज्वलितो भवत्यथर्वा। थर्वतिर्गतिकर्मा तद्रहित इत्यर्थः। अथर्व्यं गन्तुमसमर्थमिति सायणः (१.११२.१०)। मर्त्ये अग्निस्तेन निर्मथित आविर्भावितश्चेति मन्त्रवर्णाः "इममु त्यमथर्ववदग्निं मन्थन्ति वेधसः" (६.१५.१७)। सर्वस्यापि देवभक्तस्यर्षेः पुष्कराख्यात् शिरःकमलात् अथर्वा अग्निं निर्मथितवान्, पुष्करं परमं व्योम वा स्यात्, तस्मान्निर्मथ्याविष्कृतवान् "त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः" (६.१६.१३)॥ अन्योऽपि मन्त्रः अथर्वणः पुत्रो दध्यङ् अग्निं 'वृत्रहणं पुरन्दरं' दीपितवानिति वर्णयति। एवमङ्गिरसां प्रथमोऽग्निरथर्वा व्याख्यातः॥

अथ दध्यङ् तस्य पुत्रः। ऋषिरयमप्याधिकारिको देवभूतः पृथिवीस्थानो मनुष्ये धारणात्मिकां दधिशब्दसङ्केतितां धियमञ्चतीति सार्थकनामा दध्यङ्ङुच्यते। अत्र सङ्केतविवरणस्येदं द्वारं भवति, यत् चिद्रश्मिलक्षणायाः गोः सारभूतस्यामृतस्य दुग्धस्य दधिरूपेण परिणामात् दध्ना घनेऽन्नमये स्थूले देहे धारणात्मिका ज्वलिता बुद्धिः सङ्केत्यते। दध्याशिर इत्यस्य व्याख्यान-मवधातव्यम् (पु. १३८) धात्वर्थानुसारेण दधिशब्दः प्रयुज्यते वेदे (१०.४६.१)। सोऽयं ऋषिः पुरुषो दध्यङ् देवतात्मा चित्प्रकाशप्रभासितां अन्नमयदेहाधारकां प्रसन्नशुभ्रां धियमधिष्ठाय सर्वं जगच्चराचरात्मकं द्वन्द्वभूतं अन्योन्याश्रयसंबद्धं मधुपदवाच्येन रसात्मना आनन्देन धार्यमाण-मवतिष्ठत इति अनुभूत्या वेद। इदं च मधुनो विज्ञानं विशुद्धप्रकाशायाः धियः समुत्कर्षं प्राप्यावतिष्ठमानो दध्यङ् स्वर्धामाधिकारिण इन्द्राल्लब्धवान् किल। यस्मात्खलु प्रसरन् तमसां प्रध्वंसनः चित्प्रकाशो दधीचो धारणात्मिकां शुभ्रां प्रज्ञां प्रकाश्य सर्वस्यापि वस्तुनस्तत्त्वं रहस्ये मधुनि प्रतिष्ठितमित्यावेदयत्यस्मै। इदं तत् 'कक्ष्यं' (रहस्यं) मधु यद्दध्यङ् अश्विभ्यां प्रोवाच॥ यद्यप्यग्निविभूतिविशेषस्याथर्वणस्याङ्गिरसस्य दधीचो धीप्रकाशपदवी समुत्कृष्टैव भवति, यत्र दृढं मधुनः संवेदनं सहजं प्रथते, तथापि तस्य मधुज्ञानस्य तत्सदृशं क्रियाकारकसामर्थ्यं तदनुरूपं उपभोगसामर्थ्यं वा देहदार्ढ्य-प्राणबलसमृद्धि-स्वस्थताऽरोगतादिसंपदमन्तरेण न सिध्येत्। तादृशी संपदश्विभ्यां लब्धव्या। तौ हि अपेक्षितदेहसौख्यबलादीनां प्रदातारौ। तस्मादश्विभ्यां मधु-विज्ञानप्रापणस्य दधीचो वाक् न पर्याप्तं साधनं भवति, प्राणबलमेव तत्प्रापणक्षमं, तदेवाश्वशिरसा अश्विप्रतिहितेन संकेतितम्। मधुप्रापणात्परं दध्यङ् पुनः सहजेन शिरसा युक्तो भवति॥

इदमेव उग्रं कर्मेति गौण्या वाण्या मन्त्रवर्णेषु वर्ण्यते। अत्र सारतः सङ्केताः प्रपञ्चिताः। एतदाधारकाणां पुराणोपाख्यानानां मधुविद्यायाः प्रवर्ग्यविद्यायाश्च रहस्यं नेह विचार्यते। यत् किञ्चिदुक्तमत्र तत् धीमतां चिन्तकानामुपयोगाय विचारणाय च कल्पेत। शतपथिनां श्रुतौ (१४.५.५.१६) मधुविद्याप्रस्तावे 'तदेतत्पश्यन्नृषि'रिति इयमृगुदाहृता। अन्या च तत्रैव (१.११७.२२) गीता। अनेन मधुविद्या रहस्यभाषया ऋक्संहितायामावेदितेति बोध्यम्। मधुविद्यारहस्यं तु विस्पष्टमुक्तं मधुब्राह्मणे (बृ. उप. २.५)। तत्र चतुर्दशधा दृष्टान्तेन मधुविद्योपदिष्टा। "इयं पृथिवी सर्वेषां भूतानां मधु" इत्यारभ्य "इदं वै तन्मधु दध्यङ्ङाथर्वणः अश्विभ्यामुवाच" इत्युपसंहारे मन्त्रवर्णा उदाहृताः। एवमन्याश्च औपनिषदविद्याः मन्त्रसंहितामूलकाः इति क्वचित् स्फुटं ज्ञायते॥ अथ दधीचमधिकृत्य अन्योऽस्ति वक्तव्यो विषयः, दधीचोऽस्थिभिः वृत्राणि नवतीर्नव हतवानिन्द्रः (१.८४.१३, १४)। प्रायशः पूर्णा वृत्रहत्या (तमसः प्रध्वंसः) स्वीकृतेन्द्रतेजस्कैः इन्द्रवज्रभूतैः (दध्यङ्ङस्थिनिर्मितं इन्द्रवज्रमिति सविस्तरा कथा) दधीचः अन्नमयाधारकमूलधातुभिर्निरूह्यते। संपूर्णो वृत्रवधस्तु साक्षादिन्द्रेणेति बोध्यम्॥

त्रयोदशीमृचमाह—

अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंन्धिः।
श्रुतं तच्छासुरिव वध्रिमत्या हिरंण्यहस्तमश्विनावदत्तम्॥१३॥

अजोहवीत् नासत्या करा वाम् महे यामन् पुरुऽभुजा पुरम्ऽधिः श्रुतम् तत् शासुःऽइव वध्रिऽमत्याः हिरण्यऽहस्तम् अश्विनौ अदत्तम्॥

पुरुभुजा बहूनां पालकौ हे नासत्या अश्विनौ, महे महनीये यामन् यामनि गमने, महति कार्ये चलति सति, करा करौ अभिमतफलस्य कर्तारौ वाम् युवां पुरन्धिः प्रभूतधीयुक्ता वध्रिमती पुत्रोत्पादनाशक्तपतिका अजोहवीत् पुनः पुनः आहूतवती स्तुतिभिः। शासुरिव शासितुरिव, आचार्यस्य वचनं शिष्येणेव युवाभ्यां तस्याः वध्रिमत्याः तत् श्रुतम् तदाकर्णितम्। आकर्ण्य च हे अश्विनौ तस्यै हिरण्यहस्तम् हिरण्मयहस्तोपेतं अपत्यं अदत्तम् प्रायच्छतम्॥ अजोहवीत्—ह्वयतेः यङ्लुगन्ताल्लङ्। करा—करोतेः अच्। शासुः—शासु अनुशिष्टौ, तृच्, इडभावश्छान्दसः तलोपश्च॥

चतुर्दशीमृचमाह—

आस्नो वृकस्य वर्तिकामभीके युवं नरा नासत्यामुमुक्तम्।
उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे॥१४॥

आस्नः वृकस्य वर्तिकाम् अभीके युवम् नरा नासत्या अमुमुक्तम् उतो
इति कविम् पुरुऽभुजा युवम् ह कृपमाणम् अकृणुतम् विऽचक्षे ॥

हे नरा, नासत्या, नेतारावश्विनौ, युवम् युवां अभीके अभिगते वृकवर्तिकयोः परस्परयुद्धे वृकस्य छेदकस्यासुरस्य आस्नः आस्यात् वर्तिकाम् पक्षिस्त्रियं तल्लक्षितजीवात्मानं (इदं कुत्ससूक्ते व्याख्यातम्, सू. ११२) अमुमुक्तम् अमोचयतम्। उतो अपि च कविम् तमृषिं हे पुरुभुजा बहूनां पालयितारौ, युवम् ह युवामेव कृपमाणम् स्तुवन्तं सन्तं विचक्षे विशेषेण द्रष्टुं अकृणुतम् अकुरुतम् ॥ आस्नः—आस्यशब्दस्य आसन्नादेशः। अमुमुक्तम्—मुचेरन्तर्भावितण्यर्थाल्लुङि विकरणस्य श्लुः। कृपमाणम्—कृपिः स्तुतिकर्मा, तुदादिः। विचक्षे—तुमर्थे सेन्प्रत्ययः ॥

पञ्चदशीमृचमाह—

चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम्।
सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ॥१५॥

चरित्रम् हि वेःऽइव अच्छेदि पर्णम् आजा खेलस्य परिऽतक्म्यायाम्
सद्यः जङ्घाम् आयसीम् विश्पलायै धने हिते सर्तवे प्रति अधत्तम् ॥

अत्र खेलविश्पलावृत्तान्तः कुत्ससूक्ते प्रस्तुतः। आजा आजौ युद्धे खेलस्य एतदाख्यस्य संबन्धिन्याः विश्पलायाः चरित्रम् चरणं वेरिव पर्णम् पक्षिणः पतत्रमिव अच्छेदि हि छिन्नमभूत् खलु। युवां परितक्म्यायाम् रात्रौ सद्यः तदानीमेव विश्पलायै तस्यै छिन्नचरणायै आयसीम् जङ्घाम् अयोमयीं जङ्घां, जङ्घोपलक्षितं पादं प्रत्यधत्तम् सन्धानमेकीकरणं कृतवन्तौ। किमर्थम्? हिते निहिते विपक्षे आसुरबले इति शेषः धने दिव्ये, प्राप्तव्ये विषयभूते सति सर्तवे गन्तुम् ॥ अत्र पादच्छेदः दिव्याध्वनि गच्छन्त्याः गतिभङ्गं असुरकृतं लक्षयति। तथा रात्रिः रहस्यन्यैरलक्षित एव कृतः आश्विनोऽनुग्रहः इति द्योतयति। 'आयसीं जङ्घा'मिति गमनबलदार्ढ्यद्योतनाय ॥ परितक्म्यायाम्—परित एनामुभयतः सूर्यस्तकति गच्छतीति यास्कानुसारतः ॥

इति प्रथमस्याष्टमे दशमो वर्गः

षोडशीमृचमाह—

शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥१६॥

शतम् मेषान् वृक्यै चक्षदानम् ऋज्रऽअश्वम् तम् पिता अन्धम् चकार तस्मै अक्षी इति नासत्या विऽचक्षे आ अधत्तम् दस्रा भिषजौ अनर्वन् ॥

ऋज्राश्वः ऋजुगमनः प्राणबलोपलक्षणः अश्वः यस्य तं, तस्य पिता स्तोत्रवाचां वर्षकः 'वृषागीः' अन्धं दृष्टिवियुक्तं कृतवान्। कुतः? "वृक्यै" छेदकासुरशक्त्यै बहून् "मेषान्" उन्मिषन्ति दृष्टिबलानि स दत्तवानिति हेतोः। ऋज्राश्वस्य दृष्टिबलानि आच्छिद्य आसुरशक्तिर्भुक्तवतीत्यर्थः। तत्र अश्विनोरनुग्रहस्तस्य दृष्टिं समर्पीपदत्॥ ऋज्राश्वः राजर्षिरुक्तलक्षणः शतम् मेषान् बहूनुक्त-लक्षणान् वृक्ये वृकस्त्रियै, व्याख्यातायै, चक्षदानम् हिंसितवन्तं 'क्षदतिरत्तिकर्मा अत्र शकली-करणार्थः' इति सायणः, तम् ऋज्राश्वम् पिता वृषागीः उक्तलक्षणः अन्धम् चकार दृष्टिहीनं कृतवान्। हे नासत्या नासत्यौ, दस्रा दस्रौ कर्मकुशलौ, भिषजौ सर्वबाह्याभ्यन्तररोगाणां दिव्यौ चिकित्सकौ, अनर्वन् अनर्वणी, गमनरहिते, द्रष्टव्यं प्रतीति शेषः, अक्षी चक्षुषी विचक्षे विशिष्य द्रष्टुं समर्थे तस्मै ऋज्राश्वाय आधत्तम् व्यधत्तं, अकुरुतम्॥ चक्षदानम्—क्षदतेर्लिटः कानच्। अनर्वन्—ऋ गतौ, भावे वनिप्, अन्यत् छान्दसम्॥

सप्तदशीमृचमाह—

आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयन्ती।
विश्वे देवा अन्वमन्यन्त हृद्भिः समु श्रिया नासत्या सचेथे ॥१७॥

आ वाम् रथम् दुहिता सूर्यस्य कार्ष्मऽइव अतिष्ठत् अर्वता जयन्ती विश्वे देवाः अनु अमन्यन्त हृत्ऽभिः सम् ऊम् इति श्रिया नासत्या सचेथे इति॥

उषा अश्विनोर्योषा तद्रथमारुह्य दिवमेतीति अन्यत्र च वर्ण्यते। अत्र सैव सूर्येति बोध्यम्। सूर्यस्य दुहिता सूर्या वाम् युवयोः रथम् आतिष्ठत् रथमारूढवती। कीदृशी? अर्वता शीघ्रगमनेन कार्ष्मेव जयन्ती बहूनां धावने अवधितया स्थापितं काष्ठं लक्ष्यमिव प्राप्नुवन्ती। तदानीं विश्वे देवाः इतरे सर्वेऽपि देवाः एतदारोहणं हृद्भिः हृदयैः अन्वमन्यन्त अनुज्ञातवन्तः। हे नासत्या अश्विनौ, तदानीं श्रिया सर्वोत्तरशोभया युवां संसचेथे संगच्छेथे। उ पादपूरणः॥ सचेथे—षच समवाये॥

अष्टादशीमृचमाह—

यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता।
रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥१८॥

यत् अयातम् दिवःऽदासाय वर्तिः भरत्ऽवाजाय अश्विना हयन्ता रेवत् उवाह सचनः रथः वाम् वृषभः च शिंशुमारः च युक्ता ॥

हे अश्विना अश्विनौ, हयन्ता आहूयमानौ युवां भरद्वाजाय देवार्थं भ्रियमाणसमृद्धियुक्ताय दिवोदासाय राजर्षये, द्युलोकसेवकाय वर्तिः तदीयं गृहं यत् यदा अयातम् आगच्छतं, तदानीं रेवत् दिव्यधनयुक्तं वैभवं वाम् युवयोः सचनः सेवनः रथः उवाह तस्मै प्रापयामास। तस्मिन्रथे वृषभश्च अनड्वांश्च शिंशुमारश्च ग्राहश्च युक्ता वाहनतया संयुक्तावास्ताम्। वृषग्राहौ परस्परविरुद्धौ अश्विनोर्बलेन प्रसादेन एकत्र संयुक्तौ भवतः इति भावः॥ हयन्ता—ह्वेञः कर्मणि लटो व्यत्ययेन शतृ, संप्रसारणं, शपि गुणे छान्दसोऽयादेशः। सचनः—षच सेवने। युक्ता—विभक्तेराकारः॥

एकोनविंशीमृचमाह—

रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहन्ता।
आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातम्॥१९॥

रयिम् सुऽक्षत्रम् सुऽअपत्यम् आयुः सुऽवीर्यम् नासत्या वहन्ता आ जह्नावीम् सऽमनसा उप वाजैः त्रिः अह्नः भागम् दधतीम् अयातम्॥

हे नासत्या नासत्यौ, सुक्षत्रम् शोभनबलं रयिम् धनं, सत्पथे दैवार्थं उपयोज्यत्वात् शोभनमस्य धनस्य बलं, स्वपत्यम् शोभनप्रजायुक्तं सुवीर्यम् शोभनपराक्रमोपेतं च आयुः जीवितं वहन्ता वहन्तौ युवां समनसा समानमनस्कौ सन्तौ जह्नावीम् जाह्नवीं (ह्रस्वदीर्घयोर्विनिमयः) जह्नोः महर्षेः (ह्नुते अपनयति पापान् जह्नुः, तस्य पापनोदनस्य) संबन्धिनीं प्रजां उप आ अयातम् आभिमुख्येन उपागच्छतम्। कीदृशीम्? वाजैः समृद्धिभिः युक्तं अह्नः अह्ना लक्षितस्य चित्प्रकाशस्य त्रिः त्रिधा, लोकत्रयापेक्षया, मनःप्राणशरीरैरर्प्यमाणं त्रिविधं, भागम् भजनीयमंशं दधतीम् बिभ्रतीम्॥

विंशीमृचमाह—

परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः।
विभिन्दुना नासत्या रथेन वि पर्वताँ अजरयू अयातम्॥२०॥

परिऽविष्टम् जाहुषम् विश्वतः सीम् सुऽगेभिः नक्तम् ऊहथुः रजःऽभिः विऽभिन्दुना नासत्या रथेन वि पर्वतान् अजरयू इति अयातम्॥

हे नासत्या नासत्यौ, विश्वतः सर्वतः परिविष्टम् परिवृतं शत्रुभिः जाहुषम् राजर्षिं (जहातेः, सर्वसङ्गपरित्यागिनं) अजरयू जरारहितौ युवां विभिन्दुना सर्वविभेदकेन रथेन आत्मीयेन रथेन नक्तम् रात्रौ, रहसीति विवक्षा, सुगेभिः सुष्ठु गन्तुं शक्यैः रजोभिः आकाशमार्गैः, रजः अन्तरिक्षनाम, सायणस्तु 'रञ्जकैर्मार्गैः' इत्याह। ऊहथुः वोढवन्तौ, तस्मात्संकटान्निरगमयतम् सीम् पादपूरणम्। निर्गतेन तेन सह पर्वतान् शत्रुभिरारोद्धमशक्यान् व्ययातम् विशेषेण गतवन्तौ ॥ परिविष्टम्–विश प्रवेशने, कर्मणि निष्ठा। विभिन्दुना–भिदिर् विदारणे, औणादिक उप्रत्ययः नुमागमश्च। अजरयू–अजरामात्मन इच्छतः, सुप आत्मनः क्यच्, क्याच्छन्दसीति उप्रत्ययः ॥

इति प्रथमस्याष्टम एकादशो वर्गः

एकविंशीमृचमाह—

एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा।

निरहतं दुच्छुना इन्द्रवन्ता पृथुश्रवसो वृषणावरातीः ॥२१॥

एकस्याः वस्तोः आवतम् रणाय वशम् अश्विना सनये सहस्रा निः अहतम् दुच्छुनाः इन्द्रऽवन्ता पृथुऽश्रवसः वृषणौ अरातीः ॥

हे अश्विना, वशम् एतन्नृषिं (वष्टेः, कान्तं, देवान् कामयमानम्) एकस्याः वस्तोः एकस्याह्नः रणाय रमणीयाय सहस्रा सहस्रसंख्याय सनये लाभाय आवतम् अरक्षतं, तस्मै ऋषये प्रत्यहं प्रवर्धमानां दिव्यां संपत्तिं दत्तवन्तौ युवाम्। अपि च हे वृषणौ, वर्षितारौ, इन्द्रवन्ता इन्द्रेण संयुक्तौ युवां दुच्छुनाः येषां सुखानि दुर्मार्गेण प्राप्तानि तान्, दुष्टसुखानित्यर्थः, पृथुश्रवसः अरातीः पृथुलदिव्यश्रुतिसम्पन्नस्य राजर्षेः शत्रून् निरहतम् निश्शेषेणावधिष्टम् ॥ दुच्छुनाः–शुनं सुखं, दुष्टं शुनं यासां अरातिभूतानां ताः ॥

द्वाविंशीमृचमाह—

शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः।

शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ॥२२॥

शरस्य चित् आर्चत्ऽकस्य अवतात् आ नीचात् उच्चा चक्रथुः पातवे वारिति वाः शयवे चित् नासत्या शचीभिः जसुरये स्तर्यम् पिप्यथुः गाम् ॥

आर्चत्कस्य ऋचत्कपुत्रस्य स्तोतुः शरस्य चित् पापानां हिंसितुः, एतत्संज्ञकस्यापि पातवे पानाय नीचात् नीचीनात् अवतात् कूपात् उच्चा उच्चैरुपरिष्ठात् वाः वारि युवां आ चक्रथुः आभिमुख्येन कृतवन्तौ। अत्र कूपं उदकं पानं नीचैरुच्चैरित्येतानि साङ्केतिकानि पूर्ववद् ग्राह्याणि। कूपात्साधारणजलोद्धारः केनापि सेवकेन सख्या वा क्रियते, न तत्र अलौकिकमाश्विनं साहाय्य-मावश्यकं भवति। हे नासत्या नासत्यौ, शचीभिः युष्मदीयशक्तिभिः जसुरये हिंसया श्रान्ताय शयवे चित् शयानाय, ऋषयेऽपि स्तर्यम् गाम् निवृत्तप्रसवां दोग्ध्रीं पिप्यथुः पयसा पूरितवन्तौ युवाम्। अत्रापि गौणोऽर्थः। ऋषिगत-चिद्रश्मि-प्रसारसन्तानासामर्थ्यं बोध्यम्॥ जसुरये—जसु हिंसायाम्, जसुसहोरुरिन्। स्तर्यम्—स्तीर्यते आच्छाद्यते प्रसवे सामर्थ्याभावेनेति स्तरीः, अवि-तृस्तृस्तृतन्त्रिभ्य ईरिति ईकारप्रत्ययः, वा च्छन्दसीत्यमि पूर्वस्य विकल्पितत्वादभावे यणादेशः। पिप्यथुः—प्यायी वृद्धौ, लिटि व्यत्ययेन परस्मैपदम्, पीभावः॥

त्रयोविंशीमृचमाह—

अवस्यते स्तुवते कृष्णियाय ऋजूयते नासत्या शचीभिः।
पशुं न नष्टमिव दर्शनाय विष्णाप्वं ददथुर्विश्वकाय॥२३॥

अवस्यते स्तुवते कृष्णियाय ऋजुऽयते नासत्या शचीभिः पशुम् न नष्टम्ऽइव दर्शनाय विष्णाप्वम् ददथुः विश्वकाय॥

अवस्यते अवनं रक्षणं आत्मनः इच्छते स्तुवते स्तोत्रं कुर्वते कृष्णियाय कृष्णपुत्राय ऋजूयते आर्जवमिच्छते विश्वकाय ऋषये हे नासत्या नासत्यौ, युवां शचीभिः स्वशक्तिभिः विष्णाप्वम् एतन्नामकं नष्टं पुत्रं पशुम् न नष्टमिव एक उपमार्थीयः पूरकः, यथा कश्चित् नष्टं पशुं स्वामिनो दृष्टिपथं प्रापयति तद्वत्, गतस्य मृतस्य वा पुत्रस्य दर्शनाय पुनर्लाभे दर्शनार्थं ददथुः दत्तवन्तौ॥ अवस्यते—अवस्-शब्दात् सुप आत्मनः क्यच्। कृष्णियाय—अपत्यार्थे छान्दसो घच्॥

चतुर्विंशीमृचमाह—

दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्व१न्तः।
विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण॥२४॥

दश रात्रीः अशिवेन नव द्यून् अवऽनद्धम् श्नथितम् अप्ऽसु अन्तरिति विऽप्रुतम् रेभम् उदनि प्रऽवृक्तम् उत् निन्यथुः सोमम्ऽइव स्रुवेण॥

हे अश्विनौ, अप्सु अन्तः प्राणबलभूयिष्ठे प्रवाहे निमग्नमृषिं अशिवेन अशुभेन आसुरेण पापपाशेन अवनद्धम् बद्धं श्नथितम् हिंसितं दश रात्रीः दश अप्रकाशदशाः नव द्यून् नव दिवसान्, प्रकाशदशाश्च, एतावन्तं कालं तादृशावस्थामापन्नं उदनि उक्तलक्षणे उदके विप्रुतम् विप्लुतं व्याक्षिप्तसर्वाङ्गं प्रवृक्तम् प्रवृञ्जनेन सन्तप्तं व्यथया सन्तप्यमानं एवंभूतं रेभम् स्तोतारं ऋषिं, (परिचितोऽयं), युवां उन्निन्यथुः उन्नीतवन्तौ, ऊर्ध्वं प्रापितवन्तौ, तत्र दृष्टान्तः—सोममिव स्रुवेण स्थालीमध्ये वर्तमानं सोमरसं स्रुवेण यथा अध्वर्युरुन्नयति तद्वत्। नेदं साधारणं उदकं यत्र रेभो निमग्नस्तावन्तं कालं, न वा संतप्तो भवति कोप्यप्सु वर्तनेन ॥ अवनद्धम्—णह बन्धने, कर्मणि निष्ठा, नहो धः। श्नथितम्—श्नथतिः हिंसार्थः, निष्ठा। विप्रुतम्—प्रुङ् गतौ। उदनि—उदकशब्दस्योदन्नादेशः ॥

पञ्चविंशीमृचमाह—

प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः।
उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥२५॥

प्र वाम् दंसांसि अश्विनौ अवोचम् अस्य पतिः स्याम् सुऽगवः सुऽवीरः
उत पश्यन् अश्नुवन् दीर्घम् आयुः अस्तम्ऽइव इत् जरिमाणम् जगम्याम् ॥

हे अश्विनौ, वाम् युवयोः दंसांसि कर्माणि प्रावोचम् प्रोक्तवानस्मि। सोऽहं सुगवः शोभनचिद्रश्मियुक्तः सुवीरः शोभनवीर्योपेतः, एवं ज्ञानक्रियाशक्तिद्वयसंपन्नः सन् अस्य पतिः स्याम् अस्य त्रैलोक्यांशभूतस्य मनःप्राणशरीरात्मकस्य आवासस्थानस्य सर्वस्याधिपतिर्भवेयम्। उत अपि च पश्यन् उपलक्षणमिदं, सर्वेन्द्रियपटुत्वयुक्तः सन् दीर्घमायुः चिरकालजीवितं अश्नुवन् प्राप्नुवन्नहं अस्तमिवेत् गृहस्वामी गृहमिव जरिमाणम् जरां जगम्याम् प्राप्नुयाम्, निर्भयं निष्कण्टकं च यथा स्वगृहं प्रविशति गृही तथा आयुषोऽन्ते जरां प्रविशेयम् ॥ जरिमाणम्—जॄष् वयोहानौ, अस्मात् इमनिच्, उणादिः। जगम्याम्—गमेः प्रार्थनायां लिङ्, विकरणस्य श्लुः ॥

इति प्रथमस्याष्टमे द्वादशो वर्गः

'मध्व' इति पञ्चविंशत्यृचं द्वितीयं सूक्तं कक्षीवत आर्षं त्रैष्टुभमाश्विनम् ॥

तत्र प्रथमामृचमाह—

मध्वः सोमस्याश्विना मदाय प्रत्नो होता विवासते वाम्।
बर्हिष्मती रातिर्विश्रिता गीरिषा यातं नासत्योप वाजैः ॥१॥

मध्वः सोमस्य अश्विना मदाय प्रत्नः होता आ विवासते वाम् बर्हिष्मती
रातिः विऽश्रिता गीः इषा यातं नासत्या उप वाजैः ॥

अश्विना हे अश्विनौ, मध्वः मधुनः माधुर्योपेतस्य सोमस्य सोमरससंबन्धिनः तत्स्वीकरण-जन्यस्य मदाय युवयोर्हर्षाय प्रत्नः चिरन्तनः होता आह्वाता यजमानः वाम् युवां आविवासते समन्तात् परिचरति। अपि च रातिः दातव्यं, युवाभ्यां अर्पणीयं सर्वं बर्हिष्मती आस्तीर्णेन बर्हिषा युक्तं, सन्नद्धं अन्तर्वेदिप्रदेशमासादितम्। तथा गीः स्तुतिलक्षणा वाक् च विश्रिता समवेता, सुसङ्गता सेवायै युवयोः। हे नासत्या नासत्यौ, इषा प्रेरणाशक्त्या सह वाजैः वीर्यसमृद्धिभिश्च सह उप यातम् अस्मत्समीपं प्राप्नुतम्॥ विश्रिता–श्रिञ् सेवायाम्, निष्ठा॥

द्वितीयामृचमाह—

यो वामश्विना मनसो जवीयान्रथः स्वश्वो विश आजिगाति।
येन गच्छथः सुकृतो दुरोणं तेन नरा वर्तिरस्मभ्यं यातम्॥२॥

यः वाम् अश्विना मनसः जवीयान् रथः सुऽअश्वः विशः आऽजिगाति
येन गच्छथः सुऽकृतः दुरोणम् तेन नरा वर्तिः अस्मभ्यम् यातम्॥

हे अश्विना अश्विनौ, वाम् युवयोः स्वभूतः मनसो जवीयान् मनोवेगादप्यतिशयेन वेगवान् स्वश्वः शोभनाश्वः, ईदृशः यः रथः विशः देवसेविनीः प्रजाः आजिगाति आभिमुख्येन गच्छति, येन रथेन सुकृतः शोभनकर्मकारिणः दुरोणम् द्वारोपेतं गृहं युवां गच्छथः, तेन रथेन हे नरा नेतारौ, अस्मभ्यम् अस्मदनुग्रहार्थं वर्तिः वर्तनाधिकरणं गृहं यातम् प्राप्नुतम्॥ जवीयान्–जवशब्दान्मतुप्, तत ईयसुन् आतिशायनिकः, विन्मतोर्लुक्, टेरिति टिलोपः। आजिगाति–गतिकर्मसु पठितः, अन्यत्र स्तुत्यर्थकः॥

तृतीयामृचमाह—

ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन।
मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता॥३॥

ऋषिम् नरौ अंहसः पाञ्चऽजन्यम् ऋबीसात् अत्रिम् मुञ्चथः गणेन
मिनन्ता दस्योः अशिवस्य मायाः अनुऽपूर्वम् वृषणा चोदयन्ता॥

अयमर्थः पूर्वमुक्तो 'हिमेनाग्नि'मित्यत्र। स एव प्रकारान्तरेणोच्यते, हे नरौ नेतारौ, वृषणा वर्षितारौ, पाञ्चजन्यम् पञ्चसु अन्नप्राणमनोविज्ञानानन्देषु भवं, एवं पञ्चधा लब्धजन्मानं अत्रिम् ऋषिम् अंहसः पापरूपात् ऋबीसात् अन्धकारगृहावासात् मुञ्चथः अमोचयतम्। न केवलं ऋषिं, गणेन तदनुचरसमूहेन सह, तस्य बहिरन्तरिन्द्रियग्रामेण सह तममोचयतम्। किं कुर्वन्तौ? अशिवस्य अशुभस्य पापस्य दस्योः असुरस्य मायाः कपटयुक्ताः शक्तीः प्रज्ञा वा मिनन्ता हिंसन्तौ, अनुपूर्वम् आनुपूर्व्येण चोदयन्ता चोदयन्तौ, प्रेरयन्तौ, अन्तर्गुप्ताः दस्युमायाः व्यक्तीकृत्य स्पष्टं प्रध्वंसयितुं प्रेरयन्तौ॥

चतुर्थीमृचमाह—

अश्वं न गूळ्हमश्विना दुरेवैर्ऋषिं नरा वृषणा रेभमप्सु।
सं तं रिणीथो विप्रुतं दंसोभिर्न वां जूर्यन्ति पूर्व्या कृतानि॥४॥

अश्वम् न गूळ्हम् अश्विना दुःऽएवैः ऋषिम् नरा वृषणा रेभम् अप्ऽसु
सं तं रिणीथः विऽप्रुतम् दंसःऽभिः न वाम् जूर्यन्ति पूर्व्या कृतानि॥

हे नरा नेतारौ, वृषणा वर्षितारौ अश्विना, दुरेवैः दुष्प्रापैः असुरादिशत्रुबलैः अप्सु उदकेषु (गूढार्थे उक्तः) गूढम् निगूढं रेभम् ऋषिं उन्नीय विप्रुतमश्वम् न विप्लुताङ्गं व्याक्षिप्तगात्रयुक्तं व्याधितमश्वमिव तम् ऋषिं संरिणीथः समधत्तं युवाम्। कैः? दंसोभिः स्वकीयकर्मभिः भैषज्यरूपैः दिव्यैः। वाम् युवयोः पूर्व्या कृतानि चिरन्तनानि कर्माणि न जूर्यन्ति न जीर्णानि भवन्ति, सर्वदा सफलानि नव्यानीव वीर्यवन्ति॥ दुरेवैः—दुरुपसृष्टादेतेः खल्। रिणीथः—री गतिरेषणयोः, क्रैयादिकः। जूर्यन्ति—जूष् वयोहानौ, दिवादित्वात् श्यन्, छन्दसि उत्वम्॥

पञ्चमीमृचमाह—

सुषुप्वांसं न निर्ऋतेरुपस्थे सूर्यं न दस्रा तमसि क्षियन्तम्।
शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वन्दनाय॥५॥

सुसुप्वांसम् न निःऽऋतेः उपऽस्थे सूर्यम् न दस्रा तमसि क्षियन्तम्
शुभे रुक्मम् न दर्शतम् निऽखातम् उत् ऊपथुः अश्विना वन्दनाय॥

निर्ऋतिर्भूनामेति सायणः। सर्वारिष्टहेतुभूतपापदेवता निर्ऋतिः। निर्ऋतेः तादृश्याः उपस्थे उत्सङ्गे सुषुप्वांसम् न सुप्तवन्तं, अत्यन्तदुरवस्थामापन्नं पुरुषमिव स्थितं, तमसि क्षियन्तम् सूर्यम् न

अन्धकारे वसन्तं सूर्यमिव स्थितं, शुभे शोभनार्थं प्रभावत् रुक्मम् न सुवर्णमिव दर्शतम् दर्शनीयं, एवंभूतमृषिं निखातम् निमज्जितमरातिभिः वन्दनाय वन्दनम् ऋषिं, हे दस्रा दस्रौ, अश्विना अश्विनौ, युवां उदूपथुः उद्धृतवन्तौ॥ सुषुप्वांसम्–ञिष्वप् शये, लिटः क्वसुः, वचिस्वपीत्यादिना संप्रसारणम्, द्विर्वचनादि॥

इति प्रथमस्याष्टमे त्रयोदशो वर्गः

षष्ठीमृचमाह—

तद्वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन्।
शफादश्वस्य वाजिनो जनाय शतं कुम्भाँ असिञ्चतं मधूनाम्॥६॥

तत् वाम् नरा शंस्यम् पज्रियेण कक्षीवता नासत्या परिऽज्मन् शफात् अश्वस्य वाजिनः जनाय शतम् कुम्भान् असिञ्चतम् मधूनाम्॥

हे नरा नेतारौ, नासत्या अश्विनौ, परिज्मन् परिगमने अभीष्टस्य प्रापणे निमित्ते सति, पज्रियेण आङ्गिरसेन कक्षीवता रहस्यज्ञानयुक्तेन ऋषिणा सूक्तस्य द्रष्ट्रा मया वाम् युवयोः संबन्धि तत् तत्कर्म शंस्यम् शंसनीयम्। यत् (अध्याहार्यम्) जनाय आश्रिताय पुरुषाय वाजिनः बलवेगसमृद्धस्य अश्वस्य युष्मदीयस्य शफात् खुरान्निर्गतैः मधूनाम् मधुपूरितैः शतम् कुम्भान् शतसंख्याकघटैः असिञ्चतम् अवर्षतम्। यदेतन्मधुभिर्वर्षणं तच्छंस्यम्॥

सप्तमीमृचमाह—

युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय।
घोषायै चित्पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम्॥७॥

युवम् नरा स्तुवते कृष्णियाय विष्णाप्वम् ददथुः विश्वकाय घोषायै चित् पितृऽसदे दुरोणे पतिम् जूर्यन्त्यै अश्विनौ अदत्तम्॥

हे नरा नेतारौ, अश्विनौ युवम् युवां स्तुवते स्तुतिं कुर्वते कृष्णियाय कृष्णपुत्राय विश्वकाय विष्णाप्वम् पुत्रं विनष्टं ददथुः दत्तवन्तौ। घोषायै चित् देवान् प्रति स्तुतिभिः घोषयति घोषा (कक्षीवतः पुत्री रुग्णा अत एव आचार्धक्यमनूढा अश्विनोरनुग्रहात् यौवनारोग्यभर्तृसंपन्ना जातेति इतिहासः) तस्यै अपि पतिम् अदत्तम् भर्तारं दत्तवन्तौ। कीदृश्यै? दुरोणे जनकस्य गृहे पितृषदे पितृसमीपे निषण्णायै जूर्यन्त्यै जरां प्राप्नुवत्यै॥ पितृषदे–षद्लृ विशरणादिषु, क्विप्॥

अष्टमीमृचमाह—

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।
प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥८॥

युवम् श्यावाय रुशतीम् अदत्तम् महः क्षोणस्य अश्विना कण्वाय
प्रऽवाच्यम् तत् वृषणा कृतम् वाम् यत् नार्सदाय श्रवः अधिऽअधत्तम् ॥

हे अश्विना, युवम् युवां श्यावाय श्यामवर्णाय ऋषये रुशतीम् आरोचमानां दीप्तिं अदत्तम् दत्तवन्तौ। क्षोणस्य एकत्रैव निवसते, विभक्तिव्यत्ययः, कण्वाय प्राज्ञाय ऋषये महः तेजः अदत्तम्। हे वृषणा वर्षितारौ, वाम् युवयोः संबन्धि तत् कृतम् तत्कर्म प्रवाच्यम् प्रशंसनीयं यत् नार्षदाय नृषदपुत्राय श्रवः श्रवणं अध्यधत्तम् दत्तवन्तौ स्थः॥ क्षोणस्य–क्षि निवासगत्योः, कर्तरि ल्युट्, पृषोदरादित्वात् क्षोणभावः। नार्षदाय–ऋष्यन्धकेत्यण् ॥

नवमीमृचमाह—

पुरू वर्पांस्यश्विना दधाना नि पेदव ऊहथुराशुमश्वम् ।
सहस्रसां वाजिनमप्रतीतमहिहनं श्रवस्यं१ तरुत्रम् ॥९॥

पुरु वर्पांसि अश्विना दधाना नि पेदवे ऊहथुः आशुम् अश्वम् सहस्रऽसाम्
वाजिनम् अप्रतिऽइतम् अहिऽहनम् श्रवस्यम् तरुत्रम् ॥

हे अश्विना, पुरु बहूनि वर्पांसि रूपाणि दधाना धारयन्तौ युवां आशुम् शीघ्रगामिनं अश्वम् पेदवे एतस्मै स्तुवते न्यूहथुः नितरां प्रापितवन्तौ, दत्तवन्तौ। अश्विनोर्बहुरूपधारणं तु प्रसङ्गवशाद्भक्तानुग्रहार्थमिष्टरूपस्वीकरणं दैवतसामर्थ्यमावेदयति। कीदृशमश्वम्? सहस्रसाम् धनसहस्रस्य सनितारं दातारं वाजिनम् बलसमृद्धियुक्तं अप्रतीतम् अप्रतिगतमरातिभिः अहिहनम् अहीनां वृत्राणामसुराणां हन्तारं श्रवस्यम् श्रवणे दिव्ये आन्तरे वा भवं, दिव्यश्रवणावेशात्प्राणबलवेगस्य प्रादुर्भावो बोध्यः। तरुत्रम् तरितारम् ॥ सहस्रसाम्–षणु दाने। श्रवस्यम्–श्रवस्-शब्दात् भवे यत्। तरुत्रम्–तरतेः उत्रप्रत्ययः ॥

दशमीमृचमाह—

एतानि वां श्रवस्या सुदानू ब्रह्माङ्गूषं सदनं रोदस्योः ।
यद्वां पज्रासो अश्विना हवन्ते यातमिषा च विदुषे च वाजम् ॥१०॥

एतानि वाम् श्रवस्या सुदानू इति सुऽदानू ब्रह्म आङ्गूषम् सदनम् रोदस्योः यत् वाम् पज्रासः अश्विना हवन्ते यातम् इषा च विदुषे च वाजम् ॥

हे सुदानू शोभनदानौ अश्विना अश्विनौ, वाम् युवयोः संबन्धीनि एतानि उक्तानि वक्ष्यमाणानि च वीर्याणि श्रवस्या श्रवणार्हाणि सर्वैः श्रवणीयानि (अत्र अर्हार्थे यत्) भवन्ति। रोदस्योः द्यावापृथिव्योः दिवं पृथिवीं चाविश्य तद्रूपतयावस्थितयोः युवयोः सदनम् निवेशनभूतं आङ्गूषम् आघोषणीयं ब्रह्म मन्त्रात्मकं स्तोत्रं निष्पन्नं भवतीति शेषः। मन्त्रे देवतासान्निध्यमुक्तम्। यत् यदा पज्रासः आङ्गिरसाः वाम् युवां हवन्ते आह्वयन्ति तदानीं इषा च प्रेरणाशक्त्या च सह यातम् गच्छतम्, विदुषे जानते युष्मन्महिमरहस्यं इति शेषः। वाजम् च बलसमृद्धिं च प्रयच्छतम् ॥

इति प्रथमस्याष्टमे चतुर्दशो वर्गः

एकादशीमृचमाह—

सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदन्ता।
अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतम् ॥११॥

सूनोः मानेन अश्विना गृणाना वाजम् विप्राय भुरणा रदन्ता अगस्त्ये ब्रह्मणा ववृधाना सम् विश्पलाम् नासत्या अरिणीतम् ॥

हे भुरणा भर्तारौ पोषकौ, अश्विना अश्विनौ, सूनोः मानेन पुत्रस्य पूज्यबुद्ध्या, पितरि पुत्रस्येव पूज्यभावेन गृणाना स्तूयमानौ। अत्र सायण एवमाह "सूनोः कुम्भात्प्रसूतस्य अगस्त्यस्य खेलपुरोहितस्य संबन्धिना मानेन स्तुत्यस्य परिच्छेदकेन स्तोत्रेण गृणाना स्तूयमानौ"। विप्राय मेधाविने भरद्वाजाय वाजम् रदन्ता समृद्धिं विलिखन्तौ निष्पादयन्तौ युवां ब्रह्मणा मन्त्रेण अगस्त्ये महर्षौ ववृधाना प्रवर्धितौ सन्तौ हे नासत्या नासत्यौ, विश्पलाम् पूर्वं प्रस्तुतां छिन्नपादां समरिणीतम् जङ्घया समयोजयतम् ॥ भुरणा—भुरण धारणपोषणयोः, कण्ड्वादिः, पचाद्यच्। ववृधाना—वृधेर्लिटः कानच्, संहितायामभ्यासस्य दीर्घत्वम् ॥

द्वादशीमृचमाह—

कुह यान्ता सुष्टुतिं काव्यस्य दिवो नपाता वृषणा शयुत्रा।
हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन् ॥१२॥

कुह यान्ता सुऽस्तुतिम् काव्यस्य दिवः नपाता वृषणा शयुऽत्रा
हिरण्यस्यऽइव कलशम् निऽखातम् उत् ऊपथुः दशमे अश्विना अहन् ॥

हे दिवो नपाता द्योतमानस्य स्वर्लोकस्य पुत्रौ, वृषणा वर्षितारौ, शयुत्रा शयुनाम्नस्त्रायकौ अश्विना हे अश्विनौ, काव्यस्य उशनसो भार्गवस्य (कविर्द्रष्टा स्तोता तत्पुत्रः काव्यः सौरांशुभूतो भृगुवंशजः) सुष्टुतिम् शोभनां स्तुतिं यान्ता प्राप्नुवन्तौ कुह कुत्र स्थाने हिरण्यस्यऽइव कलशम् सुवर्णपूरितं कलशमिव निखातम् भूम्यां निक्षिप्तं ऋषिं रेभं, सामर्थ्यात् दशमे अहन् 'दश रात्रीर्नव द्यून्' इति प्रागुक्तेः, दशमेऽहनि उदूपथुः उन्निन्यथुः ॥ कुह–सप्तम्यर्थे हप्रत्ययश्छन्दसि । शयुत्रा–अशित्रादिभ्य इत्रोत्रौ इति शीङ उत्रः, "यद्यन्तोदात्तता न स्यात् तर्ह्येवं शयुं त्रायेते इति शयुत्रौ" इति सायणः ॥

त्रयोदशीमृचमाह—

युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः ।
युवो रथं दुहिता सूर्यस्य सह श्रिया नासत्यावृणीत ॥१३॥

युवम् च्यवानम् अश्विना जरन्तम् पुनः युवानम् चक्रथुः शचीभिः युवोः रथम् दुहिता सूर्यस्य सह श्रिया नासत्या अवृणीत ॥

हे अश्विना अश्विनौ, युवम् युवां शचीभिः शक्तिभिः क्रियात्मिकाभिः, जरन्तम् जीर्यन्तं च्यवानम् स्तुतीनां च्यावयितारं च्यवनमृषिं पुनः युवानम् यौवनोपेतं चक्रथुः कृतवन्तौ । अपि च हे नासत्या नासत्यौ, युवोः युवयोः रथम् सूर्यस्य दुहिता सूर्या, प्रस्तुतपूर्वा श्रिया सह शोभया, कान्तिसंपदा सह अवृणीत समभजत ॥ जरन्तम्–जीर्यन्तं, व्यत्ययेन शप् । युवोः–युवयोः, यत्वाभावश्छान्दसः ॥

चतुर्दशीमृचमाह—

युवं तुग्राय पूर्व्येभिरेवैः पुनर्मन्यावभवतं युवाना ।
युवं भुज्युमर्णसो निः समुद्राद्विभिरूहथुर्ऋज्रेभिरश्वैः ॥१४॥

युवम् तुग्राय पूर्व्येभिः एवैः पुनःऽमन्यौ अभवतम् युवाना युवम् भुज्युम् अर्णसः निः समुद्रात् विऽभिः ऊहथुः ऋज्रेभिः अश्वैः ॥

हे युवाना यावयितारौ अनिष्टानां, अश्विनौ, युवम् युवां पूर्व्येभिः चिरन्तनैः एवैः गन्तृभिः, आश्रितान् भक्तान् प्रति गमनैरित्यर्थः तुग्राय भुज्योर्जनकाय पुनर्मन्यौ युष्मदीयभुज्युरक्षणात्प्रागिव परमपि स्तोतव्यौ अभवतम् । युवम् युवां भुज्युम् तुग्रपुत्रं अर्णसः अर्णस्वतः, प्राणबललक्षणात् समुद्रात् अपां राशेः सकाशात् विभिः पक्षिवद्वेगगन्तृभिः ऋज्रेभिः ऋजुगमनैः अश्वैः उक्तलक्षणैः निरूहथुः निर्गमय्य गन्तव्यं स्थानं प्रापितवन्तौ ॥ एवैः–इण् गतौ, इण्शीङ्भ्यां वन् । पुनर्मन्यौ–मन ज्ञाने, अत्र स्तुत्यर्थः, पचाद्यच्, अर्हार्थे यः । युवाना–यु मिश्रणामिश्रणयोः, कनिन्युवृषीत्यादिना कनिन् । अर्णसः–अर्णस्-शब्दान्मत्वर्थीयस्य लोपः ॥

पञ्चदशीमृचमाह—

अजोहवीदश्विना तौग्र्यो वां प्रोळ्हः समुद्रमव्यथिर्जगन्वान् ।
निष्टमूहथुः सुयुजा रथेन मनोजवसा वृषणा स्वस्ति ॥ १५ ॥

अजोहवीत् अश्विना तौग्र्यः वाम् प्रऽउळ्हः समुद्रम् अव्यथिः जगन्वान्
निः तम् ऊहथुः सुऽयुजा रथेन मनःऽजवसा वृषणा स्वस्ति ॥

हे अश्विना अश्विनौ, वाम् युवां तौग्र्यः तुग्रपुत्रो भुज्युः प्रोळ्हः पित्रा प्रापितः समुद्रम् अपां राशिं जगन्वान् तत्राप्सु निमग्नोऽपि अव्यथिः व्यथामप्राप्त एव सन् अजोहवीत् आह्वयत् । तम् तथा आहूतवन्तं, हे मनोजवसा मनोवद्वेगयुक्तौ वृषणा वर्षितारौ अश्विनौ, सुयुजा सुष्ठु अश्वैर्युक्तेन रथेन स्वस्ति क्षेमं यथा भवति तथा निरूहथुः प्राप्तव्यं प्रापितवन्तौ ॥ जगन्वान्–गमेः लिटः क्वसुः, इडभावः मकारस्य नकारश्च छन्दसि विकल्पनात् ॥

इति प्रथमस्याष्टमे पञ्चदशो वर्गः

षोडशीमृचमाह—

अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ।
वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण ॥ १६ ॥

अजोहवीत् अश्विना वर्तिका वाम् आस्नः यत् सीम् अमुञ्चतम् वृकस्य
वि जयुषा ययथुः सानु अद्रेः जातम् विष्वाचः अहतम् विषेण ॥

हे अश्विना अश्विनौ, वाम् युवां वर्तिका पक्षिस्त्री (गूढार्थः पूर्वं विवृतः) अजोहवीत् आह्वयत् । यत् सीम् यदा खलु वृकस्य छेदकस्यासुरस्य आस्नः आस्यात् अमुञ्चतम् अमोचयतं ताम् ।

अपि च जयुषा जयशीलेन रथेन अद्रेः सानु पर्वतस्याग्रं विययथुः व्याप्य गतवन्तौ (परिविष्टं जाहुषमित्यत्र विवृतम्) तथा विष्वाचः विविधमतियुक्तस्यासुरस्य एतन्नाम्नः जातम् अपत्यं विषेण अहतम् क्ष्वेलेन अहतं युवां हतवन्तावित्यध्याहार्यम् ॥ अजोहवीत्–ह्वयतेर्यङ्लुगन्ता-ल्लुङि तिपि यङो वेति इडागमः, द्विर्वचनात्पूर्वमेव ह्वयतेः संप्रसारणम्। विष्वाचः–विषु साम्येन, आभिमुख्येन अञ्चतीति विग्रहः, ऋत्विगित्यादिना क्विन् ॥

सप्तदशीमृचमाह—

शतं मेषान्वृक्यै मामहानं तमः प्रणीतमशिवेन पित्रा ।
आक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुर्विचक्षे ॥१७॥

शतम् मेषान् वृक्यै ममहानम् तमः प्रऽनीतम् अशिवेन पित्रा आ अक्षी इति ऋज्रऽअश्वे अश्विनौ अधत्तम् ज्योतिः अन्धाय चक्रथुः विऽचक्षे ॥

शतं मेषान् वृक्ये चक्षदानमित्यत्र व्याख्यानमनुसन्धेयम्। शतम् मेषान् शतसंख्याकान् मेषान् उक्तस्वरूपान् वृक्ये वृकस्त्रियै ममहानम् पूजितवन्तं अशिवेन असुखकारिणा पित्रा जनकेन तमः अन्धकारं, दृष्टिराहित्यरूपं प्रणीतम् प्रापितं ऋज्राश्वं अश्विनौ चक्षुष्मन्तं कृतवन्तौ इति शेषः। तदेवोच्यते। हे अश्विनौ, अक्षी नष्टे चक्षुषी ऋज्राश्वे एतस्मिन् आ अधत्तम् पुनर्दर्शन-समर्थे आहितवन्तौ युवाम्। एवं अन्धाय ऋज्राश्वाय ज्योतिः तमःप्रध्वंसनं दिव्यं प्रकाशकं चक्षुः विचक्षे विशिष्य दर्शनाय चक्रथुः कृतवन्तौ ॥ ममहानम्–मह पूजायाम्, लिटः कानच् ॥

अष्टादशीमृचमाह—

शुनमन्धाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति ।
जारः कनीन इव चक्षदान ऋज्राश्वः शतमेकं च मेषान् ॥१८॥

शुनम् अन्धाय भरम् अह्वयत् सा वृकीः अश्विना वृषणा नरा इति जारः कनीनःऽइव चक्षदानः ऋज्रऽअश्वः शतम् एकम् च मेषान् ॥

भरम् पोषकं पोषणहेतुभूतं शुनम् सुखं अन्धाय तस्मै ऋज्राश्वाय इच्छन्ती सा वृकी पूर्वोक्त-मेषादिनी हे अश्विना अश्वयुक्तौ, वृषणा अभीष्टानां वर्षितारौ, नरा नेतारौ, इति संबोध्य अह्वयत् आहूतवती। तथा आहूय किमुक्तं तया? उत्तरेणार्धर्चेनाह। कनीनःऽइव यथा प्राप्तयौवनः कामुकः, कान्तो वा जारः पारदारिकः सर्वं धनं प्रयच्छति परस्त्रियै तथा ऋज्राश्वः शतम् एकम् च

मेषान्, चक्षदानः शकलीकुर्वन्, मह्यं प्रादादिति अध्याहार्यम् । कथातत्त्वं पूर्वमुक्तम् ॥ कनीनः–युवशब्दस्य कनादेशः, अथवा कनी दीप्तिकान्तिगतिषु, औणादिक ईनप्रत्ययः ॥

एकोनविंशीमृचमाह—

मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण्या सं रिणीथः ।
अथा युवामिदह्वयत्पुरंन्धिरागच्छतं सीं वृषणाववोभिः ॥१९॥

मही वाम् ऊतिः अश्विना मयःऽभूः उत स्रामम् धिष्ण्या सम् रिणीथः अथ युवाम् इत् अह्वयत् पुरम्ऽधिः आ अगच्छतम् सीम् वृषणौ अवःऽभिः ॥

हे अश्विना अश्विनौ, वाम् युवयोः मही महती ऊतिः रक्षा मयोभूः सुखस्य भावयित्री उत अपि च हे धिष्ण्या धिषणा स्तुतिलक्षणा धीस्तत्र सन्तौ, स्तोत्रे सन्निहिता हि देवता, स्रामम् (स्रंसतेः) स्रस्तं विश्लथितं विश्लिष्टाङ्गमिति यावत्, प्रागुक्तमत्र्यादिकं पुरुषं संरिणीथः संगताङ्गं कुरुथः । अथ अपि च युवामित् युवामेव पुरन्धिः बहुधीः घोषादिका अह्वयत् आह्वयत्, हे वृषणौ वर्षितारौ, सीम् एनां अवोभिः रक्षणैः सह आगच्छतम् अभिमुखं प्राप्तवन्तौ ॥ मयोभूः–भवतेरन्तर्भावितण्यर्थात् क्विप् ॥

विंशीमृचमाह—

अधेनुं दस्रा स्तर्यं१ विषक्तामपिन्वतं शयवे अश्विना गाम् ।
युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषाम् ॥२०॥

अधेनुम् दस्रा स्तर्यम् विऽसक्ताम् अपिन्वतम् शयवे अश्विना गाम् युवम् शचीभिः विऽमदाय जायाम् नि ऊहथुः पुरुऽमित्रस्य योषाम् ॥

हे दस्रा कर्मसु कुशलौ, अश्विना, विषक्ताम् असंगतावयवां कृशाङ्गीं अत एव स्तर्यम् प्रसवासमर्था अत एव अधेनुम् अदोग्ध्रीं, ईदृशीं गाम् शयवे ऋषये अपिन्वतम् पयसा अपूरयतम् (इयमपि कथा गूढार्था प्रागुक्ता) । अपि च पुरुमित्रस्य बहुसुहृद्युक्तस्य, राज्ञः, योषाम् कुमारीं शचीभिः स्वीयाभिः शक्तिभिः विमदाय ऋषये युवम् युवां जायाम् न्यूहथुः प्रापितवन्तौ ॥ विषक्ताम्–षञ्ज सङ्गे । अपिन्वतम्–पिवि सेचने ॥

इति प्रथमस्याष्टमे षोडशो वर्गः

एकविंशीमृचमाह—

यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा।
अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ॥२१॥

यवम् वृकेण अश्विना वपन्ता इषम् दुहन्ता मनुषाय दस्रा अभि दस्युम् बकुरेण धमन्ता उरु ज्योतिः चक्रथुः आर्याय ॥

हे दस्रा कर्मकुशलौ, अश्विना अश्विनौ, युवां आर्याय उद्योगशीलाय मनुषाय मनुष्यार्थं, मनोरर्थं वा (मनुर्मन्ता मूलपुरुषो मनुजानां) त्रिविधं कर्म कृतवन्तौ। तान्याह—अन्नमयदेह-धारणाय यवम् धान्योपलक्षणं, स्थूलदेहोपादानभूतं वृकेण विकर्तनेन लाङ्गलेन कृष्टक्षेत्रे वपन्ता आवापयन्तौ, तथा इषम् प्रेरणाशक्तिं मध्यमस्थानसंबन्धिनि प्राणदेहे दुहन्ता क्षारयन्तौ, तथा तत्रैव दस्युम् क्षपयितारमसुरं बकुरेण भासमानेन वज्रेण अभि धमन्ता अभिघ्नन्तौ, एवं त्रिविधं कर्म कृतवन्तौ युवां तस्मै आर्याय उरु ज्योतिः विस्तीर्णं ऋतं बृहत् ज्योतिः चक्रथुः कृतवन्तौ आविर्भावितवन्तावित्यर्थः ॥ बकुरेण—यास्को बहुधा निर्वचनं कल्पयति, तमेवोदाहरति सायणः, वयमप्यन्यथा शरणं नास्तीति तमेवोदाहरामः "बकुरो भास्करो भयङ्करो भासमान" इत्यादि ॥

द्वाविंशीमृचमाह—

आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम्।
स वां मधु प्र वोचदृतायन्त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वाम् ॥२२॥

आथर्वणाय अश्विना दधीचे अश्व्यम् शिरः प्रति ऐरयतम् सः वाम् मधु प्र वोचत् ऋतऽयन् त्वाष्ट्रम् यत् दस्रौ अपिऽकक्ष्यम् वाम् ॥

"तद्वां नरा सनये" इत्यत्रोक्तमेवार्थमत्र स्मारयामः। हे दस्रौ अश्विना कर्मकुशलौ अश्विनौ, आथर्वणाय अथर्वपुत्राय दधीचे दध्यङ्नाम्ने अश्व्यम् अश्वसंबन्धि शिरः प्रत्यैरयतम् प्रत्यधत्तम्। सः स च दध्यङ् वाम् युवाभ्यां ऋतायन् ऋतमात्मन इच्छन् सत्यप्रतिज्ञः सन् मधु मधुविद्यां प्र वोचत्, त्वाष्ट्रम् त्वष्टुर्विश्वकर्मणः सकाशात् (इन्द्रादिति प्राहुः) लब्धं यत् अपिकक्ष्यम् अपिहितं रहस्यं मधुप्रवर्ग्यविद्यात्मकं, तत्प्रावोचत् ॥

त्रयोविंशीमृचमाह—

सदा कवी सुमतिमा चके वां विश्वा धियो अश्विना प्रावतं मे ।
अस्मे रयिं नासत्या बृहन्तमपत्यसाचं श्रुत्यं रराथाम् ॥२३॥

सदा कवी इति सुऽमतिम् आ चके वाम् विश्वाः धियः अश्विना प्र अवतम् मे अस्मे इति रयिम् नासत्या बृहन्तम् अपत्यऽसाचम् श्रुत्यम् रराथाम् ॥

हे कवी द्रष्टारौ सर्वस्य, अश्विना अश्विनौ, वाम् युवयोः सुमतिम् शोभनां बुद्धिं सदा सर्वदा आ चके आभिमुख्येन प्रार्थये, मे मत्संबन्धिनीः विश्वाः धियः सर्वाः स्तुतिलक्षणाः बुद्धीः प्रावतम् प्रकर्षेण रक्षतम् । अपि च हे नासत्या नासत्यौ, अस्मे अस्मभ्यं बृहन्तम् महान्तं अपत्यसाचम् अपत्यैः सह सचते संगच्छते इति अपत्यसाच् तं, सन्तानेऽपि अविच्छेदेन संगतमित्यर्थः, श्रुत्यम् प्रशंसनीयं एवंभूतं सर्वोत्कृष्टं रयिम् धनं रराथाम् प्रयच्छतम् ॥ अस्मे—चतुर्थीबहुवचनस्य शे आदेशः । अपत्यसाचम्—छान्दसो ण्विः । श्रुत्यम्—श्रुतिः स्तुतिस्तत्र भवं, यत् । रराथाम्—रा दाने, लोटि व्यत्ययेनात्मनेपदम्, शपः श्लुः छन्दसि ॥

चतुर्विंशीमृचमाह—

हिरण्यहस्तमश्विना रराणा पुत्रं नरा वध्रिमत्या अदत्तम् ।
त्रिधा ह श्यावमश्विना विकस्तमुज्जीवस ऐरयतं सुदानू ॥२४॥

हिरण्यऽहस्तम् अश्विना रराणा पुत्रम् नरा वध्रिऽमत्याः अदत्तम् त्रिधा ह श्यावम् अश्विना विऽकस्तम् उत् जीवसे ऐरयतम् सुदानू इति सुऽदानू ॥

हे नरा नेतारौ, अश्विनौ, युवां रराणा रममाणौ सन्तौ वध्रिमत्याः एतस्यै ब्रह्मवादिन्यै (पूर्वं प्रस्तुतेयम्) हिरण्यहस्तम् एतं पुत्रम् अदत्तम् प्रायच्छतम् । अपि च हे अश्विना अश्विनौ, सुदानू शोभनदानौ, त्रिधा त्रेधा विकस्तम् विच्छिन्नं असुरैरिति शेषः, श्यावम् ऋषिं जीवसे जीवितुं उदैरयतम् उदगमयतम् । ह पादपूरणः ॥ त्रिषु स्थानेषु अन्नप्राणमनःसु प्रहतं विनाशितमृषिमुदैरयतमित्यर्थः ॥ रराणा—रमतेः शानच्, शपः श्लुः, व्यत्ययेन मकारस्यात्वम् । विकस्तम्—कसि गतिविनाशनयोरित्यस्मात् क्तः ॥

पञ्चविंशीमृचमाह—

एतानि वामश्विना वीर्याणि प्र पूर्व्याण्यायवोऽवोचन् ।
ब्रह्म कृण्वन्तो वृषणा युवभ्यां सुवीरासो विदथमा वदेम ॥२५॥

एतानि वाम् अश्विना वीर्याणि प्र पूर्व्याणि आयवः अवोचन् ब्रह्म कृण्वन्तः वृषणा युवऽभ्याम् सुऽवीरासः विदथम् आ वदेम ॥

हे अश्विना अश्विनौ, वाम् युवयोः पूर्व्याणि चिरन्तनानि एतानि एवमुक्तानि वीर्याणि वीरकर्माणि आयवः मनुष्याः पूर्वे पितरः प्रावोचन् प्रोक्तवन्तः । वृषणा हे वर्षितारौ, युवभ्याम् युवाभ्यां वयमपि ब्रह्म कृण्वन्तः मन्त्रात्मकं स्तोत्रं कुर्वन्तः सुवीरासः शोभनवीर्योपेताः सन्तः विदथम् ज्ञानागमं सर्वोत्कृष्टज्ञानलाभं आ वदेम आभिमुख्येन प्रशंसेम ॥ विदथम्—रुविदिभ्यां किदिति अथप्रत्ययः ॥

इति प्रथमस्याष्टमे सप्तदशो वर्गः

'आ वामि'त्येकादशर्चं तृतीयं सूक्तं कक्षीवत आर्षं त्रैष्टुभमाश्विनम् ॥

तत्र प्रथमामृचमाह—

आ वां रथो अश्विना श्येनपत्वा सुमृळीकः स्ववाँ यात्वर्वाङ् ।
यो मर्त्यस्य मनसो जवीयान्त्रिवन्धुरो वृषणा वातरंहाः ॥१॥

आ वाम् रथः अश्विना श्येनऽपत्वा सुऽमृळीकः स्वऽवान् यातु अर्वाङ् यः मर्त्यस्य मनसः जवीयान् त्रिऽवन्धुरः वृषणा वातऽरंहाः ॥

हे अश्विना अश्विनौ, वाम् युवयोः संबन्धी रथः, अर्वाङ् अस्मत्समीपं आयातु आगच्छतु । कीदृशः? श्येनपत्वा श्येनः पतत्री इव शीघ्रं पतन् सुमृळीकः शोभनसुखयुक्तः स्ववान् स्वः आत्मा तद्वान् वशी इत्यर्थः, धनवानिति सायणः, हे वृषणा वर्षितारौ यः युष्मद्रथः मर्त्यस्य मनुष्यस्य मनसः जवीयान् अतिशयेन वेगवान् त्रिवन्धुरः त्रिविधसारथिस्थानयुक्तः वातरंहाः वायुवेग इव वेगवान् । मनसो जवीयानित्युक्त्या जगद्व्यापनं, वातरंहा इत्यनेन अप्रतिहतगतित्वं चेति भेदोऽवधेयः । त्रिवन्धुरः लोकत्रयापेक्षया स्थानत्रयम् बोध्यम् ॥ श्येनपत्वा—पततेः, अन्येभ्योऽपि दृश्यत इति वनिप् ॥

द्वितीयामृचमाह—

त्रिवन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक् ।
पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे ॥२॥

त्रिऽवन्धुरेण त्रिऽवृता रथेन त्रिऽचक्रेण सुऽवृता आ यातम् अर्वाक्
पिन्वतम् गाः जिन्वतम् अर्वतः नः वर्धयतम् अश्विना वीरम् अस्मे इति ॥

त्रिवन्धुरेणेत्यादौ त्रिकमधिकृत्य हिरण्यस्तूपसूक्ते (३४ सू.) विचारितम् । त्रिवन्धुरेण त्रिविधसारथिस्थानोपेतेन त्रिवृता त्रिधा वर्तमानेन त्रिचक्रेण चक्रत्रयोपेतेन सुवृता सुष्ठु वर्तमानेन, गच्छतेत्यर्थः रथेन, अर्वाक् समीपं अस्मदभिमुखं आयातम् आगच्छतम् । हे अश्विना, तथा आगत्य गाः अस्मदीयाः चिद्रश्मिलक्षणाः पिन्वतम् अमृतेन पूरयतम् । नः अस्माकं अर्वतः अश्वान् प्राणबललक्षणान् जिन्वतम् प्रीणयतम् । अपि च अस्मे अस्माकं वीरम् वीर्यबलं च वर्धयतम् प्रवृद्धं कुरुतम् ॥

तृतीयामृचमाह—

प्रवद्यामना सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।
किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥३॥

५-६६-२
(आर्च. १६५३)

प्रवत्ऽयामना सुऽवृता रथेन दस्रौ इमम् शृणुतम् श्लोकम् अद्रेः किम्
अङ्ग वाम् प्रति अवर्तिम् गमिष्ठा आहुः विप्रासः अश्विना पुराऽजाः ॥

हे दस्रौ अश्विनौ, प्रवद्यामना प्रकृष्टगमनेन सुवृता सुष्ठु वर्तमानेन, सुखेन गच्छता, रथेन आगत्य अद्रेः आदरं कुर्वतः स्तोतुर्मम इमम् श्लोकम् इमां स्तोत्रलक्षणां वाचं शृणुतम् आकर्णयतम् । अङ्ग अश्विना हे अश्विनौ, पुराजाः पुरा जाताः, पूर्वे विप्रासः मेधाविनः वाम् युवां अवर्तिम् अवर्तनं, स्तोतॄणां दैव्ये पदे स्थिरवासाभावं प्रति परिहर्तुं गमिष्ठा गन्तृतमौ आहुः वदन्ति, किम् "प्रदर्शनफलप्रश्ने वर्तते, किं न कथयन्ति कथयन्त्येवे"ति सायणः । एवं सति युवाभ्यामागन्तव्यं मामुद्दिश्य ॥ प्रवद्यामना–सोपसृष्टे धात्वर्थे वर्तमानात् प्रशब्दात् 'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिः, या प्रापणे, भावे मनिन्, ततो बहुव्रीहिः, प्रवत् याम ययोस्तौ इति । अद्रेः–दृङ् आदरे, आङ्पूर्वादस्मादौणादिकः क्रिप्रत्ययः आङो ह्रस्वश्च । गमिष्ठा–गन्तृशब्दात् तुश्छन्दसीति इष्ठन्, विभक्तेराकारः ॥

चतुर्थीमृचमाह—

आ वां श्येनासो अश्विना वहन्तु रथे युक्तास आशवः पतङ्गाः।
ये अप्तुरो दिव्यासो न गृध्रा अभि प्रयो नासत्या वहन्ति॥४॥

आ वाम् श्येनासः अश्विना वहन्तु रथे युक्तासः आशवः पतङ्गाः ये अप्ऽतुरः दिव्यासः न गृध्राः अभि प्रयः नासत्या वहन्ति॥

हे अश्विना अश्विनौ, रथे युक्तासः युक्ताः आशवः व्याप्नुवन्तः पतङ्गाः पतनपटवः श्येनासः पक्षिण इव पतन्तोऽश्वाः वाम् युवां आ वहन्तु अस्मदभिमुखमानयन्तु। ये अश्वाः अप्तुरः आप इव प्रवाहत्वरोपेताः दिव्यासो न गृध्राः दिव्याः पक्षिविशेषा इव शीघ्रगामिनः हे नासत्या, प्रयः प्रियं वस्तु किमपि दिव्यं, अन्नमिति सायणः, अभि अस्मदभिमुखं वहन्ति प्रापयन्ति॥ अप्तुरः—तुर त्वरणे, क्विप्॥

पञ्चमीमृचमाह—

आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी नरा दुहिता सूर्यस्य।
परि वामश्वा वपुषः पतङ्गा वयो वहन्त्वरुषा अभीके॥५॥

आ वाम् रथम् युवतिः तिष्ठत् अत्र जुष्ट्वी नरा दुहिता सूर्यस्य परि वाम् अश्वाः वपुषः पतङ्गाः वयः वहन्तु अरुषाः अभीके॥

हे नरा नेतारावश्विनौ, युवतिः यौवनोपेता सूर्यस्य दुहिता सूर्या जुष्ट्वी प्रीता सती वाम् युवयोः अत्र रथम् इमं रथं आतिष्ठत् आस्थिता आरूढवती। वाम् युवां तया सहितौ वपुषः वपुष्मन्तः, प्रशंसार्थस्य मत्वर्थीयस्य लोपः, पतङ्गाः उत्पतनपटवः वयः गच्छन्तः अरुषाः आरोचमानाः अश्वाः अभीके अस्मत्समीपे परि वहन्तु परिप्रापयन्तु॥ जुष्ट्वी—जुषी प्रीतिसेवनयोः, औणादिकः क्तुप्रत्ययः, वोतो गुणवचनादिति ङीष्॥

इति प्रथमस्याष्टमेऽष्टादशो वर्गः

षष्ठीमृचमाह—

उद्वन्दनमैरतं दंसनाभिरुद्रेभं दस्रा वृषणा शचीभिः।
निष्टौग्र्यं पारयथः समुद्रात्पुनश्च्यवानं चक्रथुर्युवानम्॥६॥

उत् वन्दनम् ऐरतम् दंसनाभिः उत् रेभम् दस्रा वृषणा शचीभिः निः

तौग्र्यम् पारयथः समुद्रात् पुनरिति च्यवानम् चक्रथुः युवानम् ॥

प्रागुक्तान्येवाश्विनवीर्याणि प्रस्तौति । हे अश्विनौ, वन्दनम् ऋषिं दंसनाभिः स्वीयैः कर्मभिः उदैरतम् उदगमयतं अधोऽन्धकारकूपात् । हे दस्रा कर्मवीरौ, वृषणा वर्षितारौ, शचीभिः शक्तिभिः स्वीयाभिः रेभम् ऋषिं उत् उदैरयतं, उत्तारितवन्तौ अज्ञानान्धकूपात् । तथा तौग्र्यम् तुग्रपुत्रं भुज्युं समुद्रात् निष्पारयथः तीरं प्रापितवन्तौ । च्यवानम् च्यवनमृषिं पुनर्युवानम् चक्रथुः वृद्धं पुनर्यौवनं प्रापितवन्तौ ॥ ऐरतम्–ईर गतौ कम्पने च, णिलोपः छान्दसः ॥

सप्तमीमृचमाह—

युवमत्रयेऽवनीताय तप्तमूर्जमोमानमश्विनावधत्तम् ।
युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा ॥७॥

युवम् अत्रये अवऽनीताय तप्तम् ऊर्जम् ओमानम् अश्विनौ अधत्तम् युवम् कण्वाय अपिऽरिप्ताय चक्षुः प्रति अधत्तम् सुऽस्तुतिम् जुजुषाणा ॥

हे अश्विनौ, युवम् युवां अवनीताय अधस्तात् प्रापिताय शत्रुभिरासुरबलैः अत्रये ऋषये तप्तम् पीडाकरं तापं अवारयेथाम् । अपि च अस्मै ओमानम् रक्षासुखकरं ऊर्जम् वीर्यवद्बलं अधत्तम् प्रायच्छतम् । सुष्टुतिम् शोभनां स्तुतिं जुजुषाणा सेवमानौ युवम् युवां अपिरिप्ताय अन्धकार-पटलेन पिहितदृष्टये कण्वाय महर्षये चक्षुः दर्शनेन्द्रियं प्रत्यधत्तम् प्रत्यस्थापयतम् ॥ ओमानम्–अवतेर्मनिः, वकारस्य ऊठ्, गुणः । अपिरिप्ताय–लिप उपदेहे, लस्य रेफः छान्दसः, कर्मणि निष्ठा । जुजुषाणा–जुषी प्रीतिसेवनयोः, छान्दसो लिट्, लिटः कानच्, विभक्तेराकारः ॥

अष्टमीमृचमाह—

युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय ।
अमुञ्चतं वर्तिकामंहसो निः प्रति जङ्घां विश्पलाया अधत्तम् ॥८॥

युवम् धेनुम् शयवे नाधिताय अपिन्वतम् अश्विना पूर्व्याय अमुञ्चतम् वर्तिकाम् अंहसः निः प्रति जङ्घाम् विश्पलायाः अधत्तम् ॥

हे अश्विना अश्विनौ, युवम् युवां पूर्व्याय पुरातनाय नाधिताय याचमानाय शयवे शयानाय ऋषये प्रस्तुतपूर्वाय धेनुम् अपिन्वतम् पयसा पूरितवन्तौ, अमृतक्षरणासमर्थां चिन्मयरश्मिलक्षणां

गां पुनरमृतस्य दोग्ध्रीमकुरुतम्। अपि च वर्तिकाम् पक्षिस्त्रियं तल्लक्षितमूर्ध्वं दिव्यं धाम जिगमिषुं जीवात्मानं वृकेण असुरेण ग्रस्तं अंहसः वृकमुखलक्षणात् पापात् निरमुञ्चतम् निरमोचयतम्। तथा विश्पलायाः जङ्घाम् छिन्नजङ्घायै असुरबलैरापादितगतिभङ्गायै विशां पालयित्र्यै पुनः जङ्घाम् प्रत्यधत्तम् गमनसाधनं प्रत्यस्थापयतम्॥

नवमीमृचमाह—

युवं श्वेतं पेदव इन्द्रजूतमहिहनमश्विनादत्तमश्वम्।
जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीड्वङ्गम्॥९॥

युवम् श्वेतम् पेदवे इन्द्रऽजूतम् अहिऽहनम् अश्विना अदत्तम् अश्वम् जोहूत्रम् अर्यः अभिऽभूतिम् उग्रम् सहस्रऽसाम् वृषणम् वीळुऽअङ्गम्॥

हे अश्विना अश्विनौ, युवम् युवां पेदवे शरणं प्रपन्नाय राजर्षये श्वेतम् स्वच्छं सत्त्वभूयस्त्वलक्षणं अश्वम् क्रियादाक्ष्योपलक्षणं प्राणबलभूयिष्ठं साङ्केतिकं अश्वं अदत्तम् दत्तवन्तौ। कीदृशमश्वम्? इन्द्रजूतम् इन्द्रेण युवाभ्यां गमितं, अहिहनम् अहेर्वृत्रस्य हन्तारं जोहूत्रम् अतिशयेनाह्वातारं देवानां असुरैः सह संग्रामे, अर्यः अरेः शत्रोः अभिभूतिम् अभिभवितारं उग्रम् उद्गूर्णबलं सहस्रसाम् संपत्सहस्रस्य दातारं वृषणम् अभीष्टस्य वर्षितारं वीड्वङ्गम् दृढाङ्गम्॥ इन्द्रजूतम्—जु सौत्रो धातुर्गत्यर्थः, अन्तर्भावितण्यर्थः, कर्मणि निष्ठा। जोहूत्रम्—ह्वयतेर्यङ्लुगन्तादौणादिकः त्रप्प्रत्ययः। अर्यः—अरिशब्दात् षष्ठ्येकवचने छन्दसि गुणस्य विकल्पितत्वादभावे यणादेशः॥

दशमीमृचमाह—

ता वां नरा स्ववसे सुजाता हवामहे अश्विना नाधमानाः।
आ न उप वसुमता रथेन गिरो जुषाणा सुविताय यातम्॥१०॥

ता वाम् नरा सु अवसे सुऽजाता हवामहे अश्विना नाधमानाः आ नः उप वसुऽमता रथेन गिरः जुषाणा सुविताय यातम्॥

नरा नेतारौ, सुजाता शोभनजन्मानौ, हे अश्विना अश्विनौ, ता वाम् तौ युवां नाधमानाः याचमानाः, दिव्यं श्रेयः प्रार्थयमानाः वयं अवसे रक्षणाय सु हवामहे शोभनं आह्वयामहे। गिरः स्तुतीः जुषाणा सेवमानौ युवां वसुमता संपद्युक्तेन रथेन, सुविताय सुष्ठु प्राप्तव्याय दुरितप्रति-

द्वन्द्विने नित्यकल्याणाय नः अस्मान् उपायातम् उपागच्छतम् ॥ सुविताय—सुपूर्वादेतेः निष्ठा, तन्वादित्वादुवङ् ॥

एकादशीमृचमाह—

आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः ।
हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ ॥ ११॥

आ श्येनस्य जवसा नूतनेन अस्मे इति यातम् नासत्या सऽजोषाः हवे हि वाम् अश्विना रातऽहव्यः शश्वत्ऽतमायाः उषसः विऽउष्टौ ॥

हे नासत्या नासत्यौ, अश्विना अश्विनौ, सजोषाः सजोषसौ समानं प्रीतौ, श्येनस्य उत्पतनपटोरश्वस्य नूतनेन प्रत्यग्रेण आयासगन्धेनाप्यस्पृष्टेन जवसा वेगेन युक्तौ युवां अस्मे अस्मदर्थं आयातम् आगच्छतम् । हि यस्मात् वाम् युवाभ्यां रातहव्यः रातेन दत्तेन हव्येन अर्पणीयद्रव्येण युक्तः सन् शश्वत्तमायाः शाश्वत्याः उपासककृते प्रादुर्भावार्थं नित्यसिद्धायाः उषसः चिन्मयप्रभायाः व्युष्टौ विवासने प्रकाशने हवे आह्वयामि, तस्मादायातम् । उषसः प्रादुर्भावे रथिनोरश्विनोरागतिस्तस्या आरोहार्थम् ॥ हवे—ह्वेञो लडुत्तमैकवचने संप्रसारणं छान्दसम् ॥

इति प्रथमस्याष्टम एकोनविंशो वर्गः

'आ वां रथमि'ति दशर्चं चतुर्थं सूक्तं कक्षीवत आर्षं जागतमाश्विनम् ॥

तत्र प्रथमामृचमाह—

आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियं जीवसे हुवे ।
सहस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवानं वरिवोधामभि प्रयः ॥ १॥

आ वाम् रथम् पुरुऽमायम् मनःऽजुवम् जीरऽअश्वम् यज्ञियम् जीवसे हुवे सहस्रऽकेतुम् वनिनम् शतत्ऽवसुम् श्रुष्टीऽवानम् वरिवःऽधाम् अभि प्रयः ॥

हे अश्विनौ, वाम् युवयोः रथम् जीवसे दिव्याय जीवनाय प्रयः अभि प्रियं, प्रेमास्पदं दिव्यं वस्त्वभिलक्ष्य आहुवे आह्वयामि । कीदृशं रथम्? पुरुमायम् बह्वद्भुतकर्माणं मनोजुवम् मन इव शीघ्रगामिनं जीराश्वम् जीरः जववान् अश्वो यस्य सः तं, यज्ञियम् यजनेष्वाह्वातुमर्हं सहस्रकेतुम् संपत्सहस्रस्य केतयितारं ज्ञापयितारं वनिनम् संभजनीयेन रसपदवेदनीयेनानन्देन युक्तं शतद्वसुम् शतविधधनोपेतं श्रुष्टीवानम् दिव्यश्रवणशालिनं वरिवोधाम् स्थानं सुखं वा दधानम् ॥

जीराश्वम्—जु इति गत्यर्थः, जोरी चेति रक् ईकारान्तादेशश्च। शतद्रुसुम्—छान्दसस्तकारोपजनः॥

द्वितीयामृचमाह—

ऊर्ध्वा धीतिः प्रत्यस्य प्रयामन्यधायि शस्मन्त्समयन्त आ दिशः।
स्वदामि घर्मं प्रति यन्त्यूतय आ वामूर्जानी रथमश्विनारुहत्॥२॥

ऊर्ध्वा धीतिः प्रति अस्य प्रऽयामनि अधायि शस्मन् सम् अयन्ते आ दिशः
स्वदामि घर्मम् प्रति यन्ति ऊतयः आ वाम् ऊर्जानी रथम् अश्विना अरुहत्॥

अस्य रथस्य प्रयामनि प्रयाणे सति शस्मन् शंसने, अश्विनोः स्तवने धीतिः धारणात्मिका अस्मद्बुद्धिः ऊर्ध्वा उन्मुखा दिव्यं ऋतज्योतिःस्थानं प्रति प्रत्यधायि प्रतिष्ठिताऽभवत्। तथा ऊर्ध्वदृष्टौ सत्यां दिशः सर्वाः आ सर्वतः सम् अयन्ते संगच्छन्ते। दिशः सर्वाश्च एकीभूय मदीयां दृष्टिमूर्ध्वगतां द्रढयन्ति। अथ च अहं घर्मम् महावीरलक्षणं तप्तं दीप्तं च शरीरं स्वदामि स्वादूकरोमि, देवानामुपभोग्यं करोमि। ऊतयः (अवतेः कर्तरि क्तिच्) अवितारः रक्षकाः देवाः उक्तलक्षणं घर्मं प्रति यन्ति प्रति गच्छन्ति संस्कारार्थम्। अपि च हे अश्विना अश्विनौ, वाम् रथम् युवयोः रथं ऊर्जानी सूर्यस्य दुहितेति सायणः, सामर्थ्यात् सूर्या भवति, ऊर्जवती, महाबलेति शब्दार्थः, सा आ अरुहत् आरूढवती॥ प्रयामनि—यातेः भावे मनिन्। शस्मन्—शंसतेर्मनिन्॥

तृतीयामृचमाह—

सं यन्मिथः पस्पृधानासो अग्मत शुभे मखा अमिता जायवो रणे।
युवोरह प्रवणे चेकिते रथो यदश्विना वहथः सूरिमा वरम्॥३॥

सम् यत् मिथः पस्पृधानासः अग्मत शुभे मखाः अमिताः जायवः रणे
युवोः अह प्रवणे चेकिते रथः यत् अश्विना वहथः सूरिम् आ वरम्॥

मखाः यज्ञाः, मत्वर्थलक्षणा, यज्ञशालिनः अमिताः अत्यधिकाः जायवः जयशीलाः यजमानाः रणे देवविरोधिभिः सह संग्रामे शुभे शोभनाय, जयात्मककल्याणार्थं मिथः पस्पृधानासः परस्परं अहमहमिकया अरातिवधविषये स्पर्धमानाः यत् यदा सम् अग्मत संगच्छन्ते, तदानीं अश्विना हे अश्विनौ, युवोः अह युवयोरेव रथः प्रवणे दिवः निम्नप्रदेशे भूतले यजमानस्थाने चेकिते ज्ञायते, देवानां मध्ये प्रथमं युवामेवागच्छथ इत्यर्थः। यत् येन रथेन सूरिम् विचक्षणं ऋषिं प्रति वरम्

वरणीयं श्रेष्ठं दिव्यं वस्तु आवहथः प्रापयथः ॥ पस्पृधानासः–स्पर्ध संघर्षे, छान्दसो लिट्, कानच् । अग्मत–गमेश्छान्दसो लङ् । चेकिते–कित ज्ञाने, छान्दसो वर्तमाने लिट् ॥

चतुर्थीमृचमाह—

युवं भुज्युं भुरमाणं विभिर्गतं स्वयुक्तिभिर्निवहन्ता पितृभ्य आ ।
यासिष्टं वर्तिर्वृषणा विजेन्यं१ दिवोदासाय महि चेति वामवः ॥४॥

युवम् भुज्युम् भुरमाणम् विऽभिः गतम् स्वयुक्तिऽभिः निऽवहन्ता पितृऽभ्यः आ यासिष्टम् वर्तिः वृषणा विऽजेन्यम् दिवःऽदासाय महि चेति वाम् अवः ॥

हे वृषणा वर्षितारावश्विनौ, युवम् युवां विभिः पतनशीलैरश्वैः भुरमाणम् भ्रियमाणं गतं भुज्युम् समुद्रे निमग्नं तुग्रपुत्रं स्वयुक्तिभिः स्वतः युज्यमानैरश्वैर्नौभिश्च निवहन्ता नितरां वहन्तौ, पितृभ्यः आ आङ् मर्यादायां, पूर्वे पितरः यत्र दिव्ये धामनि आसते तावत्पर्यन्तं विजेन्यम् विजने अत्यन्तमेकान्तवासस्थाने। भवं वर्तमानं वर्तिः गृहं प्रति यासिष्टम् अगच्छतम् । (अस्य गूढार्थो विवृतः प्राक्) अपि च दिवोदासाय कृतं महि महत् वाम् अवः युष्मद्रक्षणं चेति ज्ञायते ॥ भुरमाणम्–बिभर्तेः, कर्मणि लटः शानच्, व्यत्ययेन शः, बहुलं छन्दसीति उत्वम् । विजेन्यम्–विजने भवः, भवे छन्दसीति यत्, एत्वं छान्दसम् ॥

पञ्चमीमृचमाह—

युवोरश्विना वपुषे युवायुजं रथं वाणी येमतुरस्य शर्ध्यम् ।
आ वां पतित्वं सख्याय जग्मुषी योषावृणीत जेन्या युवां पती ॥५॥

युवोः अश्विना वपुषे युवाऽयुजम् रथम् वाणी इति येमतुः अस्य शर्ध्यम् आ वाम् पतिऽत्वम् सख्याय जग्मुषी योषा अवृणीत जेन्या युवाम् पती इति ॥

अश्विना हे अश्विनौ, युवोः युवयोः वाणी वननीये वाचौ, अश्विनोर्द्वित्वात् वाचो द्वयं वपुषे रूपाय, दर्शनीयतायै युवायुजम् युवाभ्यां युज्यमानं रथम्, अस्य रथस्य शर्ध्यम् लक्ष्यभूतं स्थानं ऋतं सौरं ज्योतिः प्राप्तव्यं येमतुः प्रापयामासतुः । ततः परं आ जग्मुषी आगतवती जेन्या जयशीला योषा सूर्या सख्याय सखित्वाय वाम् युवयोः पतित्वम् अवृणीत, युवाम् पती इति मम युवामेव भर्ताराविति अश्विनोः पतित्वमवृणीत सूर्या, या प्रथमं सख्यायागता ॥ युवायुजम्–

युवावौ द्विवचने इति युष्मच्छब्दस्य अविभक्तावपि युवादेशः। शर्ध्यम्-शृधु प्रसहने, अस्मात् ण्यन्तादचो यदिति यत्। जेन्या-जयतेः, औणादिक एन्यप्रत्ययः॥

इति प्रथमस्याष्टमे विंशो वर्गः

षष्ठीमृचमाह—

युवं रेभं परिषूतेरुरुष्यथो हिमेन घर्मं परितप्तमत्रये।
युवं शयोरवसं पिप्यथुर्गवि प्र दीर्घेण वन्दनस्तार्यायुषा॥६॥

युवम् रेभम् परिऽसूतेः उरुष्यथः हिमेन घर्मम् परिऽतप्तम् अत्रये युवम् शयोः अवसम् पिप्यथुः गवि प्र दीर्घेण वन्दनः तारि आयुषा॥

हे अश्विनौ, युवम् युवां रेभम् ऋषिं परिषूतेः परितः प्रेरकात् सङ्कोचनरूपादुपद्रवात् उरुष्यथः विकासनेन, विस्तारणेन रक्षथः। उरुष्यतिः रक्षाकर्मेति यास्कमुदाहरति सायणः। अत एव रक्षास्वरूपमत्र व्याख्यातम्, उरुशब्दस्य विस्तारार्थप्रसिद्धेः। तथा अत्रये ऋषये परितप्तम् घर्मम् हिमेन अवारयेथाम् (असकृत्प्रस्तुतेयं कथा गूढार्थगर्भिता)। अपि च शयोः ऋषेः गवि निवृत्तप्रसवायां अवसम् पालकं पयः युवम् युवां पिप्यथुः वर्धितवन्तौ। तथा वन्दनः ऋषिः जीर्णाङ्गः दीर्घेण आयुषा युवाभ्यां दत्तेन प्रतारि प्रवर्धितः, प्रपूर्वस्तिरतिर्वर्धनार्थः॥ अवसम्-अवतेरौणादिकः असच्। पिप्यथुः-प्यायी वृद्धौ, पीभावः, व्यत्ययेन परस्मैपदम्॥

सप्तमीमृचमाह—

युवं वन्दनं निर्ऋतं जरण्यया रथं न दस्रा करणा समिन्वथः।
क्षेत्रादा विप्रं जनथो विपन्यया प्र वामत्र विधते दंसना भुवत्॥७॥

युवम् वन्दनम् निःऽऋतम् जरण्यया रथम् न दस्रा करणा सम् इन्वथः क्षेत्रात् आ विप्रम् जनथः विपन्यया प्र वाम् अत्र विधते दंसना भुवत्॥

हे दस्रा अश्विनौ, युवम् युवां जरण्यया जरणक्रियार्हयाऽन्त्यावस्थया निर्ऋतम् निःशेषेण सङ्कटं प्राप्तं वन्दनम् ऋषिं करणा कर्तारौ कर्मणां, युवां समिन्वथः समधत्तं पुनर्युवानमकुरुतम्। तत्र दृष्टान्तः—रथम् न यथा शिल्पी शिथिलं रथं पुनरपि अभिनवं करोति तद्वत्। अपि च विपन्यया स्तुत्या "गर्भस्थितेन वामदेवेन स्तुतौ सन्तौ" इति सायणः। तर्हि नायं मानुषगर्भः, अन्तर्दिव्यं जन्म प्राप्तुं दिव्यगर्भप्रवेश एवाभिप्रेतः। 'अहं मनुरभवं सूर्यश्चे'त्यादिमन्त्रवर्णः

मानुषे गर्भे वसतो वामदेवस्यर्षेर्दृष्टिरिति न भ्रमितव्यम्। क्षेत्रात् दिव्यगर्भस्थानात् विप्रम् ऋषिं जनथः जनयथश्च, आ समुच्चये। तथा वाम् युवयोः दंसना कर्म रक्षणात्मकं अत्र अस्मै विधते परिचरते भक्ताय यजमानाय प्रभुवत् प्रभवतु॥ निर्ऋतम्—ऋ गतौ, कर्मणि निष्ठा। जरण्यया—जरणार्हा जरण्या, छन्दसि चेति यः। करणा—करोतेः, युच्। विधते—विध विधाने, लटः शतृ। भुवत्—लेट्यडागमः, शपो लुक् छन्दसि॥

अष्टमीमृचमाह—

अग॑च्छतं॒ कृप॑माणं परा॒वति॑ पि॒तुः स्वस्य॑ त्यज॑सा॒ निबा॑धितम्।
स्व॑र्वतीरि॒त ऊ॒तीर्यु॒वोरह॑ चि॒त्रा अ॒भीके॑ अभवन्न॒भिष्ट॑यः॥८॥

अग॑च्छतम् कृप॑माणम् प॒रा॒ऽवति॑ पि॒तुः स्वस्य॑ त्यज॑सा निऽबा॑धितम्
स्वः॑ऽवतीः इ॒तः ऊ॒तीः यु॒वोः अह॑ चि॒त्राः अ॒भीके॑ अ॒भ॒व॒न् अ॒भिष्ट॑यः॥

हे अश्विनौ, परावति परस्ताद् दूरे स्वस्य पितुः तुग्रस्य त्यजसा त्यागेन निबाधितम् पीडितं भुज्युं कृपमाणम् स्तुवन्तं अगच्छतम् रक्षणाय गतवन्तौ युवाम्। हे देवौ, इतः अस्मात्, अत एव स्वर्वतीः ज्योतिष्मत्यः ऋतसंबन्धिन्यः चित्राः अद्भुताः युवोः अह युवयोरेव ऊतीः ऊतयः रक्षाः अभीके समीपे अभिष्टयः सर्वैरभ्येषणीयाः अभवन् भवन्ति॥ कृपमाणम्—कृपतिः स्तुतिकर्मा, तुदादिः॥

नवमीमृचमाह—

उ॒त स्या वां॒ मधु॑म॒न्मक्षि॑कारप॒न्मदे॒ सोम॑स्यौशि॒जो हु॑वन्यति।
यु॒वं द॑धी॒चो मन॒ आ वि॑वास॒थोऽथा॒ शिरः॒ प्रति॑ वा॒मश्व्यं॑ वदत्॥९॥

उ॒त स्या वा॒म् मधु॑ऽमत् मक्षिका अ॒र॒प॒त् मदे॑ सोम॑स्य औ॒शि॒जः हु॒व॒न्य॒ति
यु॒व॒म् द॒धी॒चः मनः॑ आ वि॒वा॒स॒थः अथ॑ शिरः॑ प्रति॑ वा॒म् अश्व्य॑म् व॒द॒त्॥

उत अपि च मधुमत् मधुमन्तौ वाम् युवां, हे अश्विनौ, स्या सा मक्षिका मधुमक्षिका मधु कामयमाना सती अरपत् अस्तौत्। अश्विनोर्मधुमत्त्वात् सरघास्थानीयः कक्षीवानेव स्तोता। विस्पष्टमाह। औशिजः उशिजः पुत्रः कक्षीवान् सोमस्य मदे युवयोः सोमजन्यहर्षे निमित्तभूते सति हुवन्यति युवामाह्वयति। युवयोर्मधुरहस्यं वर्तत एव, तच्च मधुविद्याख्यं रहस्यं दधीचः सकाशादश्वशिरसा युवां प्रापितम्। अस्य वृत्तान्तस्य गूढार्थविवरणमन्यत्र कृतम्। तदाह।

युवम् युवां च दधीचः आथर्वणस्य मनः चित्तं आविवासथः प्रकाशितवन्तौ। अथ अनन्तरं अश्व्यम् अश्वसंबन्धि युवाभ्यां प्रति प्रतिहितं यत् शिरः तत् वाम् युवाभ्यां वदत् मधुविद्यामवोचत् ॥ मधुमत्—सुपां सुलुगिति विभक्तेर्लुक्। हुवन्यति—ह्वेञ् स्पर्धायां शब्दे च, भावे ल्युट्, बहुलं छन्दसीति संप्रसारणम्, अथवा "हवनमात्मन इच्छति, सुप आत्मनः क्यच्, अन्त्यलोपश्छान्दसः, वर्णव्यापत्त्या उत्वम्" इति सायणः ॥

दशमीमृचमाह—

युवं पेद्वे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः।
शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिन्द्रमिव चर्षणीसहम् ॥१०॥

युवम् पेद्वे पुरुऽवारम् अश्विना स्पृधाम् श्वेतम् तरुतारम् दुवस्यथः शर्यैः अभिऽद्युम् पृतनासु दुस्तरम् चर्कृत्यम् इन्द्रम्ऽइव चर्षणिऽसहम् ॥

अश्विना हे अश्विनौ, पेद्वे राज्ञे ऋषये पुरुवारम् बहुभिर्वरणीयं स्पृधाम् दैवं प्रति अहमहमिकया स्पर्धमानानां यजमानानां तरुतारम् तारकं श्वेतम् स्वच्छमश्वं युवम् युवां दुवस्यथः सेवनाय दत्तवन्तौ। पुनः कीदृशम्? शर्यैः शरार्हैः योद्धृभिः पृतनासु संग्रामेषु दुस्तरम् तरीतुमशक्यं अभिद्युम् अभिगतदीप्तिं चर्कृत्यम् पुनः पुनः कर्मसु प्रयोज्यं इन्द्रमिव चर्षणीसहम् इन्द्रो यथा अरातिजनानभिभवति तथा देवशत्रूणामभिभवितारम् ॥ स्पृधाम्—स्पर्धतेः, क्विप्, षष्ठीबहुवचनम्। चर्कृत्यम्—करोतेर्यङ्लुगन्तात् क्यप्, ततस्तुक् ॥

इति प्रथमस्याष्टम एकविंशो वर्गः

'का राधदि'ति द्वादशर्चं आश्विनं कक्षीवत आर्षम्। अन्त्यास्तिस्रो गायत्र्यः, आद्या गायत्री, द्वितीया ककुप्, तृतीया काविराट्, चतुर्थी नष्टरूपी, पञ्चमी तनुशिराः, षष्ठी उष्णिक्, सप्तमी विष्टारबृहती, अष्टमी कृतिः, नवमी विराट् ॥

तत्र प्रथमामृचमाह—

का राधद्धोत्राश्विना वां को वां जोष उभयोः। कथा विधात्यप्रचेताः ॥१॥

का राधत् होत्रा अश्विना वाम् कः वाम् जोषे उभयोः कथा विधाति अप्रऽचेताः ॥

हे अश्विना अश्विनौ, वाम् युवां का होत्रा कीदृशी वाक् (वाङ्नाम, आह्वानसमर्था होत्रा)

राधत् आराधयति, प्रीणयति । मन्त्रलक्षणा वागेव युवामधिगच्छेत्, न तथा अन्यविधा । वाम् युवयोः उभयोः जोषे जोषणे, प्रीणने कः समर्थः? अस्ति चेत् सामर्थ्यं कस्यापि यजमानस्य, तद्युष्मदनुग्रहबलादेव भवति । अप्रचेताः यस्य युष्मद्विषयकं प्रकृष्टं चेतो ज्ञानं न विद्यते सः कथा केन प्रकारेण विधाति परिचरति युवाम् ॥ राधत्–लेट्यडागमः । जोषे–भावे घञ् । कथा–थाप्रत्ययः छन्दसि हेतौ, किंशब्दात्प्रकारवचने, किमः क इति कादेशः । विधाति–विध विधाने, लेट्याडागमः ॥

द्वितीयामृचमाह—

विद्वांसाविद् दुरः पृच्छेदविद्वानित्थापरो अचेताः । नू चिन्नु मर्ते अक्रौ ॥२॥

विद्वांसौ इत् दुरः पृच्छेत् अविद्वान् इत्था अपरः अचेताः नु चित् नु मर्तैं अक्रौ ॥

इत्था इत्थं, उक्तप्रकारेण अविद्वान् अजानन् जनः विद्वांसौ इत् जानन्तौ अश्विनावेव दुरः द्वाराणि, अश्विनोर्युवयोः उपासनरहस्यमार्गान् पृच्छेत् प्रष्टुमर्हति । तयोरनुग्रहादेव तद्विषयक-सपर्योपायरहस्यज्ञानं संपादनीयम् । अपरः अश्विभ्यामन्यः अचेताः अज्ञः, न जानाति उपायमा-वेदयितुम् । तौ अश्विनौ तु अक्रौ अनाक्रान्तौ अरातिभिः नु चित् क्षिप्रमेव नु पदपूरणः मर्ते मनुष्ये अनुग्राह्ये प्रसन्नौ भवत इति शेषः ॥ अक्रौ–क्रमु पादविक्षेपे, अस्मात् नञ्युपपदे कृत्य-ल्युटो बहुलवचनात् कर्मण्यपि विट् ॥

तृतीयामृचमाह—

ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य ।
प्रार्चद्दयमानो युवाकुः ॥३॥

ता विद्वांसा हवामहे वाम् ता नः विद्वांसा मन्म वोचेतम् अद्य प्र आर्चत् दयमानः युवाकुः ॥

हे अश्विनौ, विद्वांसा विज्ञौ ता वाम् तौ युवां हवामहे आह्वयामहे । ता विद्वांसा तौ विद्वांसौ आहूतौ युवां अद्य इदानीं नः अस्मभ्यं मन्म मननीयं युष्मदीयं रहस्यं मन्त्रं वोचेतम् उच्यास्तम् । अहं च युवाकुः युवां कामयमानः (१.३.३, पु. ११३) दयमानः स्वात्मीयं सर्वं युवाभ्यां प्रयच्छन् प्रार्चत् प्रार्चं (मिपस्तिबादेशः) प्रकर्षेण स्तौमि ॥ वोचेतम्–ब्रुवो वचिः,

लिङ्याशिष्यङ्, वच उमित्युमागमः । दयमानः—दय दानगत्यादिषु ॥

चतुर्थीमृचमाह—

वि पृच्छामि पाक्या३ न देवान्वषट्कृतस्याद्भुतस्य दस्रा ।
पातं च सह्यसो युवं च रभ्यसो नः ॥ ४ ॥

वि पृच्छामि पाक्या न देवान् वषट्ऽकृतस्य अद्भुतस्य दस्रा पातं च सह्यसः युवम् च रभ्यसः नः ॥

हे अश्विनौ वि पृच्छामि युवां विशेषेण पृच्छामि, पाक्या पक्तव्यज्ञानान् अपक्वप्रज्ञान् देवान् न न पृच्छामि, परिपक्वप्रज्ञानौ हि युवां, अतः पृच्छामि । किमधिकृत्य पृच्छ्यते? आह वषट्कृतस्य अद्भुतस्य कर्मण्यर्थे षष्ठी । वषट् इति देवतायै संप्रदाने वषट्कारस्य वैशिष्ट्यं कर्मसु प्रसिद्धम्, तदनुसारेण अन्तर्यागेऽपि होतुराह्वानात्परं देवतायै संप्रदाने प्रवर्तमाने वीर्यवान् दार्ढ्यप्रदो मन्त्रात्मको वाग्विशेषः वषट्कारेण प्रतिपाद्यते । तथा मन्त्रपूतं अद्भुतशब्दवेदनीयं किमपि 'महत्' वस्तु प्रति पृच्छामि । वषट्कारविषयभूतं 'अद्भुतं' प्रति रहस्यज्ञानप्रार्थना । हे दस्रा, कर्मकुशलौ, युवम् युवां सह्यसः यस्मात्कस्मादपि अतिशयेन बलवतः नः अस्मान् पातम् च रक्षतं च रभ्यसश्च अतिशयेन रभस्विनश्च पातं रक्षतम् ॥ सह्यसः—सहो बलं, ततो मत्वर्थीयो विनिः, आतिशायनिक ईयसुन्, विन्मतोर्लुक्, छान्दस ईकारलोपः । रभ्यसः—रभ राभस्ये, राभस्यं प्रबलः कार्योपक्रमः, पूर्ववत्प्रक्रिया ॥

पञ्चमीमृचमाह—

प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियो वाम् ।
प्रैषयुर्न विद्वान् ॥ ५ ॥

प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियः वाम् प्र इषऽयुः न विद्वान् ॥

हे अश्विनौ, या या वाक् घोषे घोषापुत्रे सुहस्त्ये ऋषौ इति सायणः, तर्हि औपचारिकः । घोषायाः सुप्रसिद्धेः सैव स्यात्, लिङ्गव्यत्ययः, भृगवाणे न भृगुरिवाचरति भृगवाणः तस्मिन्निव प्र शोभे प्रकर्षेण शोभते (तलोपः) । या वाक् भृगाविव घोषे शोभते, यया वाचा, पज्रियः आङ्गिरसः कक्षीवान् वाम् युवां यजति पूजयति सापि शोभते इषयुः न इषं चोदनाशक्तिं काम-

यमानश्च, नकारश्चार्थे, विद्वान् विज्ञः, अत्र कक्षीवानेव स्यात् प्र प्रभवतु युवयोः प्रसादात् ॥ शोभे-शुभ दीप्तौ, लोपस्त आत्मनेपदेषु । इषयुः-इष गतौ, इष इच्छायामित्यस्माद्वा ॥

इति प्रथमस्याष्टमे द्वाविंशो वर्गः

षष्ठीमृचमाह—

श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वाम् ।
आक्षी शुभस्पती दन् ॥६॥

श्रुतम् गायत्रम् तकवानस्य अहम् चित् हि रिरेभ अश्विना वाम् आ अक्षी इति शुभः पती इति दन् ॥

हे अश्विना अश्विनौ, तकवानस्य गच्छतः, शीघ्रगामिन ऋषेः गायत्रम् गायत्रीच्छन्दोबद्धं स्तोत्रं श्रुतम् शृणुतम् । वाम् युवां अहम् चित् हि अहमेव हि सः यो रिरेभ स्तुतवान् । हे शुभः पती दीप्तेः उज्ज्वलभासः अधिपती, अक्षी युवयोरक्षिणी युष्मदृष्टिं आदन् मह्यं दत्तं, मयि क्षिपतम् ॥ श्रुतम्-श्रु श्रवणे, लोटि विकरणस्य लुक् । तकवानस्य-तक गतौ, भृगवाणवत् प्रक्रिया । आदन्-आङ्पूर्वात् ददातेः, व्यत्ययेन शतृ, जुहोत्यादित्वात् श्लुः, द्विर्वचनाभावश्छन्दसि ॥

सप्तमीमृचमाह—

युवं ह्यास्तं महो रन्युवं वा यन्निरततंसतम् ।
ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः ॥७॥

युवम् हि आस्तम् महः रन् युवम् वा यत् निःऽअततंसतम् ता नः वसू इति सुऽगोपा स्यातम् पातम् नः वृकात् अघऽयोः ॥

हे अश्विनौ, युवम् हि युवां महः महतः दिव्यस्य वैभवस्येति वक्तव्यं, अन्नस्य धनस्य वेति स्थूलपक्षीयाः, रन् रातारौ आस्तम् अभूतं, भवथ इति लडर्थे, युवम् वा युवामेव यत् महद्दिव्यं वैभवं निरततंसतम् (तसि अलङ्कारे) निरलङ्कारं निर्भूषणं निःशोभं अकुरुतं, दातारौ युवामेव निस्तेजस्कतामापादयितारौ भवथः । हे वसू निवासयितारौ, ता तादृशौ युवां नः अस्माकं सुगोपा सुष्ठु रक्षितारौ स्यातम् भवेतम् । अघायोः पापमस्माकमिच्छतः वृकात् छेदकादसुरात् नः अस्मान् पातम् रक्षतम् ॥ महः-महतः, अल्लोपश्छान्दसः । रन्-दन्निितिवत् प्रक्रिया, व्यत्ययेनैक-

वचनम् । निरततंसतम्-तसि अलङ्कारे, ण्यन्ताल्लुङ् । अघायोः-अघं परेषामिच्छति, छन्दसि परेच्छायामिति क्यच् ॥

अष्टमीमृचमाह—

मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः ।
स्तनाभुजो अशिश्वीः ॥८॥

मा कस्मै धातम् अभि अमित्रिणे नः मा अकुत्र नः गृहेभ्यः धेनवः गुः स्तनऽभुजः अशिश्वीः ॥

हे अश्विनौ, अमित्रिणे कस्मै कस्मैचिदपि शत्रवे (अमित्रं शात्रवं इति भावार्थः, तद्वते शत्रवे) नः अस्मान् मा अभिधातम् आभिमुख्येन मा अवस्थापयतम् । अपि च नः अस्माकं गृहेभ्यः वासस्थानेभ्यः (अन्तर्यजने अन्नमयादिशरीरेभ्यः) सकाशात् स्तनाभुजः स्तनैः स्वदुग्धैरमृतैः भुञ्जन्ति पालयन्ति यजमानान्, तादृश्यः धेनवः गावः अशिश्वीः शिशुना वत्सेन रहिताः, सन्तानयोग्यतारिक्ताः सत्यः (चिद्रश्मिलक्षणाः) अकुत्र न कुत्रचिदपि अस्माकं दूरे मा गुः उज्झित्वाऽस्मान् मा गमन् ॥ धातम्-लुङि न माङ्योगे इति अडभावः । स्तनाभुजः-स्तनभुजः, सांहितिको दीर्घः । अशिश्वीः-शिशुरस्या अस्तीति शिश्वी, छन्दसि ईवनिपौ इति मत्वर्थीय ईकारः ॥

नवमीमृचमाह—

दुहीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै ।
इषे च नो मिमीतं धेनुमत्यै ॥९॥

दुहीयन् मित्रऽधितये युवाकु राये च नः मिमीतम् वाजऽवत्यै इषे च नः मिमीतम् धेनुऽमत्यै ॥

हे अश्विनौ, युवाकु युवाकवः (जसो लुक्) युवां कामयमानाः (१.३.३) मित्रधितये युवयोर्मित्रत्वधारणाय, युष्मन्मैत्रीसंपादनाय दुहीयन् युष्मदनुग्रहात्मकं सख्यं दुहन्ति प्राप्नुवन्ति युवयोः सकाशात् । तस्मात् नः अस्मान् वाजवत्यै समृद्धिमते राये च धनाय दिव्याय च मिमीतम् अर्हान् कुरुतम् । तथा नः धेनुमत्यै अमृतक्षरणशीलया चिद्रश्मिलक्षणया गवा युक्ताय इषे च प्रेरणाबलाय च मिमीतम् अर्हान् समर्थान् कुरुतम् । 'बलयुक्तं धनं गोयुक्तमन्नं च प्रयच्छतम्' इति अनैकलक्ष्याः धनबलाभिलाषिणः स्थूलपक्षीयाः ॥ दुहीयन्-दुहिर्दोहः, इगु-

पश्चात् क्विदिति भावे इप्रत्ययः, ततः क्यच्, दुहीयति, ततो लेट्यडागमः। मिमीतम्—माङ् माने शब्दे च, व्यत्ययेन परस्मैपदम् ॥

दशमीमृचमाह—

अ॒श्विनो॑रसनं॒ रथ॑मन॒श्वं वा॒जिनी॑वतोः। तेना॒हं भूरि॑ चाकन ॥ १० ॥

अ॒श्विनोः॑ अ॒स॒न॒म् रथ॑म् अ॒न॒श्वम् वा॒जिनी॑ऽवतोः तेन॑ अ॒हम् भूरि॑ चा॒क॒न॒ ॥

वाजिनीवतोः समृद्धिमद्वस्तुयुक्तयोः अश्विनोः देवयोः अनश्वम् अश्वरहितं रथम् असनम् अहम् समभजम्। अश्विनोर्वाञ्छामात्रेण अनश्वो रथो गच्छतीत्यभिप्रायः (११९ सू., ५ ऋ.) "युवोः ...रथं वाणी येमतुः" इत्यत्र स्पष्टः। तेन रथेन भूरि महत् श्रेयः परमं निःश्रेयसं चाकन कामये॥ असनम्—वन षण संभक्तौ, लङ्। चाकन—कनी दीप्तिकान्तिगतिषु, छान्दसो लिट् ॥

एकादशीमृचमाह—

अ॒यं स॑मह मा तनू॒ह्याते॒ जनाँ॒ अनु॑। सो॒म॒पेयं॑ सु॒खो रथः॑ ॥ ११ ॥

अ॒यम् स॒म॒ह॒ मा॒ त॒नु॒ ऊ॒ह्याते॑ जना॑न् अनु॑ सो॒म॒ऽपेय॑म् सु॒ऽखः रथः॑ ॥

हे समह महेन महता (अल्लोपश्छान्दसः) निःश्रेयसप्रदेन वैभवेन सहित हे रथ, अयम् समीपवर्ती त्वं मा मां तनु विस्तारय अन्नमयादिशरीरपरिच्छेदमतिक्रम्य वैशाल्यं आधत्स्व मयि। सुखो सुखहेतुभूतः रथः जनान् अनु देवभक्तान् जनान् अनुलक्ष्य सोमपेयम् सोमपानं प्रति ऊह्याते उह्यते, नीयते अश्विभ्याम्, तादृशः अश्विरथमहिमा, यादृशो देवभक्तानां अमृतानन्द-लाभाय सोमरसः सुप्रापो भवति ॥ ऊह्याते—कर्मणि लेट्याडागमः। सोमपेयम्—पा पाने, अचो यदिति भावे यत् ॥

द्वादशीमृचमाह—

अध॒ स्वप्न॑स्य॒ निर्वि॑देऽभु॑ञ्जतश्च रे॒वतः॑। उ॒भा ता बस्रि॑ नश्यतः ॥ १२ ॥

अध॑ स्वप्न॑स्य निः वि॒दे॒ अभु॑ञ्जतः च॒ रे॒वतः॑ उ॒भा ता बस्रि॑ न॒श्य॒तः॒ ॥

अध अथ इदानीं स्वप्नस्य स्वप्नं प्रति निर्विदे निर्वेदं कमप्यन्तर्वेदनामनुभवामि। तथा अभुञ्जतः इतरान् अपालयतः, इतरेषामुपकारायाप्रयुञ्जतः रेवतः च धनवतः पुरुषस्य एवंभूतं मनुष्यं च प्रति 'निर्विदे' निर्विण्णोऽस्मि। उभा ता तावुभौ स्वप्नः कदर्यः पुरुषश्च बस्रि क्षिप्रं नश्यतः विनाशं प्राप्नुतः। स्वप्नो दृष्टः जागरणे नष्टो भवति, कदर्यश्च अमृतत्वलाभाय अप्रयत-

मानः स्वीयधने बद्धसर्वाभिलाषः अलक्षितपरदुःखः विनश्यत्येव ॥ अनेन पारमार्थिकबुद्धिराव-श्यकीति गम्यते ॥ विदे–विद्लृ लाभे, आगमानुशासनस्यानित्यत्वान्नुमभावः । रेवतः–रयेर्मतौ संप्रसारणम् । उभा, ता–उभयत्र सुपां सुलुगिति आकारः ॥

इति प्रथमस्याष्टमे त्रयोविंशो वर्गः

इति दाशतय्यां प्रथमे मण्डले सप्तदशोऽनुवाकः समाप्तः

अष्टादशेऽनुवाके षट् सूक्तानि, तत्र 'कदित्थे'ति पञ्चदशर्चं प्रथमं सूक्तम् । कक्षीवानृषिः त्रिष्टुप् छन्दः इन्द्रो देवता, विश्वे देवा वा ॥

तत्र प्रथमामृचमाह—

कदि॒त्था नॄँः पात्रँ॑ देवय॒तां श्रव॒द्गिरो॒ अङ्गि॑रसां तु॒र॒ण्यन् ।
प्र यदा॒नड्विश॒ आ ह॒र्म्यस्यो॒रु कँ॑सते अध्व॒रे यज॑त्रः ॥ १ ॥

कत् इ॒त्था नॄन् पात्र॑म् दे॒व॒ऽय॒ताम् श्रव॑त् गिरः॑ अङ्गि॑रसाम् तु॒र॒ण्यन् प्र यत् आन॑ट् विशः॑ आ ह॒र्म्यस्य॑ उ॒रु क्रंस॒ते अ॒ध्व॒रे यज॑त्रः ॥

नॄन् नराणां नेतॄणां यजमानानां पात्रम् पाता, रक्षाभूतः इन्द्रः तुरण्यन् प्रेरयन् यजमानान् दिव्याध्वनीति शेषः, देवयताम् देवानिन्द्रादीनात्मन इच्छतां अङ्गिरसाम् ऋषीणां अस्माकं इत्था एवं उच्यमानाः गिरः स्तुतीः कत् कदा श्रवत् शृणुयात्, यत् यदा हर्म्यस्य यजमानीयस्य प्रासादस्य, समृद्धवासगृहस्य संबन्धिनः विशः यजमानाश्रितान् जनान् इन्द्रः आ प्रानट् आभि-मुख्येन प्राप्नोति, तदानीं अध्वरे दिव्याध्वप्रदे यजने स इन्द्रः यजत्रः यष्टव्यः सन् उरु विस्तीर्णं यथा भवति तथा क्रंसते क्रमते स्वयमेवोत्सहते । अत्रेदं वैदिकयोगरहस्यं भवति, यजमाने देवतानुग्रहवैभवे विलसति सति, यजमानमाश्रिताः तदनुचराः शिष्याः पुत्रा वा तदनुग्रह-स्वीकरणाय प्रभवन्ति, अत एव इन्द्रो यदा "हर्म्यस्य विशः प्रानट्" इति मन्त्रवर्णः ॥ पात्रम्–पा रक्षणे, ताच्छीलिकस्तृन्, व्यत्ययेन सोरमादेशः । श्रवत्–लेव्यडागमः । तुरण्यन्–तुरण त्वरायां, कण्ड्वादिः । आनट्–अश्नोतेर्लङ्, व्यत्ययेन परस्मैपदम् । क्रंसते–क्रमु पादविक्षेपे, लेव्यडागमः, सिप् बहुलमिति सिप् ॥

द्वितीयामृचमाह—

स्तम्भी॑द्ध॒ द्यां स ध॒रुणं॑ प्रुषाय॒दृभु॒र्वाजा॑य॒ द्रवि॑णं॒ नरो॒ गोः ।
अनु॑ स्व॒जां म॑हि॒षश्च॑क्षत॒ व्रां मेना॒मश्व॑स्य॒ परि॑ मा॒तरं॒ गोः ॥ २ ॥

स्तम्भीत् ह द्याम् सः धरुणम् प्रुषायत् ऋभुः वाजाय द्रविणम् नरः गोः
अनु स्वऽजाम् महिषः चक्षत व्राम् मेनाम् अश्वस्य परि मातरम् गोः ॥

सः इन्द्रः द्याम् द्युलोकं स्तम्भीत् ह स्तभ्नाति खलु । तथा गोः चिद्रश्मिजालस्य नरः नेता ऋभुः "उरु भासमानः सूर्यात्मना" इति सायणः । ऋभुर्गणात्मकः, पूर्वं मनुष्याः तपसा ज्ञानेन कर्मणा च देवत्वं प्राप्ता इन्द्रकृत्येषु स्वात्मानं विनियुञ्जते, बहवोऽपि गणात्मकत्वादेक इव व्यवह्रियते । इन्द्रः ऋभुरूपेणावतिष्ठमानः द्रविणम् द्रुतगतिशीलं धरुणम् धारकं तेजोबलादिकं अब्लक्षणं वाजाय समृद्धये प्रुषायत् प्रुष्णाति प्रवर्षति । महिषः महान् स इन्द्रः स्वजाम् स्वस्मात् दिवस्पतेः जातां व्राम् वृणोति तमसा आच्छादयतीति व्रा स्वतोऽप्रकाशा पृथिवी तां अनु चक्षत पश्चात् पश्यति, चष्टिः पश्यतिकर्मा, अतः सापि प्रकाशवती भवति । प्रथमं दिवः तृतीयस्थानस्य स्तम्भनं ततः मध्यमस्थाने ऋभुरूपतया तेजोबलादिवर्षणं, ततः पृथिवीस्थाने पृथिव्याः प्रकाशनाय दर्शनं इति त्रीणि कर्माण्युक्त्वा प्राणबलस्य भूयस्त्वेन चैतन्यांशुसमूहानामाविर्भाव इति चतुर्थं ऐन्द्रं कर्म कीर्त्यते । अश्वस्य प्राणबललक्षणस्य मेनाम् स्त्रियम् प्रसवक्षमां गोः चिद्रश्मिसमूहस्य मातरम् प्रसवित्रीं परि परिकल्पितवान् ॥ अन्नमयसमृद्धेः प्राणः प्राणमयसमृद्धेर्मनः मनोमयसमृद्धेर्विज्ञानं विज्ञानमयसमृद्धेरानन्दः इति उत्तरोत्तरांशप्रादुर्भावोऽवधेयः, एवं गवां प्रसवित्री अश्वस्य मेना इत्यत्र प्राणबलमूलकक्रियाशक्तिसमृद्धेः ज्ञानशक्तिलक्षणस्य चिद्रश्मिसमूहस्याविष्कार इति बोध्यम् ॥ धरुणम्—धारेर्णिलुक् चेति उनप्रत्ययः । प्रुषायत्—प्रुष प्लुष स्नेहनसेचनपूरणेषु, क्रैयादिकः, लेट्यडागमः । चक्षत—चष्टेः, छान्दसो लङ् ॥

तृतीयामृचमाह—

नक्षद्धवमरुणीः पूर्व्यं राट् तुरो विशामङ्गिरसामनु द्यून् ।
तक्षद्वज्रं नियुतं तस्तम्भद् द्यां चतुष्पदे नर्याय द्विपादे ॥३॥

नक्षत् हवम् अरुणीः पूर्व्यम् राट् तुरः विशाम् अङ्गिरसाम् अनु द्यून्
तक्षत् वज्रम् निऽयुतम् तस्तम्भत् द्याम् चतुःऽपदे नर्याय द्विऽपादे ॥

अरुणीः अरुणवर्णाः चिन्मयरीचीः गाः उषसो वा तल्लक्षणाः राट् राजयन् दीपयन् इन्द्रः पूर्व्यम् चिरन्तनं ऋषिपरम्पराप्रयुक्तं हवम् आह्वानं, इदानीमस्मदीयं नक्षत प्राप्नोतु, शृणोतु । कीदृशः? अनु द्यून् अनुदिनं अङ्गिरसाम् ऋषीणां विशाम् प्रजानां तुरः प्रेरयिता, दिव्याध्वगमनाय

यजनायेति शेषः। अपि च सः वज्रम् आयुधं नियुतम् नितरां युक्तं, सन्नद्धं तक्षत् निशितमकरोत्, प्रकाशाच्छादकानां तेजोबलादिप्रवाहनिरोधकाणां आसुरबलानां प्रध्वंसनाय इन्द्रवज्रं युक्तं कृतवान्, अपि च, नर्याय नरेभ्यो देवेभ्यः मनुष्येभ्यश्च हिताय चतुष्पदे स्थानचतुष्टयवते द्विपादे द्विस्थानाय च, प्राग्विवृतम् (पु० ४५५), जनाय द्याम् द्युलोकं तस्तम्भत् अस्तम्भयच्च। राट्—राजृ दीप्तौ, अन्तर्भावितण्यर्थात् क्विप्। तुरः—तुर त्वरणे, इगुपधलक्षणः कः। तस्तम्भत्—ष्टभि स्कभि गतिप्रतिबन्धे, अस्मात् ण्यन्ताल्लुङि चङि रूपम्॥

चतुर्थीमृचमाह—

अस्य मदे स्वर्यं दा ऋतायापीवृतमुस्रियाणामनीकम्।
यद्ध प्रसर्गे त्रिककुम्निवर्तदप द्रुहो मानुषस्य दुरो वः॥४॥

अस्य मदे स्वर्यम् दाः ऋताय अपिऽवृतम् उस्रियाणाम् अनीकम् यत् ह प्रऽसर्गे त्रिऽककुप् निऽवर्तत् अप द्रुहः मानुषस्य दुरः वरिति वः॥

अस्य सोमस्य मदे हर्षे, सोमजन्ये हर्षे सति ऋताय सत्याय उत्तमाय ज्योतिषे, तत्प्राप्त्यै, स्वर्यम् स्वःशब्दवाच्यज्योतिर्भवं, अपीवृतम् तमोगुहासु निगूढं उस्रियाणाम् चिन्मयरश्मीनां अनीकम् समूहं दाः दत्तवानसि, अङ्गिरःप्रभृतिभ्यः ऋषिभ्यो यजमानेभ्यः। स्वरुद्भवं चिद्रश्मिसमूहं गुहासु गूढं ऋतप्राप्तये दत्तवान् ऋषिभ्यः। यद्ध यदा खलु प्रसर्गे देवद्विड्भिः सह संग्रामे त्रिककुप् त्रिषु स्थानेषु भूरादिषु समुच्छ्रितः सन् निवर्तत् नितरां वर्तते, तदा मानुषस्य मनुष्यवर्गस्य द्रुहः द्रोहकारीणि दुरः द्वाराणि, चिद्रश्मिलक्षणानां गवामनिर्गमनाय आसुरबलैः पिहितानि द्वाराणि नृणां द्रोहकारीणि खलु। अप वः अपवृणोति तृतीये स्थाने शुद्धसत्त्वमनोभूमिकायां तदधीश्वर इन्द्रो यदा प्रसन्नो भवति, अन्तर्गुहासु निगूढाश्चिद्रश्मयः निर्गन्तुं प्रभवन्ति, पिहितानां द्वाराणामपावरणात्। अथ चेदमवधातव्यम्, यत् देवशत्रवः पणिवृत्रादयः देवकामानां मनुष्याणामेव द्रोहकारिणः, तैः पिहितानि द्वाराणि द्रोहकारीणीत्युपचर्यते, द्वारपिधानस्यापि कष्टप्रदत्वात् द्रोहकृत्त्वं बोध्यम्॥ स्वर्यम्—स्वरव्ययम्, ज्योतिर्वाचकं, भवे छन्दसीति यत्। अपीवृतम्—अपिपूर्वात् वृणोतेः कर्मणि निष्ठा, निपातस्य चेति पूर्वपदस्य दीर्घः। प्रसर्गः—प्रकर्षेण सृज्यन्ते विमुच्यन्तेऽस्मिन्निषव इति प्रसर्गः, अधिकरणे घञ्। निवर्तत्—वृतु वर्तने, लेट्यडागमः, व्यत्ययेन परस्मैपदम्। वः—वृञ् वरणे, छान्दसो लुङ्॥

पञ्चमीमृचमाह—

तुभ्यं पयो यत्पितरावनीतां राधः सुरेतस्तुरणे भुरण्यू।
शुचि यत्ते रेक्ण आयजन्त सबर्दुघायाः पय उस्रियायाः ॥५॥

तुभ्यम् पयः यत् पितरौ अनीताम् राधः सुऽरेतः तुरणे भुरण्यू इति
शुचि यत् ते रेक्णः आ अयजन्त सबःऽदुघायाः पयः उस्रियायाः ॥

हे इन्द्र, तुरणे शीघ्रकारिणे तुभ्यम्, भुरण्यू जगत्सर्वं पोषयन्त्यौ पितरौ द्यावापृथिव्यौ यत् यदा पयः गव्यममृतं अनीताम् अनयतां, ऊर्ध्वकक्ष्या चितिः द्यौः, अधःकक्ष्या चितिः पृथिवी, उभाभ्यां जगत् पोषितं भवति, ताभ्यामेव यजमानप्रभृतिसर्ववस्तुगतपरिणामवशात् आविर्भूतासु चिन्मयमरीचिलक्षणासु गोषु तत्सारभूतं पयोनामकं अमृतं निधीयते, तच्च इन्द्राय अर्पणीयं भवति। कीदृशं पयः? राधः राधकं समृद्धिकरं सुरेतः सर्वोत्पादनसमर्थरेतःशब्दवाच्यप्राण-सारांशभूतम्। यत् यदा च शुचि शुद्धं सबर्दुघायाः अमृतदुग्धस्य दोग्ध्र्याः चिल्लक्षणायाः उस्रियायाः गोः पयः पूर्वोक्तविधं क्षीरममृतं रेक्णः सर्वातिरिक्तं प्रवृद्धं, अत एव अत्यन्तं धनवत्प्रियं ते यजमानाः तुभ्यं आयजन्त आभिमुख्येन प्रायच्छन्, प्रयच्छन्ति, तदा गोपिधान-द्वाराणि अपावृणोषीति पूर्वया संबन्धः इति पूर्वेषां व्याख्या, तदानीमेव यजमानकृते इन्द्रस्य प्रादुर्भाव इति वयम्, यतः "अध प्रजज्ञे" इति उत्तरा भवति॥ अनीताम्—णीञ् प्रापणे, लङि शपो लुक्। तुरणे—तुरण त्वरायां, कण्ड्वादिः, क्विप्। भुरण्यू—भुरण धारणपोषणयोः, अयमपि कण्ड्वादिः, औणादिक उप्रत्ययः॥

इति प्रथमस्याष्टमे चतुर्विंशो वर्गः

षष्ठीमृचमाह—

अध प्र जज्ञे तरणिर्ममत्तु प्र रोच्यस्या उषसो न सूरः।
इन्दुर्येभिराष्ट स्वेदुहव्यैः स्रुवेण सिञ्चञ्जरणाभि धाम ॥६॥

अध प्र जज्ञे तरणिः ममत्तु प्र रोचि अस्याः उषसः न सूरः इन्दुः
येभिः आष्ट स्वऽइदुहव्यैः स्रुवेण सिञ्चन् जरणा अभि धाम ॥

अध अथ, अनन्तरं पूर्वोक्तविधया "सबर्दुघायाः पयसः" प्रदानात्परमित्यर्थः, स इन्द्रः प्रीतः सन् प्रजज्ञे प्रकर्षेण प्रादुर्बभूव। सः तरणिः द्वेष्टॄणि तमांसि वा तार्याणि जेतव्यानि

भवन्ति, तेषां तारकः ममत्तु अस्मान् मादयतु। स च प्ररोचि प्रकर्षेण रोचते। तत्र दृष्टान्तः— अस्याः समुपस्थितायाः उषसः चित्रप्रभातभासः सन्निधौ सूरो न सूर्य इव। उषसः समीपे सूर्य इव अस्माकं समीपे इन्द्रः प्रसीदति। उत्तरोऽर्धर्चः सुदुर्बोधः। गूढार्थविवरणे स्यादेवमन्वयः— "जरणा, धाम अभि स्रुवेण सिश्वन् इन्दुः, स्वेदुहव्यैः येभिः (अस्माभिः) आष्ट, तानस्मान् तरणिर्ममत्तु" इति। अथ अक्षरार्थः। जरणा जरणीयः स्तवनीयः धाम अभि स्थानमूर्ध्वमुत्तमं अभिलक्ष्य स्रुवेण तीव्राभिकाङ्क्षाविष्कारकेण मुहुर्मुहुराह्वानेन (स्रुक्स्रुवसङ्केतः प्रागुक्तः) सिश्वन् इन्दुः सिच्यमानः सोमः स्वेदुहव्यैः स्वभूतैः समृद्धैरर्पणैरुपेतैः येभिः अस्माभिः आष्ट आशितः, देवभुक्तावशेषः भुक्त आसीत्, तानस्मान् तरणिस्तारक इन्द्रो "ममत्तु" इति संबन्धः॥ ममत्तु—मदी हर्षे, विकरणस्य श्लुः। रोचि—रुच दीप्तौ, छान्दसो वर्तमाने लुङ्। आष्ट—अश भोजने, कर्मणि लुङि विकरणस्य लुक्। स्वऽइदुहव्यैः—सावग्रहः शब्दः, सन्दिग्धापि सायणीय-प्रक्रियैवानुस्रियते, इदि परमैश्वर्ये, औणादिक उप्रत्ययः, अनित्यमागमशासनमिति नुमभावः, स्वभूतानि इदूनि समृद्धानि प्रभूतानि वा हव्यानि येषां तैः। सिश्वन्—व्यत्ययेन कर्मणि कर्तृ-प्रत्ययः। जरणा—जरतिः स्तुतिकर्मा, अस्मात् कर्मणि ल्युट्, विभक्तेराकारः॥

सप्तमीमृचमाह—

स्विध्मा यद्वनधितिरपस्यात्सूरो अध्वरे परि रोधना गोः।
यद्ध प्रभासि कृत्व्याँ अनु द्यूननर्विशे पश्विषे तुराय ॥७॥

सुऽइध्मा यत् वनऽधितिः अपस्यात् सूरः अध्वरे परि रोधना गोः यत् ह प्रऽभासि कृत्व्यान् अनु द्यून् अनर्विशे पशुऽइषे तुराय ॥

स्विध्मा शोभनं इध्मं दीप्तं दीप्तिर्यस्याः सा शोभनोज्ज्वला वनधितिः वनं वननीयं सुखं रसात्मकं अस्यां सोमरसधारायां धीयते इति वनधितिः सा क्षरणशीला सोमधारा यत् यदा अपस्यात् पवमानशीलं कर्म कर्तुमिच्छेत्, तदानीं सूरः प्रेरक इन्द्रः अध्वरे दिव्यस्याध्वनो दातरि यजने गोः चिल्लक्षणस्य गोत्रजस्य रोधना आवरणानि परि परितो निवारयतीति शेषः। यद्ध यदा खलु कृत्व्यान् कृत्वीति कर्मनाम, कर्मसु दैव्येषु साधून् द्यून् दिवसान् अनु अनुलक्ष्य प्रभासि प्रकर्षेण दीप्यसे, तदानीं अशक्ताय कर्मसु त्वरोपेताय च उभयविधाय पुरुषाय त्वदनु-ग्रहसम्पत्तेः निःश्रेयसं सिध्यत्येवेत्याह। अनर्विशे (व्युत्पत्त्यनवधारणादनवग्रहः शब्दः, अर्तेः कर्मणि विच्, अरं गन्तव्यं प्रति विशति, अर्विट्, न अर्विट् अनर्विट्, तस्मै गन्तुमशक्ताय पुरुषाय

पश्विषे पशून्, तद्रक्षितानि चक्षुरादीन्द्रियाणि प्रेरयते तुराय त्वरोपेताय समर्थाय पुरुषाय च सिद्धिर्भवतीति शेषः॥ अपस्यात्—अपस्-शब्दात् क्यच्, लेव्याडागमः। रोधना—रुधिर् आवरणे, भावे ल्युट्, शेर्लोपः। पश्विषे—इष गतौ, अस्मादन्तर्भावितण्यर्थात् क्विप्॥

अष्टमीमृचमाह—

अष्टा महो दिव आदो हरी इह द्युम्नासाहमभि योधान उत्सम्।
हरिं यत्ते मन्दिनं दुक्षन्वृधे गोरभसमद्रिभिर्वाताप्यम्॥८॥

अष्टा महः दिवः आदः हरी इति इह द्युम्नऽसहम् अभि योधानः उत्सम्
हरिम् यत् ते मन्दिनम् धुक्षन् वृधे गोऽरभसम् अद्रिऽभिः वाताप्यम्॥

हे इन्द्र, महो दिवः महतो द्युलोकात् अष्टा अष्टारौ अशितारौ, अमृतस्य देवभुक्तावशेषस्य भोक्तारौ हरी अश्वौ इह अत्र यजने अस्मदीये आदः आत्तवान्, आनीतवानसि। तथा द्युम्नसहम् प्रकाशस्य अभिभवितारं उत्सम् तेजोबलादिप्रस्रवणाधारभूतं अन्तरिक्षालयं मेघस्थानीयं प्रकाशावरणं असुरायमाणं शत्रुं योधानः योधनशीलस्त्वं अभि अभिभव। यत् यदा ते तव वृधे वर्धनाय हरिम् कान्तं, मनोहरं गोरभसम् गोः वृषभ इव रभस्विनं, बलवद्वीर्यवन्तं वाताप्यम् वातेन अतिवेगबलवता आप्यं प्राप्तव्यं मन्दिनम् मदकरं अद्रिभिः कठिनानां घनानां वस्तूनामपि दारणेन मार्दवमापादयन्तीभिः शिलास्थानीयाभिर्वाग्भिः धुक्षन् दुहन्ति अभिषुण्वन्ति यजनोद्योगिन इति शेषः, तदा उत्सं अभिभवेति संबन्धः॥ अष्टा—अश भोजने, तृच्, इडभावश्छान्दसः॥

नवमीमृचमाह—

त्वमायसं प्रति वर्तयो गोर्दिवो अश्मानमुपनीतमृभ्वा।
कुत्साय यत्र पुरुहूत वन्वञ्छुष्णमनन्तैः परियासि वधैः॥९॥

त्वम् आयसम् प्रति वर्तयः गोः दिवः अश्मानम् उपऽनीतम् ऋभ्वा
कुत्साय यत्र पुरुऽहूत वन्वन् शुष्णम् अनन्तैः परिऽयासि वधैः॥

हे इन्द्र, त्वम् दिवः द्युलोकात् ऋभ्वा ऋभुणा इन्द्रसहकारिणा ऋभुगणेन उपनीतम् आनीतं आयसम् अयोमयं, (दार्ढ्यद्योतकं) अश्मानम् शीघ्रं शत्रोर्व्यापकं वज्रं गोः गोनिमित्तं, असुरापहृतगोसमूहलाभहेतोः, प्रति वर्तयः प्रतिकूलं यथा भवति तथा व्यसृजः, विसृजसीति वर्तमानार्थः। यत्र यस्मिन् त्वदीये कर्मणि प्रचलति, हे पुरुहूत बहुभिराहूत, कुत्साय ऋषेः

कुत्सस्यार्थे, निकृष्टानां पापानां अधः कुत्सनात् कुत्सः तस्मै शुष्णम् शोषकमसुरं अनन्तैः अनवधिकैः वधैः वधसाधनैरायुधैः वन्वन् हिंसन् परियासि परितो गच्छसि ॥ वन्वन्—वनु याचने, अत्र हिंसार्थः, "वनुष्यतिर्हन्तिकर्मा अनवगतसंस्कारो भवति" इति यास्कः ॥

दशमीमृचमाह—

पुरा यत्सूरस्तमसो अपीतेस्तमद्रिवः फलिगं हेतिमस्य ।
शुष्णस्य चित्परिहितं यदोजो दिवस्परि सुग्रथितं तदादः ॥१०॥

पुरा यत् सूरः तमसः अपिऽइतेः तम् अद्रिऽवः फलिऽगम् हेतिम् अस्य शुष्णस्य चित् परिऽहितम् यत् ओजः दिवः परि सुऽग्रथितम् तत् आ अदरित्यदः ॥

पुरा यत् पूर्वं यदा सूरः सर्वस्य प्रेरकः सूर्यः तमसः तमोरूपस्यासुरस्य शुष्णस्य अपीतेः अपिधानात् आच्छादनात् मुक्तोऽभवदिति शेषः, तदानीं हे अद्रिवः वज्रवन्, तम् फलिगम् मेघनामैतत् (व्याख्यातमिदं १.६२.४) मेघवदावृण्वन्तं अस्य असुरस्य हेतिम् आयुधविशेषं प्राभाङ्क्षीरिति शेषः। तथा शुष्णस्य चित् शुष्णस्यासुरस्यापि यत् ओजः यद्बलं दिवः परि द्योतमानस्य ज्योतिषः उपरि परिहितम् परिधानवत् आच्छादितं सुग्रथितम् सुष्ठु संहतं तत् तदोजः आ अदः आदृणाः विश्लिष्टं शिथिलितं कृतवानसि। ऋतस्य ज्योतिषः सूर्यस्य दर्शने विषये प्रतिरोधकं आवरकं च गहनं तमः, तस्य प्रध्वंस इन्द्रेणापाद्यते ॥ अदः—दृ विदारणे, छान्दसो लङ् ॥

इति प्रथमस्याष्टमे पञ्चविंशो वर्गः

एकादशीमृचमाह—

अनु त्वा मही पाजसी अचक्रे द्यावाक्षामा मदतामिन्द्र कर्मन् ।
त्वं वृत्रमाशयानं सिरासु महो वज्रेण सिष्वपो वराहुम् ॥११॥

अनु त्वा मही इति पाजसी इति अचक्रे इति द्यावाक्षामा मदताम् इन्द्र कर्मन् त्वम् वृत्रम् आऽशयानम् सिरासु महः वज्रेण सिस्वपः वराहुम् ॥

हे इन्द्र, मही महत्यौ पाजसी पाजो बलं, मत्वर्थलक्षणया बलवत्यौ अचक्रे चक्ररहिते, अत एव चङ्क्रमणवर्जं स्थायिन्यौ द्यावाक्षामा द्यावापृथिव्यौ कर्मन् त्वदीये वीरकर्मणि त्वा त्वां

अनु मदताम् अनुलक्ष्य हृष्टं अकुरुताम् । तथा त्वम् आशयानम् समन्तात् व्याप्य वर्तमानं वराहुम् वराणां श्रेष्ठानां साधूनां हन्तारं वृत्रम् असुरं सिरासु सरणशीलासु अप्सु महो वज्रेण महता वज्रेण सिष्वपः अस्वापयः, पातितवान् (१.३२ सू०), तत्र व्याख्यातमवधेयम् ॥ महः— महतः, करणे शेषत्वेन विवक्षिते षष्ठी, अल्लोपश्छान्दसः । सिष्वपः—ञिष्वप् शये, ण्यन्ताल्लुङ् ॥

द्वादशीमृचमाह—

त्वमिन्द्र नर्यो याँ अवो नॄन्तिष्ठा वातस्य सुयुजो वहिष्ठान् ।
यं ते काव्य उशना मन्दिनं दाद्वृत्रहणं पार्यं ततक्ष वज्रम् ॥१२॥

त्वम् इन्द्र नर्यः यान् अवः नॄन् तिष्ठ वातस्य सुऽयुजः वहिष्ठान् यम् ते काव्यः उशना मन्दिनम् दात् वृत्रऽहनम् पार्यम् ततक्ष वज्रम् ॥

हे इन्द्र, नर्यः नृभ्यो हितः त्वम् नॄन् नेतॄन् बलवतः यान् अश्वान् अवः अवसि, रक्षसि तान् सुयुजः सुखेन रथेन युज्यमानान् वातस्य सदृशान् वेगे बले चेति शेषः, वहिष्ठान् अतिशयेन वोढॄन् अश्वान् तिष्ठ आतिष्ठ, आरोह । काव्यः कवेः पुत्रः उशनाः देवर्षिः, मनुष्यो भूत्वा देवत्वं प्राप्तो वा कवेर्द्रष्टुः सत्यस्य पुत्र उशनाः कमनीयः कान्तिमान्, (१.५१.१०) अत्र व्याख्या द्रष्टव्या, मन्दिनम् शत्रुवधात् मदकरं यम् वज्रम् ते तुभ्यं दात् अदात् तम् वृत्रहणम् वज्रं पार्यम् शत्रूणां पारणे समर्थं ततक्ष तनूकृतवानसि ॥ अवः—अवतेः, लेट्यडागमः । वहिष्ठान्— वोढृशब्दादातिशायनिक इष्ठन् तुश्छन्दसीति ॥

See Strand

त्रयोदशीमृचमाह—

त्वं सूरो हरितो रामयो नॄन्भरच्चक्रमेतशो नायमिन्द्र ।
प्रास्य पारं नवतिं नाव्यानामपि कर्तमवर्तयोऽयज्यून् ॥१३॥

त्वम् सूरः हरितः रमयः नॄन् भरत् चक्रम् एतशः न अयम् इन्द्र प्रऽअस्य पारम् नवतिम् नाव्यानाम् अपि कर्तम् अवर्तयः अयज्यून् ॥

यद्यपि अश्वः प्राणबलाद्युपलक्षणो भवति, तथापि सूर्यस्याश्वाः सूर्यरश्मयः प्रसिद्धाः, तेषां प्राणबलादिवैशिष्ट्ये सत्यपि चिन्मयप्रकाशकत्वं, तेन क्रियाकारकत्वं च बोध्ये । सूर्याश्वगतौ सत्यां सर्वत्र चिन्मयः प्रकाशो भवति, तस्यामसत्यामन्धकारो भवत्येव, तस्मिन्नेव तमोमये अरातीनामयज्वनां विनाशो निरुह्यते इन्द्रेण ऊर्ध्वं अत्यन्तदूरधाम्नः "परावतः" आगतेन । अयं

रहस्यार्थोऽस्यां प्रतिपाद्यते। स्थूलपक्षे दुर्घटोऽर्थः विकल्पबाहुल्याय कल्पते। हे इन्द्र, त्वम् सूरः प्रेरकः सर्वस्य, सूर्यो वा भूत्वा हरितः नॄन् हरिद्वर्णान् कमनीयान्, नेतॄन् बलवतोऽश्वान् रामयः उपारमयः, अत एव अयम् सूर्येणापि सह स्पर्धमान इति वर्णितः (१.६१.१५, व्याख्याऽवधेया)। एतशः उज्ज्वलः सूर्याश्वः चक्रम् रथस्य चक्रं न भरत् न प्रावहत्। अपि च त्वं नाव्यानाम् नावा तार्याणां नदीनां नवतिम् नवतिसंख्यां पारम् तीरं, तीरे (सप्तम्यर्थे) अयज्यून् अयज्वनः देवद्वेषिणः प्रास्य प्रक्षिप्य कर्तम् अपि तव कर्तव्यमपि अवर्तयः निरवर्तयः। "परावतः" इन्द्रस्यागमनं असुराद्ययज्ववासस्थानं दुर्गममिति च द्योतयति "नाव्यानां नवतिं" इति (१.३२.१४)॥ रमयः—लङि बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः॥

चतुर्दशीमृचमाह—

त्वं नो॑ अ॒स्या इ॑न्द्र दु॒र्हणा॑याः पा॒हि व॑ज्रिवो दुरि॒ताद॒भीके॑।
प्र नो॒ वाजा॑न्र॒थ्यो॒३ अश्व॑बुध्याति॒षे य॑न्धि॒ श्रव॑से सू॒नृता॑यै॥१४॥

त्वम् नः॒ अ॒स्याः इ॒न्द्र॒ दुः॒ऽहना॑याः पा॒हि व॒ज्रि॒ऽवः॒ दुः॒ऽइ॒तात् अ॒भीके॑ प्र नः॒ वाजा॑न् र॒थ्यः॑ अश्व॑ऽबुध्यान् इ॒षे य॒न्धि॒ श्रव॑से सू॒नृता॑यै॥

हे वज्रिवः वज्रवन्, इन्द्र, त्वम् दुर्हणायाः दुःखेन हन्तव्यायाः अस्याः दुरवस्थायाः, तथा अभीके समीपे, सङ्कटे समीपवर्तिनि सति दुरितात् पापाच्च नः अस्मान् पाहि रक्ष। अपि च रथ्यः रथयुक्तान् अश्वबुध्यान् अश्वैर्बोद्धव्यान्, यावन्तोऽश्वास्तावद्भिर्बोद्धुं योग्यान् इयन्तो वाजा इति वाजान् समृद्धिलक्षणान् नः प्रयन्धि प्रयच्छ। किमर्थम्? इषे प्रेरणाबलभोगाय श्रवसे दिव्याय श्रवणाय सूनृतायै शोभनसत्यात्मिकायै वाचे॥ दुर्हणायाः—ईषद्दुःसुष्विति हन्तेः कर्मणि खल्। रथ्यः—रथशब्दस्य मत्वर्थीय ईकारः। यन्धि—यम उपरमे, विकरणस्य लुक्, हेर्धिः छान्दसः॥

पञ्चदशीमृचमाह—

मा सा ते॑ अ॒स्मत्सु॑म॒तिर्वि द॑स॒द्वाज॑प्रमहः॒ समिषो॑ वरन्त।
आ नो॑ भज मघव॒न्गोष्व॒र्यो मंहि॑ष्ठास्ते सध॒मादः॑ स्याम॥१५॥

मा सा ते॒ अ॒स्मत् सु॒ऽम॒तिः वि द॒स॒त् वाज॑ऽप्रमहः सम् इषः॑ व॒र॒न्त॒ आ नः॒ भ॒ज॒ म॒घ॒ऽव॒न् गोषु॑ अ॒र्यः मंहि॑ष्ठाः ते॒ स॒ध॒ऽमादः॑ स्या॒म॒॥

हे वाजप्रमहः वाजैः समृद्धिभिः प्रकर्षेण महनीय पूजनीय, इन्द्र, ते त्वदीया सा प्रसिद्धा, सुमतिः शोभना अनुग्रहात्मिका बुद्धिः अस्मत् अस्मासु (विभक्तिलोपः) मा वि दसत् मा क्षयं प्राप्नोतु। तथा इषः एषणाशक्तयः अस्मान् सम् वरन्त सम्यक् वृण्वन्तु, संवृतान् कुर्वन्तु। हे मघवन् धनवन् इन्द्र, अर्यः स्वामी त्वं नः अस्मान् गोषु चिन्मयकिरणेषु आभज प्रापय। ते तव मंहिष्ठाः अतिशयेन पूजयितारो वयं सधमादः त्वया सह युष्मदादिभिर्देवैः सह माद्यन्तः स्याम भवेम ॥ अस्मत्—सप्तम्या लुक्। दसत्—दसु उपक्षये, माङि लुङि पुषादित्वादङ्। मंहिष्ठाः—मह पूजायां, नुमागमः छान्दसः, अस्मादन्तर्भावितण्यर्थात् तृच्, तुश्छन्दसीतीष्ठन्। सधमादः—मद तृप्तियोगे चुरादिः, सह मादयन्ते तृप्ता भवन्तीति सधमादः, क्विप्, सहस्य सधादेशः ॥

इति प्रथमस्याष्टमे षड्विंशो वर्गः

इति श्रीमहर्षिरमणभगवत्पादानुध्यातश्रीभगवद्वासिष्ठगणपतिमुनिप्रवरान्तेवासिनः
पूर्णयोगाचार्यश्रीमदरविन्दभगवत्पादानुध्यातस्य
भारद्वाजस्य विश्वेश्वरसूनोः
कपालिनः कृतिः

वेदगुप्तार्थसिद्धाञ्जनाख्यं ऋग्वेदस्य प्रथमाष्टकभाष्यम्
समाप्तम्

———

# सिद्धाञ्जनभाष्ये

## अवधेयविषयांशानां सूचिका


पुटसङ्ख्या

१–९१ भूमिका—विषयानुक्रमणिकासहिता
९३ अग्निधर्मप्रतिपादनपरं अग्निशब्दनिर्वचनम्
९४ ईळतिरध्येषणाकर्मेत्युपपादनम्, अध्येषणा अग्नेः उपास्तिश्चिरन्तनी
९६–७ अध्वरशब्दार्थविचारः, श्रवः-श्रवण-श्रुतिशब्दानां समानार्थत्वम्, अतीन्द्रियार्थविचित्रश्रवणशाली भगवानग्निरित्यादि प्रतिपादितम्, भद्रपदं अशुभ-अनृतज्ञानजन्य-दुरितप्रतिद्वन्द्वित्वेन प्रयुज्यते वेदे इति बहुमन्त्रवर्णोदाहरणेनोपपादनम्
९९ यजमानस्य गम्यं परं धाम, तत् 'सत्यं ऋतं बृहत्' अग्नेः स्वावासस्थानम्, तत्प्राप्तेः यज्ञः साधनं, तस्य निर्वोढा त्वग्निः कविक्रतुः सत्यः सत्यरक्षकः इत्यादिकं मन्त्रवर्णैरुपपादितम्
१०० प्रथमसूक्तसारांशकथनपूर्वकं लघुब्रह्मयज्ञः 'अग्निमीळे' सूक्तमिति सम्प्रदायस्योपपादनम्
१०१ माधुच्छन्दसे द्वितीयसूक्ते वायव्यतृचे प्रसङ्गात् सोमस्वरूपनिर्देशः
१०२ धेनाशब्दार्थविचारः
१०३–४ अन्तरर्थपरे व्याख्याने 'कोऽसौ सोमः' इति प्रश्नमुत्थाप्य तत्स्वरूपप्रतिपादनम्, प्रसङ्गादिन्द्रतत्त्वविचारः
१०५ वाजशब्दः समृद्धिवाचकोऽस्मत्पक्षे इति कथनम्
१०६ ऐन्द्रवायवतृचसूक्ष्मार्थप्रदर्शनम्
१०७ दक्ष-घृत-शब्दार्थविचारः
१०८ ऋतशब्दस्य एकरूपार्थत्वं सर्वत्रास्माकं नये, तथा क्रतुशब्दस्य प्राधान्यम्
१०९ 'दक्षं दधाते अपसम्' इत्यत्र व्याख्याने 'अपसम्' दक्षविशेषणमिति निरूपणम्, दक्षशब्दार्थविचारः
११०-११ धीपदार्थविचारः, मैत्रावरुणतृचस्य अतीततृचसंबन्धः, तात्पर्यसंग्रहश्च
११२ 'इषः' 'चनस्यतम्' इत्यत्र वैशिष्ट्यविचारः

पुटसङ्ख्या

११३ 'शवीरया' 'धिष्ण्या' पदार्थविचारः, तथा दस्र-युवाकुशब्दार्थविचारः
११४–६ 'वृक्तबर्हिषः' 'रुद्रवर्तनी'—तत्र विचारः अश्विनोर्व्यापारविवरणं बहुभिर्मन्त्रवर्णैः, आश्विनतृचतात्पर्यम्
११७–८ ऐन्द्रतृचे 'अण्वीभिः तना पूतासः' इत्यस्य विशिष्टो विचारः
११९ ऐन्द्रतृचस्य तात्पर्योपपत्तिः
११९-२० 'ओमासः' इत्यस्य विचारोऽवधेयः, 'चर्षणयः' 'दाश्वांसः' इत्यत्र वैशिष्ट्यं प्रतिपादितम्
१२० 'विश्वे देवाः अप्तुरः' अर्थाविष्कार उपपाद्यते
१२१–२ 'एहिमायासः' अस्य व्युत्पत्तिः तात्पर्योपपत्तिश्च, 'क इमे विश्वे देवाः' इति प्रश्नपूर्वकं प्रतिवचनम्
१२२–३ सारस्वततृचावतारिका—'सूनृतानां न केतुना' इत्यत्र विशिष्टो विचारः—सरस्वतीस्वरूपं, तत्र संशयः परिहारश्च
१२४ सारस्वततृचस्य तात्पर्यम्, तस्य वेदरहस्योद्घाटनोपयोगित्वं, 'महो अर्णः' इत्यत्र विशेषः
१२५ 'सुरूपकृत्नुं' इति ऋचि दृष्टान्तदार्ष्टान्तिकविचारः
१२६ 'गोदाः' अत्र वैशिष्ट्यं, कर्मठव्याख्यासरणिः प्रदर्शिता
१२७ 'अति मा ख्यः' अस्य मा भूरगोचर इत्यर्थस्योपपादनम्, सायणीयव्याख्यानस्यायुक्तता प्रदर्शिता
१२८ 'विप्रः' वेगवानित्युपपादनम्
१२९ 'निदः' निरोद्धार इति निर्णयनम्, 'उत ब्रुवन्तु' ऋचस्तात्पर्ये विशेषः प्रदर्शितः
१३० 'उत नः सुभगाँ' अस्याः पूर्वस्याश्च परस्परसंबन्धो ज्ञापितः
१३२ वाजशब्दार्थप्रसक्तिः

**पुटसङ्ख्या**

१३३-५ चतुर्थसूक्ततात्पर्योपपादने वृत्राद्यसुराणां प्रस्तावशात् तेषां तत्त्वं प्रतिपादितम्

१३५ 'स्तोमवाहसः' साकूतं पदं, अन्तर्यागे अस्माकं 'सखाय इमे युजो जामयः' इन्द्रं प्रापयितुं प्रभवन्तीति प्रदर्शनम्

१३७ 'संस्थे' संस्थाने इत्यत्र चर्चा, 'हरी इन्द्रस्य' इत्यत्र विवरणम्

१३८ 'त्र्याशिरः सोमाः' अस्य विवरणम्, गवादिद्रव्यत्रयसङ्केतार्थप्रतिपादनम्, 'सद्यो वृद्धो अजायथाः' 'ज्यैष्ठचाय' इत्यत्र तात्पर्योपपत्तिः कर्मपरव्याख्याने वैरस्यं च सूचिते

१३९ स्तोत्रेण मन्त्रात्मकेन देवानामभिवृद्धिर्यजमाने प्रोक्ता

१४० 'अक्षितोतिः' अत्र विचारः

१४१ 'ग्वय वधम्' शरीराद्वधं पृथक् कर्तुं इन्द्रः प्रभुरिति प्रतिपादनम्

१४१-२ 'युञ्जन्ति ब्रध्न'मित्यस्या व्याख्याने ब्रध्नशब्दार्थविचारः, ऋचः समासेन तात्पर्यकथनम्

१४३ इन्द्राश्वयोः रथयोगः, तदाख्यानम्, तृतीयर्चो व्याख्याने 'मर्यः' 'केतुः' इत्यादेर्विवरणम्

१४४ रथाश्वस्वरूपविवरणम्

१४४ इन्द्रप्रादुर्भावात्परं मरुतां साहाय्यमपेक्षितमित्यारभ्य 'देवकामानामृषीणामेव दिव्यत्वप्राप्तये पुनर्जन्म तत्' इति रहस्यार्थस्य प्रतिपादनम्

१४५ मरुतां जन्म 'स्वधामनु' इत्यस्य सविचारं तात्पर्यम्

१४६ 'वीळु चिदि'ति ऋचः सारांशकथने 'ज्योतिर्दृशामि'त्यारभ्य 'अतोऽयमेषां विभव इति उत्तरत्र वक्ष्यते' इति वाक्यान्यवधेयानि

१४६ प्रत्यग्रजन्मानो ज्योतिर्दृश इन्द्रकामा इत्युपपादनम्

१४९-५० षष्ठसूक्तस्य तात्पर्योपपादने विचारः, दैवतनिर्णये पूर्वेषां मतभेदः, तत्र कारणम्, 'देवयन्तः' इति मन्त्रे मरुतो देवता इति नाङ्गीकृताः, कारणमुक्तम्

१५१ इन्द्राश्वौ 'वचोयुजा' इत्यत्र ईषन्मात्रं विवरणम्

**पुटसङ्ख्या**

१५२ 'वि गोभिरद्रिमैरयत्' अत्र अर्थवैशिष्ट्यं प्रदर्शितम्

१५३ 'अप्रतिष्कुतः' अनाच्छादितः नित्यप्रकाश इति निरूपणम्

१५४ यद्यपि यदा प्रेरणं भवति तदा स्तोत्रं करोति मन्त्रद्रष्टा, तथापि स्तुतयो नालं इन्द्रमहिमानं परिच्छेत्तुमिति ऋष्युक्तिः, अत्र प्रेरणं विना मन्त्रं न कवयति कविरिति सूचनम्

१५४ पुनश्च 'अप्रतिष्कुतः' नित्यप्रकाश इति कथनम्

१५५ 'चर्षणीनाम्' 'पञ्च क्षितीनाम्' अत्र लोकसंस्थाननिर्देशः, पञ्चजनचर्चासूचनम्, 'इन्द्रः केवल' इत्यत्र विवरणम्

१५८ तोकशब्दार्थः अन्तरर्थे, 'देवानामपत्यलाभस्तु मनुष्ये स्वांशप्रादुर्भावः' इत्यादि विवरणम्, इन्द्रस्य 'कुक्षिः सोमपातमः' अत्र विचारः

१५९ 'उर्वीरापो न काकुदः' अत्र तात्पर्ये वैशिष्ट्यं प्रोक्तम्

१५९ 'मही' भारतीति निरूपणम् , 'विरप्शी' पदार्थविचारः

१६१ 'एमेनं' इति ऋचस्तात्पर्ये अन्तर्यागपरे पुरुषे स्रष्टव्यानि सर्वाणि इन्द्रः स्रष्टा साध्नोतीति प्रतिपादनम्

१६२-३ 'चित्रं राधः विभु प्रभु' अत्र विवरणम्, 'अस्मान् सु तत्र चोदये'त्यत्र विशिष्टे व्याख्याने दिव्यधनरहस्यमुक्तम्

१६६-७ इन्द्रमेव सानुमन्तं बृहन्तं शिखरिणमिवारोहन्ति क्रमश इति रहस्यं प्रतिपादितम्, उत्तरोत्तराधिरोहे प्रभूतं प्राप्तव्यं स्पष्टं भवतीत्युपपदानम्

१६७ इन्द्राश्वप्रसङ्गे 'केशिनौ' इत्यस्य गम्यार्थः

१७०-१ 'स्वर्वतीरपः' अत्र विवरणम्, 'गाः सन्धूनुहि' अर्थस्योपपादनम्

१७२ ऋषौ देवतायां चावयवार्थ उपपद्यत इति कौशिकप्रस्तावे निर्वचनम्, तथा गोतम-जमदग्निभरद्वाजादयो निदर्शनमित्युक्तिः

१७६ स्वर्वतीर्गाः अपहृत्य पर्वतगुहायां क्वापि अन्धतमसे जडोपलक्षणे निहितवानसुरो वलो वृत्र-

| पुटसङ्ख्या | |
|---|---|
| | बन्धुरिति वृत्तान्तान्वाख्यानस्य तत्त्वं संक्षेपेणोक्तम् |
| १७७ | 'शुष्णः' शोषयिता रसानां वल इव वृत्रबन्धुरिति कथनम् |
| १७९ | अन्तर्यजने हविराद्यर्पणानां शरीरसंबन्धित्वकथनम् |
| १८१ | 'सत्यधर्माणं' अत्र सत्यधर्म एव परमं श्रेय इत्यादि निरूपणम्, 'सत्यधर्माय दृष्टये' इत्यौपनिषदवचनस्यानुस्मरणम् |
| १८३-४ | आप्रीशब्दार्थविचारः—आप्रीणयित्र्यः आप्रियः याज्याः स्तुतयः, तत्र प्रयाजदेवता अधिकृत्य मतभेदोपन्यासः—आप्रीसूक्ते प्रतिपादितस्य तत्त्वस्य सारांशः कथं यजमाने अग्निराधातव्य इत्यादिना कथितः, आपूरयित्र्यो देवताः आप्रिय इति पक्षान्तरप्रतिपादनम् |
| १८५ | सुसमिद्ध-तनूनपाच्छब्दार्थस्वरसतासूचनम् |
| १८६ | नराशंसोऽग्निरित्युपपादनम् |
| १८६-७ | 'मनुर्हितः' अत्र विशेषः, ईळितोऽग्निरेवेति प्रतिपादनम्, अमृतचक्षुःस्थानं भवति अन्तर्वेद्यामासनमिति प्रतिपादनम् |
| १८८ | द्वारो देवीरधिकृत्य यजमानायोर्ध्वगतिद्वाराणां उद्‌घाटनाय देवीः शक्तीः प्रार्थयत इत्यादि तत्त्वं प्रतिपादितम् |
| | 'नक्तोषासा' इत्यत्र रात्रिशब्देन साधारणी मानुषी प्रज्ञा, उषोलक्षितेन अह्ना दैवी प्रज्ञा इत्यादि रहस्यं सारत उक्तम् |
| १८९-९० | इळा सरस्वती भारती इति तिस्रो देवीरधिकृत्य विशिष्टं विवरणम्, 'इह त्वष्टारमूतये' इत्यस्य विवरणे 'यजमाने नवनवदिव्यरूपाणां आविष्काराय' इत्याद्यवधेयम् |
| १९१ | साक्षात्सम्पर्करूपं ज्ञानं संज्ञानं प्रार्थ्यते देवेभ्य इति 'अव सृज' इत्यस्य विवरणे सूचनम् |
| | 'यज्वनो गृहे' मनःप्राणशरीरात्मके इति तत्त्वम् |
| १९३ | चमू-चमसादिशब्दार्थरहस्यम्, द्रप्सशब्दार्थविचारः |
| १९४ | स्त्रीदेवतानां पुरुषदेवतानां च विशेषस्य प्रदर्शनम् |
| १९७ | अरुष-हरित्-रोहित्-शब्दानां साभिप्रायरथाश्वविशेषणानां तात्पर्यसूचनम् |
| | ऋतुदेवता अधिकृत्य 'ऋतुना दिव्यसमयानुसारेणे'त्यादिगूढार्थप्रतिपादनम् |
| १९८ | पोत्र-पोतृशब्दार्थविचारः रहस्यं च, तथा नेष्टृपदार्थप्रतिपादनम् |
| १९९ | 'योनिषु त्रिषु' इत्यत्र रहस्यार्थविवरणम् |
| | देवकामस्यान्तरुन्मेषशालिनः नित्यमिन्द्रसख्यमिति प्रतिपादनम् |
| २००-१ | प्रकृतिभूतोऽध्वरः अग्निष्टोम इत्याद्युपन्यासेन अन्तर्यजने तात्पर्यप्रतिपादनम्, द्रविणशब्दार्थविचारः, 'देवेषु ता वनामहे' इत्यत्र तात्पर्ये स्वारस्यं, 'इष्यत' इव धातोर्न केवला गतिरर्थः, किंतु प्रेरणबलविशिष्टेति कथनम् |
| २०२ | 'तुरीयं यजामहे' इत्यत्र तात्पर्ये वैशिष्ट्यम् |
| | 'दीद्यग्नी अश्विना' अत्र अन्तरर्थानुसारेण युक्तिः |
| २०३ | 'गार्हपत्येन सन्त्य' तात्पर्यं अवधेयम्—'सन्त्य'-शब्दनिर्वचनम् |
| | 'हरयः सूरचक्षसः' अत्रोपपादनम् |
| २०४-५ | 'धाना घृतस्नुवः' अत्र सविस्तरो विचार इन्द्राश्वौ अधिकृत्य |
| २०७ | 'गोभिरश्वैः काममा पृण' अत्र गूढार्थोऽवधेयः |
| २०८ | इन्द्रस्य वरुणस्य च विशेषः प्रदर्शितः |
| २०९ | 'नेदिष्ठं ईमहे' अत्र तात्पर्यप्रतिपादने विचारः, युवाकुशब्दार्थविचारः |
| २१२-३ | 'कक्षीवन्तं य औशिजः' अत्र व्याख्याने वैशिष्ट्यम्, कक्षीवच्छब्दार्थः, अत्र यास्क-दुर्गभाष्यपङ्क्तीरुदाहृत्य सारनिर्देशः |
| २१३ | 'यो रेवान्' अत्र मन्त्रवाक्पतेर्देवस्य अन्तर्यामिजिनोपासकेन नित्यसंयोगः प्रार्थित इत्युपपादनम् |
| २१५ | 'दक्षिणा' सहजावबोधरूपिणी शक्तिरित्युक्तिः |
| २१६ | 'सदसस्पतिः अद्‌भुतः अग्निः' अत्र अद्‌भुत इत्यग्निलिङ्गं अवधेयम्, ऋषिरग्नेः सकाशादेव यजनतन्त्रं शिक्षत इति विवरणम् |
| २१७ | 'नराशंस'विचारः, 'सप्रमखसम्' अत्र निर्वचनादिविचारः |
| २१८ | गोपीथशब्दार्थः, मरुत्स्वरूपस्य संक्षेपेण निर्देशः |
| २१९ | 'अर्कम्' अर्चनं ऋगात्मकं स्तोत्रमित्युक्तिः, उदकमिति सायणीयम्, इन्द्रमिति स्कन्दस्वा- |

पुटसङ्ख्या

मीयमित्यादिनिर्देशः, मरुतां शुभ्रत्वविशेषण-स्वारस्यम्

२२० मरुतां स्वरूपमधिकृत्य तेषां पर्वतचालनादीनां सूक्ष्मं तत्त्वम्

२२१-३ आर्भवसूक्तार्थविवरणाय पीठिका, ऋभूणां स्वरूपम्, इन्द्राश्वतक्षणनिष्पादनं मनुष्ये यजमाने तथा आश्विनरथतक्षणं, अमृतस्य दोग्ध्र्याः तक्षणं च

२२४ अखण्डप्रज्ञाया अमृतसुवो धेनोरदितेः स्वीयां वृत्तिं रूपीभवन्तीं मानुषे पुरुषे निष्पादयन्ति ऋभव इति संक्षेपेण प्रतिपादनम्

२२४-५ मातापित्रोः द्यावापृथिव्योः यौवनं संपादयन्ति ऋभव इत्यस्य तात्पर्यप्रतिपादनम्

२२५ ऋभुभिः सोमस्य सम्पादनं, तेषां इन्द्रादिभिः सङ्गमनमित्यादेस्तत्त्वम्

२२६ देवाश्चतुर्व्यूहात्मके चमसे पानपात्रे सौम्यममृतरसं पिबन्ति इत्यस्याशयः, मनुष्याय चतुर्व्यूहात्मकसुखमयशरीरसम्पादनेन ऋभवस्तं सत्यचिन्मयधामाधिवासक्षमं व्यधुरिति प्रतिपादनम्

२२७ मानुष्यां सिद्धायां प्रज्ञायां सदानन्दप्रवाहान् धारयितुमृभवः प्रभवन्तीति प्रतिपाद्य तेषां देवभागपरिकल्पनदानदक्षत्वमपि वर्णितम्

२२९ 'प्रचेतुने पदे' इत्यत्र विष्णोः परमं पदमेवोक्तमित्युपपादनम्, ज्वलितक्रतुभूतोऽग्निविभवः भास्वरचेतोभूत इन्द्रविभवः, उभाभ्यां सङ्गताभ्यां जागरूकाभ्यां लब्धव्यं तत्पदं नः शरणमिति 'तेन सत्येन' इति मन्त्रस्य सारांशः प्रत्यपादि

२३१ 'या वां कशा' इत्यत्र कशा वागिति उपपादनं, कर्मठव्याख्यानिरीक्षणम्, 'न हि वामस्ति दूरके' अत्र तात्पर्यं उपपत्तिश्च

२३२ 'अपां नपातं सवितार'मित्यत्र तात्पर्यविचारः उपपत्तिश्च

२३४ भारती बृहज्ज्योतिष ऋतभा, होत्रा वरूत्री धिषणा इत्यादीनां विवरणम्

२३५-६ 'तयोरित्' अत्र विशिष्टा व्याख्या, 'गन्धर्वस्य ध्रुवे पदे' अत्र, यत्र ऋतरश्मिर्दीप्तो लसति स्थिरः च तस्मिन् पदे इति मन्त्रवर्णान्तरेणोपपादनम्

पुटसङ्ख्या

२३७ 'सप्त धामभिः' अत्र सप्ततत्त्वात्मिका विश्वसत्तेत्यादिविवरणम्, षण्णां वैष्णवीनामृचां विषयसङ्ग्रहः

२३८ 'तद्विष्णोः परमं पदं' अस्य भूमिकायां (पु० ६७–६८) प्रसक्तिः स्मारिता

२३९ 'तद्विप्रासः' अत्र व्याख्यायां तदुक्तमृषिणेत्याद्यौपनिषदवाक्यानां ईदृशा मन्त्रा बीजायन्त इति प्रतिपादनम्

२४३ पृश्निश्चित्रवर्णा गौरित्युपन्यस्य मरुतः पृश्निमातर इत्यस्य तात्पर्योपपादनम्

२४४ पौष्णतृचे 'आजा नष्टं यथा पशुम्' इति दृष्टान्तविवरणेन गूढस्य सोमस्याहरणे दक्षः पूषेत्युपपादनम्

२४५ 'उतो स मह्यं' अत्र पूष्णो विभवः 'गोभिर्यवं न चर्कृषत्' इति दृष्टान्तेन प्रतिपादितः, तामसैर्देवारिभिरपहृत्य रहसि निहितं देवानामन्नं अमृतं सोममाहृत्य यजमानं पुष्णातीत्यादिरहस्योद्घाटनम्

२४७ 'अप्स्वन्तरमृतं' अत्र सङ्केतभूता आप इत्यादिकथनम्

'अप्सु मे सोमो अब्रवीत्' व्याख्यायां विशेषोऽवधेयः

२४८ 'आपः पृणीत' निरन्तरं सूर्यदर्शनाय बलप्रदं भेषजं न लौकिकं भवति, दिव्यवैभवं आप्यं भेषजमिति प्रतिपादनम्

२४९ आप्यसारतादात्म्यानुभवसम्पन्न ऋषिरिति 'आपो अद्य' इत्यस्य व्याख्यायां प्रतिपादितम्

२४९-५० 'सं माग्ने वर्चसा' इत्यस्य विवृतौ 'ऋषयो मानुष्यस्योद्धारायेन्द्रस्य सहकारिणः मनुष्या एव, देवभावं प्राप्ताः मानुष्याभिमानिनो देवर्षयो वा' इत्यादि प्रतिपादितम्

२५१ ऋषिः शुनःशेपः पाशबद्धमात्मानमवबुद्ध्य विमोचनाय कं देवं आह्वयामि इत्यारभते, अत्र अदितेर्विश्वमातुर्लाभस्य रहस्यं विवृतम्, 'भागं ईमहे' अत्र मन्त्रवर्णान्तरैः संगतिरुक्ता

२५३ 'अबुध्ने राजा वरुणः' अत्र गूढार्थवैशिष्ट्यमवधेयम्

२५४ 'वनस्तूपः' चिन्मयो भवति यस्मात् केतवः प्रस-

पुटसङ्ख्या

रन्ति, 'स्तूपः सङ्घातः' इत्यादौ रहस्यानि विव्रियन्ते, 'वरुणः सूर्यायाध्वानं करोती' त्यत्रोपपादनम्

२५५ 'हृदयाविधश्चित्' अस्य विवरणे वरुणस्य कृत्यं प्रदर्शितम्, निर्ऋतिः समष्टिगता जगद्व्यापारवर्तिनी मृत्युदेवता सर्वपापमूलभूतेत्यादि प्रतिपादितम्

२५६ यद्यप्यध्यात्मं देवानां कर्माण्येव ऋषीणां प्राधान्येन लक्ष्याणि भवन्ति, तथापि जगद्व्यापारे देवानामधिकारोऽविचाल्य इत्यादिनिरूपणम्

२५७ 'तदिन्नक्तं' अर्त्राचि 'तदयं केतो हृद आ विचष्टे' इत्यस्यात्यन्तप्राधान्यमाविष्कृतम्

२५८ 'शुनःशेपो ह्यह्वत्' अस्य व्याख्यायां 'त्रिषु द्रुपदेषु' इत्यत्र रहस्यार्थविवरणम्

२५९ सूक्तस्यान्ते, पाशबन्धविमोचनविषये उपनिषदुपदिष्टग्रन्थिभेदरहस्यं तान्त्रिकयोगमार्गोपदिष्टग्रन्थिबन्धत्रयभेदतात्पर्यं च सामान्येन निर्दिष्टे, विप्रमोक्षोऽत्र वरुणदेवानुग्रहसाध्यो भवतीत्युक्तम्

२५९-६१ टिप्पण्यां शुनःशेपशब्दार्थप्रतिपादनम्, ऐतरेयब्राह्मणोक्तशुनःशेपकथाविस्तरः, तत्र सायणभाष्यपङ्क्तीरुदाहृत्य नरवधकथाया दूषणम्, पुरुषमेधस्य तत्त्वम्, उव्वटभाष्यनिरीक्षा, अतिष्ठाकामशब्दनिर्वचनम्, अतिष्ठाकामस्य पुरुषमेधाधिकार इत्यादिबहुरहस्यविवरणम्

२६२ 'परा हि मे वि मन्यवः' इत्यत्र धीवृत्तीनां उत्पतनमधिकृत्य प्रसङ्गः

२६३-४ 'तदित् समानं' अत्र तच्छब्दवाच्यं ऋतं ज्योतिरित्युपपादनम्, टिप्पण्यां 'वेनन्ता मित्रावरुणा'वित्युपपादनम्

२६४ 'वेदा यो वीनां पदं' अत्र व्याख्यावैशिष्ट्यम्

२६५ 'वेद मासो धृतव्रतः' इत्यत्र सारांशकथनम्

२६६ 'परि स्पशो निषेदिरे' अत्र हिरण्मयपात्राच्छादितं सत्यं ज्ञापयितुं निषण्णाः 'स्पशाः' प्रणिधय इव ज्ञापकाः रश्मयो दिव्या विभूतयो वेति विवरणम्

२६७-८ 'उत यो मानुषेष्वा' अस्या ऋचस्तात्पर्यविचारः

२७० 'उदुत्तमं मुमुग्धि' अत्र 'जीवसे' जीवनाय पाशत्रयविमोचनप्रार्थना

२७२ 'आ नो बर्हीः' अत्र अन्तर्यागे मनुष्या इव देवाः प्रत्यक्षीभूय व्यवहारयोग्या इति तात्पर्यनिर्देशः

पुटसङ्ख्या

२७३ अग्नियुक्तानां देवानामनुग्रहादेव अग्निं स्तोतुं ध्यातुं ज्ञातुं वा प्रभवन्ति मनुष्या इति 'स्वग्नयो हि वार्यं' इति ऋचस्तात्पर्ये सूचनम्

२७५ 'वारवन्तम्' इत्यत्र विशेषणस्य प्रयोजनम्

२७६-७ 'सिन्धोरूर्मा उपाक आ' अस्य दृष्टान्तस्य तात्पर्योपपादनम्

२७८ 'जराबोध' अत्र मन्त्रार्थे विचारः

२७९ 'धूमकेतुः' निर्वचनम्, बलवेगभावस्पन्दनेनाग्निर्ज्ञायत इति भावाविष्कारः

२८० नमो महद्भ्य इति मन्त्रे नमस्करण-यजन-शंसनानां आराध्यभेदेनोपपादनम्

२८०-१ यत्र ग्रावेति सूक्ते यज्ञसाधनाभिधायकाः उलूखलाधिषवणीयादयः प्रयुक्ताः, अत्र परीक्षा सूक्ष्मशः, प्रथमर्चस्तात्पर्ये बाह्यपक्षानुसारेणैव उपपादनम्

२८१ 'द्वाविव जघना' इत्यत्र विवक्षाप्रदर्शनम्

२८२ उपच्यव-अपच्यवशब्दार्थः

'मन्थां' इत्यत्र सामान्यार्थः

२८५-८ सूक्तर्चां प्रत्येकं गूढार्थानुसारेण तात्पर्यकथनम्, टिप्पण्यां इदमञ्जःसवसूक्तं ऐतरेयब्राह्मणे समुपन्यस्तमिति तत्रस्थशुनःशेपकथाप्रसक्तिः, परोक्षवचनानां सूक्तस्थानां विशदीकरणम्, तैत्तिरीयवाजसनेयादिश्रुतिवाक्योदाहरणेन सोमाभिषवादीनां रहस्योद्घाटनम्

२९०-२ 'यच्चिद्धि सोमपा' इति 'मिथूदृशा' 'गर्दभ'-'कृकदाश्वा'दि-परोक्षवचनानां अर्थाविष्कारः

२९३ इन्द्रः अनायासेन सोमं स्वीकर्तुं गच्छतीत्यत्र दृष्टान्तस्वारस्यम् तथा 'समुद्रो न व्यचो दधे' इत्यस्य भावविवरणम्

२९४ इन्द्रो यजमाने रमते अत्र 'कपोत इव गर्भधिम्' इति दृष्टान्तस्य विवरणम्

२९५ 'ऊर्ध्वस्तिष्ठ' अत्र देवैः सह ऋषीणामन्तरङ्गव्यवहारो लक्षितः

२९७-८ 'रेवतीः' इत्यत्र व्याख्यातॄणां विप्रतिपत्तिः, तत्र निर्णयः

२९८ 'ऋणोरक्षन्न चक्र्योः' अस्य विवरणे विचारः

**पुटसङ्ख्या**

२९९ 'ऋणोरक्षन्न शचीभिः' दृष्टान्तेन विवक्षा प्रदर्शिता

३०० 'शश्वदिन्द्र' इति ऋचस्तात्पर्यं ज्योतिर्मयेन रथेन दिव्यं धाम गच्छन्ति देवकामा ऋषय इति प्रतिपादनम्

३०१ 'न्यघ्न्यस्य मूर्धनि' अत्र विशिष्टं तात्पर्योपपादनम्

३०२ 'कस्त उषः कध प्रिये' अत्र साधारण उषःकालो नाभिप्रेत इत्युपपादनम्, अन्यथा गृहीतश्चेत् असामञ्जस्यप्रदर्शनम्, 'वयं हि ते अमन्महि' अत्र तात्पर्योपपत्तिरवधेया

३०३-४ 'विद्मनापसः भ्राजदृष्टयः' मरुतः अग्नेरजायन्तेति कथनम्, अङ्गिरस्तमः द्विमाता इत्यादीनां निर्वचनं तात्पर्यं च

३०६ पुरूरवःशब्दार्थः

३०७ बहुधा जीवन्नग्निरेकायुरिति प्रतिपादनम्

३०८-९ 'उभयाय जन्मने' अत्र विवरणम्

३१० 'त्वं नो अग्ने' अत्र 'पित्रोरुपस्थे' अस्य तात्पर्योपपादनम्
'त्वमग्ने प्रमतिः' अत्र 'वयमुपासकास्तव बन्धवः' इति अग्निं प्रति ऋषेरुक्तिरवधेया

३११ आयु-नहुष-मनुष्यशब्दानां वैशिष्ट्यप्रतिपादनम्
इळायाः प्रसक्तिः, सा पश्यन्ती वागिति प्रतिपादनम्

३१२ 'त्वं नो अग्ने' अत्र 'गवां तोकस्य तनये अनिमेषं रक्षमाणः' इत्यस्य व्याख्यायां विचारः
चतुरक्षः अग्निः कथमिति विचारः

३१४ 'जीवयाजम्' इत्यादिप्रयोगस्य स्वरसताकथनम्

३१५ 'मर्त्यानां ऋषिकृत्' अत्र वैशिष्ट्यमवधेयम्

३१६ 'मनुष्वत्' 'अङ्गिरस्वत्' 'ययातिवत्' अत्र विवरणम्, नाम्नां निर्वचनानि
'एतेनाग्ने' अस्यास्तात्पर्यं 'स्तूयमाना देवताः स्तोतरि वर्धन्ते' इति प्रतिपादनम्

३१७ 'इन्द्रस्य नु वीर्याणि प्रवोचं' इति सूक्तारम्भः, अत्र ऋचां पदार्थदानं स्थूलरीत्या कृतम्, अन्ते गूढार्थविवरणं प्रतिज्ञातम्

३१८ 'वाश्रा इव धेनवः' दृष्टान्तस्य प्रयोजनम्
'त्रिकद्रुकेषु' ज्योतिः-गौरायुरिति गूढार्थस्य द्वारं प्रदर्शितम्

३२४ वृत्रहत्या गोलाभः सोमप्राप्तिः सप्तसिन्धुविमोचनमित्येतेषां सम्बन्धमधिकृत्य उत्तरत्र पश्याम इत्युक्तम्

३२५ 'अहेर्यातारं' अस्यामृचि व्याख्यायां सन्देहोत्थापनं समाधानं च

३२६ 'इन्द्रो यातः' अत्र 'शमस्य' 'शृङ्गिणः' इत्यादेः वैशिष्ट्यम्
अथ हिरण्यस्तूपस्य सूक्तद्वयं रहस्यार्थानुसारेण तात्पर्यवत् क्रियते, तत्र प्रथमं अङ्गिरोविचारः

३२७ सर्वथा आङ्गिरसं तत्त्वं अग्निवैभवसंबन्धीत्युपपादनम्, अङ्गिरसो देवाः मनुष्या ऋषयश्चेत्यत्र विचारः

३२८-९ अङ्गिरसां सप्त-सङ्ख्यया कीर्तनेऽपि बृहस्पतिरूपेणैषामेकरूपत्वप्रतिपादनम्, अथ वृत्रकथा, आङ्गिरसकथाया गवां विमोचनं मुख्यो विषयः, वृत्रकथायास्तु अपां विमोचनमित्यादीनां रहस्यविवरणम्

३३३ दिव्यज्ञानरश्मिद्योतकगोलिप्सून् सखीन् प्रति ऋषेरुक्तिः पर्वतगुहाशब्दबोधिते जडगते तमसि निक्षिप्तानां गवां लाभाय परं ज्ञानमावश्यकमिति

३३४ तेजोबलाद्यपहारिणां असुराणां प्रसक्तिः

३३५ 'वधीर्हि दस्युं' अत्र वृत्रो धनीत्युक्तेः तात्पर्यविचारः

३३७ नवग्वाः दशग्वाः इति अङ्गिरसां भेदस्य विवरणम्

३३८ 'परि यदिन्द्र' अत्र सायणीयतात्पर्यस्यानुपपत्तिर्दर्शिता

३३९-४० 'न ये दिवः' अत्र व्याख्या विशिष्टा, 'गाव एव आपः' इति सायणोक्तं विचित्रम्

३४० 'नाव्यानां' अस्य अपां विशेषणस्य प्रयोजनम्

३४१ इलीबिश-शुष्णौ वृत्रान्नान्याविति सायणीयम्, तत्र नाङ्गीकारः

३४२ कुत्स-दशद्युः-श्वैत्रेयाणां प्रसक्तिः, तन्नाम्नां निर्वचनम्

३४३ 'आवः शमं' अस्य व्याख्या विशेषतो मुख्या, 'तुग्रचा' शब्दार्थविचारः, सायणोक्तेर्निरीक्षणम्

३४४-५ हिरण्यस्तूपस्य ऐन्द्रसूक्तद्वयस्य रहस्यार्थविचारः, पर्वतः, आपः, समुद्रः, गावः, उषः, सूर्यः, वृत्रवलपणयः—एवमादीनां बहिःसङ्केतरूपाणां अन्तर्गूढार्थानां विवरणम्

पुटसङ्ख्या

३४६-७ प्रत्यृचं इन्द्रसूक्तस्य तात्पर्यप्रतिपादनम्
३४८ 'नवेदसा'शब्दनिर्वचने कष्टं निर्दिष्टम्, 'नवेदाः ज्ञाता' इति कथनम्
३४९ 'हिम्येव वाससः' अत्र नव्यानामेकेषां आशयः; तत्र अयुक्तिप्रदर्शनम्
३५० 'त्रयः पवयः' ऋचो व्याख्यायां अविद्याच्छन्ना तमोव्याप्ता रात्रिः अधस्तनत्रैलोक्यावस्थानं लक्षयतीत्यादिविवरणम्
'त्रिरद्य यज्ञ'मित्यत्र देहत्रयापेक्षयेति कथनम्
३५२ अश्विनोर्भार्या सूर्या तद्रथमारोहतीति प्रसिद्धेः स्मरणम्
'शंयुः' ऐतिहासिकः, रहस्यार्थे, तोकतनयादिशब्दानां च तात्पर्यम्, त्रिधातुशब्दार्थविचारः
३५३ 'त्रिर्नो अश्विना' अत्र प्रार्थनासारांशकथनम्
३५३-४ 'त्रिरश्विना सिन्धुभिः' अत्र सप्ततत्त्वात्मकचित्तेजोवाहिनीभिरित्यारभ्य तद्रक्ष्यतामित्यन्तं सूक्ष्मं तत्त्वं प्रतिपादितम्
३५५-६ 'आ नासत्या' अत्र एकादश देवाः प्रस्तुताः के त इति विचारे मतभेदकथनम्
३५७ 'आ कृष्णेन रजसा' अत्र मर्त्यस्य कार्यं यजनं अमृतस्य देवजातस्य कार्यं तु मर्त्योपकारकत्वमित्याद्युपपादनम्
३५९ 'वि जनान्' अस्या ऋचस्तात्पर्ये ये न लब्धप्रकाशाः तेषां असूर्या नाम ते लोका इति प्रतिपादनम्
'तिस्रो द्यावः' ऋचि व्याख्याभेदः
३६० 'यमस्य भुवने' इत्यत्र विशेषतो विचारोऽवधातव्यः
३६१ 'वि सुपर्णः' अत्र दिव्यं रहस्यं दुर्ज्ञेयं मनुष्यस्येति तात्पर्यकथनम्
३६१-२ 'अष्टौ व्यख्यत्' अस्यां सायणव्याख्या अयुक्ता नाङ्गीकृता, तात्पर्यं उपपादितम्
३६३ यातुधानशब्दनिर्वचनम्
३६७ 'त्वं घेमित्था' स्तोतुर्वाग्भिः हृदयस्थोऽग्निर्ज्वलित इति प्रतिपादनम्, अन्तर्यागे 'सप्त होत्राः' इत्यादेः रहस्यस्मरणम्
३६७-८ 'घ्नन्तो वृत्रं' अत्र अग्निरश्व इति कथनस्योपपत्तिः, अत्र अवधेया व्याख्या
३७०-१ 'ऊर्ध्व ऊ षु णः' अत्र व्याख्याने वैशिष्ट्यमवधेयम्, यूपस्थोऽग्निरिति याज्ञिकाः, यजमानशरीरस्थोऽग्निरिति प्रतिपादितम्
३७३-४ 'अग्निना तुर्वशं' तुर्वशादिनाम्नां निर्वचनम्, नववास्त्व-बृहद्रथ-तुर्वीतयो व्याख्याताः
३७६ मरुद्गणतत्त्वग्रहणेन पृषत्यादीनां लाक्षणिकत्वं सुगममित्यारभ्य 'अञ्जिभिर्वाशीभिः साकं मरुतः ऋषेरन्तर्यागप्रवृत्तस्यार्थे प्रादुर्भवन्ती'त्युपपादितम्
३७७ 'इहेव शृण्वे' अत्र तात्पर्योपपत्तिः
३७८ 'प्र शंसा' अत्र ऋचस्तात्पर्ये, अन्तर्यजने मरुद्गणस्य प्रादुर्भावात्परं तस्य सोमरसेन वृद्धिर्भवतीत्युपपादनम्
३८० 'स्थिरं हि जानं' अत्र व्याख्यायां सङ्केतरहस्यानुसारेण मरुतः प्राणात्मकाः धीवृत्तिरूपतां प्राप्ता इत्यादिविवरणम्
३८२ 'यद्ध यान्ति' अत्र मरुतां शब्दः न सर्वेषां श्रवणगोचरः, अन्तर्याजिनः कस्यचिदेवेत्युपपादनम्
३८३-४ 'क्व नूनं कद्वो' अत्र तात्पर्योपपत्तिः
३८४ मरुतां मानवे जन्मलाभः स्मारितः
३८५ 'मा वो मृगो न यवसे' तात्पर्यं अवधेयम्, सायणोऽन्यथा व्याचष्टे, 'मो षु णः' पूर्वयर्चा सङ्गतिर्ज्ञापिता, निर्ऋतिः पापदेवता मायात्मिका वेत्यादि व्याख्यायां प्रतिपादितम्
३८६ 'वाश्रेव विद्युत्' अत्र अन्तर्यागे चलति, दशाविशेषेषु मध्यमस्थाने ज्योतिर्दर्शनमित्यादि प्रोक्तम्
३८७ 'दिवा चित्तमः' अत्र अन्तर्यागे सत्यपि नित्ये ज्योतिर्विलासे रसवर्षातिरेकात् क्वचित् विश्वं तमोवृतमिव भवतीत्यादि रहस्यमुक्तम्
'अध स्वनात्' अत्र सर्वं सद्म सर्वयजमानशरीरमित्यादि प्रोक्तम्
३८८ 'मरुतो वीळुपाणिभिः' अत्र कूलस्थानीयं शरीरं, नद्यः शक्तिधारावाहिन्यः प्राणस्थाना इति रहस्यं विवृतम्
३८८-९ 'अच्छा वदा' अत्र 'अग्निः होतृवाग्विशिष्टोऽपि सर्वस्याश्च वाचो देवता' इत्यादिकं, स ब्रह्मणस्पतिश्च भवतीति चोक्तम्
३८९ 'मिमीहि' अत्र वाचा स्तोत्रोच्चारणस्य वैभवं

**पुटसङ्ख्या**

देवताप्रीणनं भवतीत्युक्तम्

३९० 'प्र यदित्था' अत्र मरुतः पुण्यपुरुषं आविश्यानुगृह्णन्तीति तात्पर्योपपादनम्, 'मानम्' इत्यत्र विविधमाचक्षते चिन्तका इत्यादिपरीक्षणम्

३९१ 'स्थिरा वः सन्तु' मारुतबलेनैव जयः संपाद्यत इत्युपपादनम्

'परा हि यत्' अत्र अन्नमयाद्यूर्ध्वकक्ष्याः मरुद्भिः प्रवेश्या इति प्रतिपादनम्

३९३ 'उपो रथेषु' अत्र पृषतीनां त्रित्वं प्रति जिज्ञासा निर्णयश्चोक्तौ

३९४ 'युष्मेषितः' अत्र अन्यव्याख्याया वैरस्यप्रदर्शनं अस्मत्तात्पर्योपपत्तिश्च

३९६-७ ब्रह्मणस्पतिस्वरूपविचारः, ब्रह्मणस्पतिः बृहस्पतिः ब्रह्मा इति त्रीणि नामानि एकां देवतां निर्दिशन्तीत्युपक्रम्य तत्र त्रयस्य वैशिष्ट्यं विचारितम्, त्रयाणां पृथक् अवस्थाभेदेन गुणभेदप्रतिपादनम्

३९८ 'प्राशूः'शब्दार्थविचारे सायणमहीधरोव्वटानामुल्लेखनम्, अस्मदीयार्थोपपादनम्

३९९ 'यो वाघते' अत्र यजमाने ब्रह्मणस्पतिरुत्थितः सन् तस्मै मन्त्रवाचमुच्चारयतीत्याद्युपपादनम्

४०० 'प्र नूनम्' ब्रह्मणस्पतिना मन्त्रे उदीरिते देवाः पुरुषे स्वीयाधारस्थानानि कृत्वा तमनुग्रहीतुं प्रसन्ना भवन्तीति भाव आविष्कृतः, 'तमिद् वोचेम' अत्र 'इमां वाचं प्रतिहर्यथ' व्याख्याऽवधेया

४०१ 'को देवयन्तं' व्याख्यायां सूक्ष्मोऽर्थः सायणीयाद्भिद्यते

४०४ 'स रत्नं' अत्र आदित्यानुग्रहपात्रभूतो यजमानः स्वप्रभावाद्विस्तृतो भूत्वा स्वं तेजोऽन्यत्र सङ्क्रमय्य स्वसदृशं सृजतीति प्रतिपादितम्

४०५ 'कथा राधाम' किं प्सरो रूपं उत भक्षणमिहेति विचारः

४०५-७ 'मा वो घ्नन्तं' तात्पर्यमवधेयम्, 'चतुरश्चित्' इत्यनया अर्थसङ्गतिः, मित्रादिदेवताचतुष्टयं व्यूहात्मकं वेदे प्रसिद्धमित्युपपादनम्

४०७-८ पूषा विचार्यते

४०८ पूषा पतिः पृथिव्याः, पूर्वज उषसः, भ्रातेन्द्रस्य, यजमानस्य पथस्पतिः, यजमानगवेषणपरायणः,

**पुटसङ्ख्या**

यजनोद्यमप्रचोदनपरश्चेत्यादिपूषगुणोपपादनम्

४०९ 'यो नः पूषन्' अत्र यागयात्रायां मार्गे बाधकं पापवर्गं अपसारयति पूषा

४१३ 'कद्रुद्राय' अत्र 'हृदयस्यार्थे सुखकरं, हृदयनिष्ठाय हृदयभूताय रुद्रायेति वा' पङ्क्तिरवधेया

४१४ 'यथा नो मित्रो वरुणः' अत्र मित्रादीनामस्मद्विषयकं ज्ञानं अनुग्रहार्थकं ज्ञेयमिति विवरणम्

४१५ 'गाथपतिं' जलाषभेषजं-रुद्रसंबन्धि औषधं अलौकिकं सुखरूपम्

४१७-२० रुद्रस्य तत्त्वमधिकृत्य सविस्तरविचारः, अन्ते मृत्युञ्जयरुद्रमन्त्रार्थचिन्तनम्, तत्रोपनिषद्वाक्यस्य मूलं प्रदर्शितम्

४२३ 'सुशंसो बोधि' प्रस्कण्वस्यायुर्देवतार्थमेव विहितमिति प्रतिपादितम्

४२५ 'अग्ने पूर्वा' महत ऋतस्य ज्योतिषः प्रादुर्भावात् पूर्वं बह्वच उषसो भवन्तीति स्मारितम्

४२८ 'त्वमग्ने' न केवलं वस्वादीन् देवान् यज, अभ्यञ्जन्तं मानुषं जनमपीति अग्नेः प्रार्थनायां तादृशस्य मनुजन्मनः देवतुल्यत्वं देवार्थजीवित्वं च विवक्षिते इति प्रदर्शितम्

४३१ 'आ त्वा विप्राः' अन्तर्यजनरहस्यविदो विप्राः सिद्धाः मर्त्यानामुपकारिण इति दर्शितम्

४३२ तिरोअह्न्य-शब्दार्थः, अन्तर्यजने तात्पर्योपपादनम्

४३३ 'वच्यन्ते वां' स्तुत्यै द्युलोके यदा अश्विनोः रथो गच्छति तदा अश्विनोरुत्कर्षाः स्पष्टाः लक्ष्यन्त इत्याद्युपपादनम्

४३४ 'हविषा जारो' अत्र 'कुटस्य चर्षणिः' गृहस्य द्रष्टा पालकोऽग्निरिति प्रतिपादनम्

४३५ 'या नः पीपरत्' 'तमस्तिरः' इत्यत्र सायणीयार्थस्यानादरः कार्य इति युक्तिः प्रदर्शिता

४३६-७ 'दिवस्कण्वासः' अत्र 'हे अश्विनौ, युवां किं वसुस्थाने समुद्रे, उत सोमजन्मस्थाने दिवि स्वीयं रूपं शरीरं आविष्कृत्य प्रतिष्ठापयथः' इति प्रश्न ऋषिणा कृतः, अस्य विवक्षा तात्पर्यं प्रदर्शिता, 'कण्वासः' इति अश्विनोरेव संबोधनमिति सूचनेन सायणीयक्लेशस्य क्षतिरित्युपपादितम्

पुटसङ्ख्या

४३९ 'युवोरुषा' अत्र कथं ऋतवननं रात्रिभिर्भवतीति प्रश्नस्य समाधानम्

४४१ 'त्रिषधस्थे'शब्दार्थविचारः

४४२ 'सुदासे' अत्र समुद्रात् सत्त्वसमृद्धादखण्डमूलस्थानादित्याद्यवधेयम्

४४३ 'यन्नासत्या' अत्र 'अधि तुर्वशे' इत्यत्र विशिष्य विचारः, स वीरः पुरुषः यो देवभावकामः यज्वा अदेव्यान् अरीन् हिंसित्वा जयति, देवप्रियश्च भवतीत्यादि प्रतिपादितम्

४४६ 'अश्वावतीर्गोमतीः' अत्र राधसो लक्षणमधिकृत्योक्तम्, 'उवासोषा' 'समुद्रे न श्रवस्यवः' दृष्टान्तस्योपपत्तिर्विचारिता

४४७-८ 'उषो ये ते' अत्र सूक्ष्मोऽर्थः, स्थूलश्च निर्दिष्टः, 'उत घा योषेव' अत्र लोकान्तरगतिरत्रस्थस्यैव देहिनः सिध्यतीति रहस्योक्तिः, बाह्योऽर्थश्च दत्तः

४४८ 'वि या सृजति' वयः ज्ञानांशव ऊर्ध्वं गच्छन्तीत्यादि प्रतिपादनम्

४४९ 'विश्वमस्या' सूनरी, ज्योतिः कृणोतीत्यादीनां विशिष्टं विवरणम्

४५१ 'विश्वान् देवान्' अश्ववत् गोमत् सुवीर्यं वाजमित्यादीनां विवरणम्

४५३ 'उषो यदद्य' अन्तर्यजने स्वर्लोकस्य बहिर्द्वारं अन्तर्द्वारमिति द्वारद्वयमुषसोद्घाटितं भवतीति प्रतिपादनम्

४५४ 'उषो भद्रेभिः' अन्तर्याजिनः यज्ञगृहभूतं शरीरं इत्यादिनिर्देशः

४५५ 'वयश्चित्ते' रहस्यपक्षे द्विपत्-चतुष्पच्छब्दार्थः प्रत्यपादि

४५६ 'उदु त्यं' अत्र 'सर्वेषां देवानामादिरन्तश्च सूर्यात्मना प्रतीकेनें'त्युपक्रम्य 'अत एव वैदिकयोगनिष्ठाबाह्या मुह्यन्ति साधारणसूर्योदयादिवर्णनमात्रपरा मन्त्रा इति' इति प्रतिपादनम्

४५८ 'तरणिर्विश्व' अत्रोपनिषद्वाक्यानां बीजं द्रष्टव्यमिति सूचनम्

४५९ 'येना पावक' अत्र वरुणस्य पावकेति संबोधनं न लक्षितं सायणीये, ततः उत्तरर्चा संबन्धोऽपि नावेक्षितः

पुटसङ्ख्या

४६० 'वि द्यामेषि' बह्वृचः अन्तःप्रकाशदशाः अन्तर्याजिन इति स्मारितम्

४६१ 'उद्वयं' अत्र प्रतिपादितः सूर्यो न लौकिक इति सायणव्याख्याबलेनैव निरूपितं भूमिकायां, नव्या अपि अलौकिकः सूर्योऽयमित्यनुगृह्णन्तीति विवरणम्, 'उद्यन्नद्य' बाह्यशरीरस्यापि काचन सिद्धिरावश्यकीति मन्त्रद्रष्टॄणां मतमित्यादि प्रदर्शितम्

४६२ 'शुकेषु मे हरिमाणं' व्याख्याऽवधेया, 'उदगादयं' 'भगवानेव मह्यं कर्तव्यं करोतु द्विषद्विषये' इत्युपपादनम्

४६३ 'अभि त्यं मेषं' अत्र मेषशब्दार्थो विचारितः

४६४ 'अभीमवन्वन्' अत्र ऋभवो मरुत इति सायणीयोक्तिर्न युक्तेति दर्शितम्

४६५ अत्रि-विमद-गोत्रादयो निरुक्ताः रहस्यार्थं प्रतिपादयन्ति

४६६ 'त्वं मायाभिः' व्याख्या विशिष्टा, पिप्रुः ऋजिश्वा च निरुक्तौ व्याख्यातौ

४६७ 'त्वं कुत्सं' अतिथिग्वो व्याख्यातः, कुत्सशुष्णादयः निरुक्ताः स्मारिताः

४६९ 'अनुव्रताय' अत्र वम्रः स्तोत्रोद्गारशीलः, तात्पर्यविचारे सायणीयं परीक्षितम्

४७१ 'शन्विष्ट' अत्र तात्पर्योपपादनं अवधेयम्

४७२ 'आ स्मा रथं' शर्यातिप्रसङ्गः

'अददा अर्भां' तात्पर्योपपादनाय बहवो विषया उपन्यस्ताः, 'वृचया'शब्दार्थविचारः, धर्मार्थं पत्नीति संप्रदायस्य मूलं प्रदर्शितम्

४७४ 'इन्द्रो अश्रायि' इन्द्रो भगवानेव यजमानाय विविधानि धनानि संपादयतीत्युपपादनम्, 'दुर्यो यूपो न' दृष्टान्तस्य विवरणम्

४७६ 'स पर्वतो न' इन्द्रः वृत्रवधात्परं तेजोबलादिषु शक्तिषु मध्ये स्वयं अचलतयाऽवस्थित इति विवरणम्

'स हि द्वरः' स्वयं रसभरितः अस्मानपि रसेन पूरयितुं प्रभुरिन्द्र इति प्रतिपादनम्

४७८ 'अभि स्ववृष्टिं' अपां पुत्रः आप्त्यः त्रितः त्रिवृत्कृतस्य जगतः जडीभूतांशे गुप्तां शक्तिं उद्धर्तुं

| पुटसङ्ख्या | |
|---|---|
| | तत्रावतीर्णं इत्यादि विवरणेन 'परिधीनिव त्रितः' इति दृष्टान्तो व्याख्यातः |
| ४८० | 'जघन्वान् उ' अत्र अन्वयोऽवधेयः, तथा सायणीयस्य च |
| ४८२ | 'यदिन्न्विन्द्र' 'पृथिवी दशभुजिः' इत्यादीनां विवक्षा तात्पर्यं प्रतिपादिता |
| ४८३ | 'त्वं भुवः प्रतिमानं' 'ऋष्ववीरस्य' अस्य विवरणभेदोऽवधेयः |
| ४८५ | 'न्यू षु वाचं' अत्र ससतामिवेति दृष्टान्तस्योपपादनम् |
| ४८७ | 'एभिर्द्युभिः' यजमानकृतदानं इन्द्रस्य प्रतिदानमधिकृत्योक्तम् |
| ४८८ | 'समिन्द्र राया' 'वीरशुष्मया गोअग्रया अश्वावत्या' तात्पर्योपपादनम्, विचित्रं सायणीयं चावेक्षितम् |
| ४८९ | 'युधा युधं' नमुचिशब्दार्थः |
| ४९० | 'त्वमेतान् जनराज्ञः' वेदे वृत्तान्तान्वाख्यानस्य रहस्यार्थो लक्षणीय इत्युक्त्वा सुश्रवःशब्दार्थं प्रतिपाद्य ऋचस्तात्पर्योपपादनम् |
| ४९२ | 'य उदृचीन्द्र' अन्तर्यागावसाने तत्परमपि देवरक्षिताः देवसखाः कल्याणतमाश्च सन्तो वयं तव भजकाः स्यामेति ऋषेरुक्तिः प्रतिपादिता |
| ४९२-३ | 'मा नो अस्मिन्' एवञ्जातीयको वेदमन्त्रः 'भीषास्माद्वातः पवते' इत्याद्युपनिषद्वाक्यानां मूलमिति प्रतिपादनम् |
| ४९५ | 'नि यत् वृणक्षि' प्राणवायोरूर्ध्वमूलस्थाने रसावर्जनेन दिव्यभोगक्रियादिशक्तिसंपन्नो भवति प्राणवान् यजमानलोकः, तथा शुष्णस्यावर्जनात् स शुष्णत्वमेवोज्झतीत्यादिविवरणम् |
| ४९६ | 'स घा राजा' इन्द्रशासनानुष्ठानफलं इन्द्रस्तुतिफलं चोक्ते, उपराशब्दार्थे विशेषोऽवधेयः |
| ४९७ | 'असमं क्षत्रं' 'नेमे ये ते' इत्यत्र सायणोक्तिः, अस्मदर्थोपपत्तिश्च |
| ४९८ | 'तुभ्येदेते' अद्रिः चमूषदः इत्यादेर्विवरणम् |
| | 'अपामतिष्ठत्' अपां सङ्केतरूपत्वानभ्युपगमे तात्पर्यानुपपत्तिरित्यादि प्रतिपादितम् |
| ५०० | 'सो अर्णवः' अपां परिग्रहीता अपां राशिरिवेन्द्रस्ताः शक्तीर्वर्षति यजमानाय सोमकाम इत्युपपादनम्, 'ओजसा पनस्यते' बलेन महत्कर्म कर्तुमिच्छतीति विवृतम्, पनधातोरर्थे विचारः |
| ५०१-२ | 'स इद्वने' नैष्ठिकानामन्तर्यागपराणां पूर्वेषां देवताभिः सह रहसि व्यवहार इत्याद्युपपादनम्, यदा इन्द्र एव वाचं स्तुतिलक्षणां प्रेरयति तदा स प्रीणयिता भवतीत्युपपादने सायणीयार्थस्य निरीक्षणम् |
| ५०२ | 'स इन्महानि' 'श्रदस्मै धत्त स जनास इन्द्र' इति मन्त्रान्तरोदाहरणपूर्वकं श्रद्धारहस्योपपादनम् |
| ५०३ | 'स हि श्रवस्युः' अवृकाणीत्यत्र विशिष्टोऽर्थः |
| ५०४ | 'अप्रक्षितं' 'आवृतासो अवतासो न' इति दृष्टान्तस्य प्रयोजनम् |
| ५०५ | 'एष प्र पूर्वीः' इन्द्रः स्वस्थानादवतीर्य यजमानस्वभूतान्नमयादिशरीरेषु चमसपदवेदनीयेषु अवस्थितः 'इषः' प्रेरणाशक्तीरूर्ध्वं नयतीत्यादिविवरणम् |
| | 'चम्रिषः' अस्य व्युत्पादने 'सोमलक्षणा इषः अन्नानी'ति बाह्यार्थोपपत्तिर्दर्शिता |
| ५०६ | 'तं गूर्तयः' इन्द्रपदप्राप्तिः पर्वताधिरोहेणोपमितेत्यादिविवरणम् |
| ५०७ | 'देवी यदि' 'अर्हरिष्वणिः' अस्य निर्वचनं अर्थश्च |
| ५०८ | 'त्वं दिवो धरुणं' 'पृथिव्याः सदनेषु' तात्पर्यकथनम् |
| ५०९ | 'प्र मंहिष्ठाय' 'प्रवणे अपामिव' इति दृष्टान्तेन प्रतिपादितं तत्त्वमुक्तम् |
| ५१० | 'अस्मै भीमाय' अत्र 'हरितो न अयसे' दृष्टान्तेन विवक्षितं विचारितम् |
| ५११-२ | 'भूरि त इन्द्र' इन्द्रस्य माहात्म्यं द्युलोकस्य प्रतिमानं इत्युपपादितम् |
| ५१३ | 'नू चित्सहोजाः' पूर्वं ब्रह्माण्डे वर्तमानमपि प्राणायतनं अपां निधानस्थानं यजमानाय पिण्डाण्डे पुनरुत्पादयति तदग्निरित्यादिरहस्यविवरणम् |
| ५१४ | 'आ स्वमद्म' अग्निः शुष्केषु काष्ठेषु आरोहतीत्यत्र रहस्यमुक्तम् |
| ५१५ | 'वि वातजूतः' अग्नेर्गमनमार्गः कृष्णः कथमिति विचारितम् |
| ५१६ | 'तपुर्जम्भः' स्वस्याल्पबलत्वं अग्नेः प्रबलत्वं च वीक्ष्य कम्पते उभयविधापि सृष्टिः |

पुटसङ्ख्या

'दधृष्वा' अङगिरसामिव भृगूणामपि देवत्वं मानुषत्वं च निर्दिष्टे

५१७ 'होतारं सप्त' सप्त होतारः सप्ततत्त्वाभिमानिनः सप्तलोकाधिष्ठाना देवा इत्यादिप्रतिपादनम्

५२० 'बृहती इव सूनवे' वैश्वानरस्याग्नेर्द्यावापृथिव्योः प्रादुर्भावमधिकृत्य रहस्यं विवृतम्

५२१ 'दिवश्चित्ते' असुरैराक्रान्ते लोके, तान् जित्वा देवेभ्यो ददात्यग्निरित्यत्रोपपत्तिः, सायणीयतात्पर्यस्य परीक्षा

५२१-२ 'वैश्वानरो महिम्ना' अत्र 'भरद्वाजेषु पौष्टिकसमृद्धियुक्तेषु' इत्याद्यवधेयम्, तथा शतवनिपुरुणीथशब्दार्थविवरणम्

५२२ 'वह्निं यशसं' अत्र मातरिश्वा अग्निं भृगवे प्रादादित्युक्तेर्गूढमर्थं प्रतिपाद्य सायणव्याख्या निरीक्षिता

५२३ 'अस्य शासुः' त्रैलोक्यादुपरि अग्नेः स्वगृहमित्यादि प्रदर्शितम्

५२३-४ 'तं नव्यसी' अत्र हृदयादन्तःकरणमूलस्थानात् अन्तरात्मनिलयभूतात् जायमानोऽग्निः प्रतिपादितः

५२४ 'उशिक् पावकः' अत्र 'दमूनाः गृहसुहृत्' इत्यादि उपपादितम्, यास्कानुसारेण दानमनस्क इति सायणः

'तं त्वा वयं' वाजम्भरं मर्जयन्त इत्यत्र दृष्टान्तोदाहरणेन अग्नेर्वहनप्रदेशं यजनस्थानं शोधयाम इत्यादि

५२५ 'अस्मा इदु प्र तवसे' ऋषयः तेषां पूर्वैर्ऋषिभिः प्रयुक्तान् मन्त्रानपि इन्द्राय ब्रुवत इत्यादि

५२६ 'अस्मा इदु प्रयः' 'आङ्गूषं' स्तोत्रात्मकं आघोषं हृदयेन मनसा मनीषया संस्कुर्वन्ति ऋषय इत्यादि

५२७ 'अस्मा इदु स्तोमं' तत्सिनाय इत्यत्र पातञ्जलमहाभाष्यनिर्णीतः सिनशब्दार्थ उक्तः

'अस्मा इदु सप्तिमिव' यथा रथयुक्तोऽश्वः अभीष्टस्थानं प्राप्नोति प्रापयति च तथा वाग्युक्तो मन्त्रो दिव्यं श्रवणं सम्पादयतीत्यादि

पुटसङ्ख्या

५२७-८ 'अस्येदु मातुः' अत्र 'त्रीणि वाक्यखण्डानी'त्यारभ्य सायणीयार्थपरीक्षापूर्वकं 'यजमाने चिन्मयज्योतिर्बलादिवृष्टिक्षेत्रभूते अभीष्टं सर्वं दिव्यममृतमादधाती'त्यन्तं तात्पर्योपपादनं निरीक्षणीयम्

५३१ 'अस्येदेव' यजमानस्य चेतसा स्वचेतः संयोज्य एकीकृत्य दिव्यश्रवणावेशं तस्मिन् दधाति भगवानिन्द्र इत्युपपादनम्

५३२ 'अस्येदु त्वेषसा' तुर्वीतये गाधं धिष्ण्यं अकार्षीदित्यस्य तात्पर्यम्

५३३ 'अस्येदु भिया' स्तुतिधारणसम्पत्तेर्निदर्शनभूतो नोधाः

५३४ 'अस्मा इदु त्यत्' एतशः सूर्येण सह स्पर्धत इत्यस्य विचारः तात्पर्योपपत्तिश्च

५३६ 'इन्द्रस्याङ्गिरसां' अत्र अङ्गिरः-सरमा-बृहस्पतयः प्रसक्ताः, तत्र सरमावृत्तान्तस्य रहस्यम्

५३७ सहजावबोधदृष्टेः सरमायाः सन्ततिः जागरितस्थाने 'धासिं' धारकं प्रतिष्ठाभूतं पदं अलभतेत्यादितत्त्वप्रतिपादनम्

५३७-८ 'स सुष्टुभा' अत्र अद्रि-फलिग-वलानां प्रसक्तिर्विचारिता

५३९ 'तमु प्रत्यक्षतमं' अत्र चतस्रो नद्यः प्रस्तुताः, तत्र विचारः सायणीयार्थस्योल्लेखनम्

'द्विता वि वव्रे' अत्र अयास्यशब्दार्थं औपनिषदबलादाचख्यौ सायणः, तस्यैव अन्यथा पक्षान्तरनिर्वचनं साधीय इत्यभ्युपगमस्य तात्पर्यं प्रतिपादितम्

५४० इन्द्रप्रसादादेव लभ्य इन्द्रः इति रहस्योपपादनं, ईदृश्य ऋचः बीजं भवति 'नायमात्मा प्रवचनेन लभ्य' इत्याद्यौपनिषदवाक्यानामिति विवरणम्, ऊर्ध्वाधरचित्कक्ष्ययोः द्यावापृथिव्योरभिव्यक्तिर्यजमाने भवतीति रहस्यविवृतिः

५४१ 'सनाद्दिवं' अन्तर्यागाध्वनि सर्वदा चित्प्रकाशस्थितिरेकरूपा न भवति, 'अहोरात्रे विरूपे' इत्यादिरहस्यविवरणम्

'सनेमि सख्यं' अस्यामृचि परोक्षवचनेनावेदितं किमपि रहस्यमधिकृत्य विचारितम्

पुटसङ्ख्या

५४२ 'सनात्सनीळाः' चिरकालादारभ्य अपामिव स्वसॄणां सनाभित्वम्, ताः स्वसारः यजमानायेन्द्रेण कृतानि रक्षन्तीत्यादि

५४४ 'त्वं महानिन्द्र' इन्द्रः प्रादुर्भावमात्रेण यजमाने ऊर्ध्वाधरचित्कक्ष्ये सुप्रतिष्ठे विधत्ते इत्यादि

५४८ 'त्वं ह त्यदिन्द्र' एकैकस्मिन् लोके सप्त उपकक्ष्या भवन्ति, यद्यपि त्रैलोक्याक्रमणपटवो वृत्रादयः तथापि तेषां वृत्तिवैशिष्टयं मध्यमस्थाने इत्यादिविवरणम्

५४९ 'त्वं त्यां न इन्द्र' एषणाबलेनास्माकं जीवमात्मानं इन्द्रो धत्त इति दृष्टान्तेनोपपादनम्

५५० 'वृष्णे शर्धाय' वाग्रूपाविष्कारे स्तोतुर्धियः पूर्णतां यान्ति इति प्रतिपादनम्

५५०-१ 'ते जज्ञिरे' मरुतो रुद्रसूनवः 'ऋष्वासः' 'असुराः' इत्यादीनां वैशिष्टयप्रतिपादनम्

५५१-२ 'चित्रैरञ्जिभिः' अत्र मरुतां रहस्यमधिकृत्य विचारः

५५३ 'पिबन्त्यपो मरुतः' विदथः ज्ञानागमो ज्ञानगम्यस्थानं यजनमित्याद्युपन्यासः, 'घृतवत् दीप्तिमत्' 'पयो मधुमत्' इत्यादि सायणीयव्याख्योदाहरणम्

५५४ 'सिंहा इव' कथं मरुतो रात्रीरुल्लासयन्तीति विचारः

५५६ 'विश्ववेदसः' 'अत्र विरप्शिनः' इत्यादिशब्दार्थविचारः सायणीयोक्तिश्च

५५९ 'नू ष्ठिरं मरुतः' किमपि दिव्यं मारुतं धनमिति विशेषणैरुपपादितम्

५५९-६० 'पश्वा न तायुं' ऋचोऽस्या विवरणे दृष्टान्तोपपादनम्, अत्र केचन शब्दाः साङ्केतिका इत्यादिसूचनम्

५६१ 'ऋतस्य देवाः' सर्वेऽपि देवा अग्निमन्विष्य यदा प्राप्नुवन्ति तदा स प्रवृद्धो भुवमाक्रामन् दीप्यत इत्याद्यवधेयम्

५६५ 'सेनेव सृष्टा' अर्थाविष्कारे, भूतं भव्यं च सर्वं द्वन्द्वं अग्निः, स एवानभिव्यक्तभावानां व्यञ्जयिता 'जारः कनीनां', उत्पादयित्रीणां शक्तीनां पतिः 'पतिर्जनीनां' इत्याद्युपपादनम्

पुटसङ्ख्या

५६७ 'हस्ते दधानः' सर्वदेवबलभृतोऽग्नेर्बलं सर्वधारकमित्यादि विवृतम्, अत्र मन्त्रदृष्टिरहस्यं सूचितमवधेयम्, तथा अग्नेरस्मदन्तर्निगूढवासः प्रत्यपादि, 'अजो न क्षां' ब्रह्माण्डे पिण्डाण्डे च रोदस्योः पूर्वमेव वर्तमानयोरपि तल्लक्षित-चित्कक्ष्याद्वयस्य स्तम्भनं धारणं च रहोयागरते मनुष्ये साधयितव्ये, तत्कर्तव्यमग्नेरिति प्रतिपादनम्

५६८ 'य ईं चिकेत' भगवतोऽग्नेः अन्तर्याजिनश्च आत्यन्तिकसंबन्धसम्पादनसाधनं रहस्यमुपदिष्टम्

५६९ 'श्रीणन्नुपस्थात्' आत्मना सर्वदेवमहत्त्वान्यावृण्वन् ज्वलत्यग्निरित्यादि

५७० 'आदित्ते' नीरसप्राये जडे शरीरे रसवानग्निर्यदा प्रादुर्भवति तदा विश्वे 'देवत्वं नाम भजन्ते' इत्यादि

५७१ 'होता निषत्तः' अन्तर्याजिनामेकैकस्मिन्नपि आग्नेयं बीजमुप्तं भवतीत्यादि गहनं रहस्यं संक्षिप्योक्तम्

५७२ 'शुक्रः' सर्वदेवप्रतिनिधिर्भगवानग्निर्यजमाने जातः तस्य पुत्र उच्यते इत्यादि

५७३ 'पुत्रो न जातः' अग्नेः सर्वदेवात्मकत्वात् देवतासहवासिनि वृन्दे आहूते अग्निः स्वीयं सर्वदेवमयत्वं प्रकटयतीत्यादि

५७४ 'उषो न जारः' उपासकाय जनाय प्रदर्शितस्वरूपोऽग्निः स्वयं तस्य ज्ञाने प्रादुर्भवति, स्वर्गद्वारापावरणेन ज्योतिर्दर्शने गतिः संभवति—इत्यादि तात्पर्यमवधेयम्

५७५ 'वनेम पूर्वीः' मानुषोत्पत्तिरहस्यविज्ञोऽग्निरित्यादि

'गर्भो यो अपां' अत्र 'आपः वनं' इति सङ्केतशब्दौ क्रमशः शक्तीनां पुत्रः आनन्दानां पुत्र इति च प्रतिपादयतः, तथापि सर्वान्तर्यामी भगवानग्निः चराचरात्मकाज्जगतः यथाकालं यथाविधि यथास्वीयदैवरहस्यं प्रादुर्भवतीति प्रतिपादनम्

५७६ 'स हि क्षपावान्' अग्निर्देववृन्दप्रादुर्भावं तथा मर्त्यानां जन्मरहस्यं च जानातीति कथनम्

'वर्धान्यं' अत्र 'ऋतप्रवीतं' सत्यात्प्रादुर्भूयागतमिति तात्पर्यार्थोऽवधेयः

पुटसङ्ख्या

५७७ 'गोषु प्रशस्ति' यजमानस्यर्षेः ज्ञानप्रकाशवृत्तिषु सुखानुभूतिषु च अग्निप्रशंसा प्रतिष्ठिता भवतीत्यादि कथितम्, 'भरन्त विश्वे बलिं स्वर्णः' अस्य वाक्यस्य प्रतिध्वनिस्तैत्तिरीयश्रुतौ 'सर्वेऽस्मै देवा बलिमावहन्ति' इति प्रतिपादितम्

५७८ 'उप प्र जिन्वन्' अत्र 'उषसं न गावः' इति नेदमुपमामात्रमित्युपन्यस्य सङ्केतार्थविवरणम्

५७९ 'वीळु चित्' अस्मत्पितरः मन्त्रध्वनिना बहु अद्भुतं चक्रुरिति प्रतिपादनम्, अत्र सङ्केतशब्दाः स्पष्टाः कृताः

५७९-८० 'दधन्नृतं' शक्तयः क्रियापराः देवान् प्रति गच्छन्ति, तेन नव्यस्य दिव्यस्य जन्मन आनन्देन वर्धनं भवतीत्यादितात्पर्यविवरणम्

५८० 'मथीद्यदीं' अन्तर्धारितः पूरितो व्याप्तः प्राणः योगाग्निं मथित्वा प्रकटयतीत्यधुनातनयोगविद्यातत्त्वं चिरन्तनार्षरहस्यैकदेशभूतं बोध्यम्, 'भृगवाणः' इत्यादेर्वैशिष्ट्यमुक्तम्

५८१ 'महे यत्पित्रे' दुर्बोधमृचस्तात्पर्यं विस्पष्टं विचारितमवधेयम्

५८२ 'अग्निं विश्वा' देवेषु विषयऽस्माकं ज्ञानं सम्पादयेत्यादिकम्

५८३ 'मनो' न अग्निना नीयमानस्य यजमानस्य यजनं यात्रा वा उत्तमे सौरे पदे पर्यवस्यतीति सूर्यो वर्णितः

५८४ 'मा नो अग्ने' ऋषीणामाद्यानां अतिचिरन्तनमविच्छिन्नं किमपि रहस्यं अग्निसख्यम्, नेदं भौतिकाग्निसंबन्धीत्युपपादनम्

'नि काव्या' कविकर्माणि द्रष्टृप्रज्ञात्मकानि मन्त्ररूपस्तोत्राणि अस्मास्वन्तः प्रादुर्भावयत्यग्निरिति प्रतिपादनम्

५८६ 'तिस्रो यदग्ने' यज्ञियनामधारणं अग्निपरध्यानलक्षणम्, 'तिस्रः' इति त्रैलोक्यापेक्षयेत्याद्युक्तिः, 'आ रोदसी' नेमधिताशब्दार्थविचारः

५८७ 'संजानानाः' देवाः सर्वेऽपि प्रत्येकं सख्युरग्नेर्वृष्टौ रक्षिताः इत्यादि प्रतिपादितम्

५८८ 'स्वाध्यो दिव आ' सरमासाधित-गोसमूह-गूढदृढस्थानाधिगमेन हेतुना मानुषो जन्मी सुखमद्यानुभवतीत्यादिरहस्यप्रतिपादनम्

५८९ 'आ ये विश्वा' अमृतत्वाय मार्गं कुर्वद्भिर्देवैः सह अदितिः पृथिवीं भर्तुं आगतेत्यादि प्रत्यपादि

५९० 'अधि श्रियं' तेजः सौन्दर्यं च दिव्यमक्षिद्वयं अग्नौ निक्षिप्तम्, तं अश्वाः महत्यो भोगसमर्थाः क्रियाशक्तयः नीचैः क्षरन्त्यः सिन्धव इव जानन्त्य उपासते इत्यादिसारांशप्रतिपादनम्

५९१ 'देवो न यः' एकोऽपि भगवानग्निर्वीरगण इव लक्ष्यते

५९२ 'वि पृक्षो' असुरैरपहृतं दिव्यं धनम्, तज्जयाय देवेषु भागो धारयितव्यः

५९३ 'ऋतस्य हि' अत्र 'अद्रिः' 'ऋतस्य धेनवः' 'आपः' इत्यादयः सङ्केताः अवधेयाः

५९४ 'यान् राये' विश्वस्मिन् भुवने छायेव सक्तो भवत्यग्निः

५९५ 'उपप्रयन्तः' दूरादपि शृणोत्यग्निरस्मद्वाचम्, 'यः स्नीहितीषु' गयशब्दार्थो विचारितः

५९६ 'उत ब्रुवन्तु' अग्निरन्तर्मथितस्तपसा हृदयादुद्गतः प्रादुर्भूतः प्रत्यपादि

५९७-८ 'त्वोतो वाजी' अग्नये स्वीयं सर्वमर्पितवान् पुरुषोऽन्यादृशो लक्ष्यते 'पूर्वस्मादपरः', अत्र सायणीयं निरीक्षितम्

५९८ 'उत द्युमत्' उत्तमं ज्योतिरेव महद्धनम्, अन्यथा भवति सायणीये

५९९ 'कस्ते जामिः' अत्र चतुर्भिः प्रश्नैः अग्निबन्धुत्वं न सुलभमित्यादि प्रतिपादितम्, अन्यथा प्रश्नस्य न भवेत्प्रयोजनमिति विवृतम्

६००-१ 'यजा नो' अग्नेः सहजसिद्धमावासस्थानं 'सत्यं ऋतं बृहत्' उक्तम्

६०१ 'का त उपेतिः' अत्र विवक्षितमन्यत् सायणविवरणमन्यत्, ऋजु तात्पर्यं प्रतिपादितम्

६०३ 'कथा दाशेम' अग्निमुद्दिश्य या वागुच्यते सा इतरेषां देवानां सेवनीया स्यादित्युपपादनम्

६०४ 'यो अध्वरेषु' मर्त्ये प्रबुद्धोऽमर्त्योऽग्निः तस्य जागरितप्रज्ञायां देवान् निर्मातीत्यादिकम्

६०५ 'स हि क्रतुः' नित्ययोगिनो मर्त्याः प्रथममग्निमुपासत इत्यादिकम्

